

॥ तत्सद्ब्रह्मणे नमः ॥

॥ श्रीसंकर्षणप्रियानुजाय नमः ॥

श्रीभगवते वासुदेवाय नमः

अथ



# श्रीमद्भगवद्गीता

कर्मकाण्डाख्ये प्रथमषट्के

## * तृतीयोऽध्यायः *



ॐ सहनाववतु सहनौ भुनक्तु । सहवीर्य्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥
ॐ शान्तिः ! शान्तिः !! शान्तिः !!!




मतीन्द्रियमव्यक्तमक्षरं निर्गुणं विभुम् ।
ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम् ॥
स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम् ।
निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम् ।
स्थूलात्स्थूलतरं प्राप्तमतिसूक्ष्ममदर्शनम् ॥
स्थितं सर्वशरीरेषु साक्षीरूपमदृश्यकम् ।
शरीरवन्तं सगुणमशरीरं गुणोत्करम् ।
प्रकृतिः प्रकृतीशं च प्राकृतं प्रकृतेःपरम् ॥
सर्वेशं सर्वरूपं च सर्वान्तकरमव्ययम् ।
सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम् ॥

अहा ! वह देखो ! सामने एक बहुत बडा गम्भीर सागर लहरें लेताहुआ देखपडता है जिसमें एक नउका बहती चली जारही है और उस नउकापर एक कोई पथिक अपनी गठरी मोटरी लादे किसी कर्ण-धारसे पार उतारदेनेकी प्रार्थना कररहा है। चलो ! थोडा आगे बढकर देखो तो सही ! कैसी लीला है ?

आगे बढकर—सखे ! यह तो एक अद्भुतलीला दृष्टिमें आरही है। यह तो परम अपार महाभारतसंग्राम रूप गंभीर सागरके माझधार में गीता नामकी नउका बही जारही है, जिसपर अर्जुन नामका एक पथिक अपने शुभाशुभ कर्मोंकी गठरी मोटरी लादेहुए जगदभिराम घनश्यामरूप परम प्रवीण कर्णधारसे पार उतारदेनेकी प्रार्थना कररहा है। चलो ! शीघ्र चलो ! हमलोग भी इसी नउकापर चढ अर्जुनके साथ-साथ उसी सांवले कर्णधारसे प्रार्थना करतेहुए झट भवसागरके पार होजावें ॥

अर्जुन उवाच—

मू०— ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ! ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ! ॥१॥

+व्यामिश्रेणेव वाक्येन बुद्धिम्मोहयसीव मे ।
तदेकं वद ! निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥

पदच्छेदः— जनार्दन× ! ( हे जनानामभिलषितसिद्धिकर्त्ता महेश्वर ! ) चेत् ( यदि ) कर्म्मणः ( कर्मयोगापेक्षया ) बुद्धिः ( ज्ञानम् ) ज्यायसी ( प्रशस्ततरा ) ते ( तव ) मता ( मान्या ) तत् ( तर्हि ) केशव ! ( हे वासुदेव ! ) घोरे ( बन्धुवधाख्येहिंसात्मके क्रूरे ) कर्म्मणि ( क्रियायाम् ) माम् ( शोकग्रस्तार्जुनम् ) किम् ( कथम् ) नियोजयसि ( प्रवर्त्तयसि । प्रेरयसि ) व्यामिश्रेण ( क्वचित्कर्मप्रशंसा क्वचित् ज्ञानप्रशंसा इत्येवं सन्देहोत्पादकेन ) इव ( सदृश ) वाक्येन ( वचनेन ) मे ( मम ) बुद्धिम् ( अल्पमेधाम् ) मोहयसि ( भ्रान्त्या योजयसि ) इव । तत् ( तयोः ज्ञानकर्मणोः मध्ये ) एकम् ( एकार्थम् । मुख्यम् । निश्च-

---

+ किसी किसी गीता में व्यामिश्रेणैव ऐसा पाठ है। तहां अन्वय में इव के स्थानमें एव समझना चाहिये ॥

× इस जनार्दन शब्द की विविध प्रकारकी व्युत्पत्ति अ० १ श्लोक ३५ में देखो। इनमें केवल यहां एक व्युत्पत्ति होनी चाहिये वह यों है—"सर्वैर्जनैरर्द्यते याच्यते स्वाभिलषित सिद्धय इति जनार्दनः" ।

यात्मकम्) निश्चित्य (निर्णयंकृत्वा) वद! (कथय!) येन (निश्चयात्मकवाक्येन) अहम् (अर्जुनः) श्रेयः (परम कल्याण स्वरूपं मोक्षम्) आप्नुयाम् (प्राप्स्यामि) ॥ १, २ ॥

पदार्थः—(जनार्द्दन!) हे भक्तोंकी अभिलाषा पूर्त्तिकरनेवाले जनार्द्दन!(चेत्) यदि (कर्म्मणः) कर्मयोगसे (बुद्धिः( ज्ञानयोग श्रेष्ठ है ऐसा (ते मता) तुमसे माना जाता है (तत्) तब (केशव!) हे केशव! तुम (माम्) मुझ अल्पबुद्धिको (घोरे) ऐसे बन्धुओंकी हिंसारूप घोर (कर्म्मणि) कर्म्ममें (किम्) क्यों (नियोजयसि) प्रेरणा करते हो? अथवा यों अर्थ करलीजिये, कि जब कर्मयोगसे ज्ञानयोग श्रेष्ठ मानतेहो तो क्यो मुझको फिर कर्म्ममें प्रवृत्त होनेकी आज्ञा देते हो? ॥ १ ॥

भगवन्! ऐसे (व्यामिश्रेण इव) दो प्रकारके मिलेहुए वचनोंके समान (वाक्येन) वाक्योंसे तुम (मे बुद्धिम्) मेरी अल्पबुद्धिको (मोहयसीव) मोहित करनेवालेके समान क्यों मोहमें डालते हो? इसलिये (तत्) इन दोनोंमें जो श्रेष्ठ हो (एकम्) उसी एकको (निश्चित्य) निश्चयकरके (वद!) कहो! (येन) जिससे (अहम्) मैं (श्रेयः) परमकल्याणरूप मोक्षको (आप्नुयाम्) प्राप्त होऊं ॥ २ ॥

भावार्थः—दूसरे अध्यायमें योगेश्वर भगवान् श्री कृष्णचन्द्र आनन्दकन्दने अर्जुनके कल्याण निमित्त "सांख्ययोग" और "कर्म्मयोग" का उपदेश किया। अर्थात् "प्रजहाति यदा कामान्"

(अध्याय २ श्लोक ५५) से "एषा ब्राह्मीस्थितिः पार्थ ०० ०" (श्लोक ७२) तक "ज्ञाननिष्ठा"का उपदेश किया, पर इससे पहले उसी अध्यायके ४७ वें श्लोकमें "कर्म्मण्येवाधिकारस्ते" तथा ४८ वें में "योगस्थः कुरु कर्म्माणि" कहकर कर्म्मनिष्ठा का उपदेश करचुकेथे। इसी कारण इन दो प्रकारकी बातोंको सुन अर्जुनके चित्तमें व्याकुलता उत्पन्न होआयी। विचारने लगा, कि यह बात कैसी हुई ? ( मैं तो श्रीपतिको अपना परम हितकारी गुरु जानकर ऐसी आपत्तिके समय अपना परम श्रेय पूछ रहाहूं और उनसे यों कहचुका हूं कि "पृच्छामि त्वां धर्म्मसंमूढचेताः" हे भगवन्! मैं धर्म्म विषयमें मूढ हूं। इसलिये मैं तुमसे यह पूछताहूं कि "यच्छ्रेयस्यान्निश्चितं-ब्रूहि तन्मे ० ००" जो मेरेलिये कल्याणकारेक हो सो निश्चय कर उपदेश करो! ) पर बडे शोक की बात है, कि जनार्दनने ऐसा न किया।

ये वार्त्तायें तो मेरी उस प्रार्थनासे विपरीत देखपडती हैं। न जाने इनके गूढ-मर्म मेरी समझमें न आये वा ऐसे घोर समयमें केशव मेरी बुद्धिकी परीक्षा कररहा है। क्योंकि जिस "ज्ञाननिष्ठा"को मुक्तिका उपाय बतलाया है, मुझको तिस ज्ञान-निष्ठासे रोककर कर्म निष्ठाहीमें रहनेकी आज्ञा कीहै। जो कर्म इस एक जन्ममें मेरी मुक्ति का कारण नहीं होसकता। इससे बोध होता है, कि मुझको युद्धरूप घोर कर्ममें फंसाकर अनेक जन्मोंमें भटकनेकेलिये छोडदिया है। हा! मैं ऐसा मन्दभाग्य हूं।

ऐसे मनमें विचार, व्याकुल-चित्त होकर बोला, कि [ज्यायसी

चेत् कर्मणस्ते मता बुद्धिर्जनार्द्दन ! ] हे जनार्दन ! तुमको सम्पूर्ण ब्रह्माण्ड जनार्दन इसी कारण कहता है, कि "सर्वैर्जनैरर्ध्यते याच्यते स्वाभिलषित सिद्धय इति जनार्दनः" अपनी अभिलाषा की सिद्धि निमित्त जो सबोंसे याचा जावे वा जिससे सब प्राणी अपनी मनोकामनाकी सिद्धिकी प्रार्थना करें उसे कहिये जनार्दन । अथवा "जनं जननं तत्कारणमज्ञानं च स्वसाक्षात्कारेणार्दयति हिनस्तीति जनार्दनः !" जो जन्मको अथवा मातृगर्भमें जन्म लेनेका जो मुख्य कारण अविद्या तिसे नाश करदेवे, उसे कहिये जनार्दन । सो हे भगवन् ! ये सब गुण तो तुममें विद्यमान ही हैं फिर तुम "जनार्दन" कहलाकर इस समय मेरी बुद्धिको व्याकुल क्यों कररहे हो ? यदि तुम्हारी समझमें यही निश्चय है, कि कर्मसे ज्ञान श्रेष्ठ है तो फिर मैंने जो पहले तुमसे यही कहा था, कि इन "भीष्म द्रोण इत्यादि श्रेष्ठ पुरुषोंके वध करनेसे सन्न्यासी हो, भीख मांगकर खाना उत्तम है" इस मेरे वचनको तुमने न माना । [तत्किं कर्मणि घोरे मां नियोजयसि केशव ! ] तब क्यों अपने बन्धुओंकी हिंसा रूप महा घोर नरकावह कर्ममें मुझको नियुक्त करते हो ? ऐसा क्यों ? ऐसे कर्म से मुझको मुक्त क्यों नहीं करते ? तुमतो कर्मोंका निषेध करते हो ! फिर कहते हो, कि युद्ध कर ! ऐसा क्यों ? जब तुम ऐसी बात करोगे तो मुझ अज्ञानीका कहां ठिकाना लगेगा ? । माता यदि दूधमें विष मिलाकर बच्चेको पिलावे तो उसके बचनेकी क्या आशा कीजासकती है ? इसी प्रकार तुम्हारा उपदेश श्रवण कर मैं मानो मरा चलाजाता हूं। क्योंकि [व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे]

दो तत्त्वोंके मिश्रित वचनोंसे मेरी बुद्धिको तुम मोहमें डालरहे हो। यदि तुम्हारे विचारसे तुम्हारे वचन उचित हों तो हों, पर मैं मन्दमति हूं, मेरी समझमें कुछ नहीं आते । कभी तो तुम कहते हो, कि "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" (अ० २श्लो० ४५) वेद त्रिगुणात्मक कर्मोंके बतानेवाले हैं इसलिये तू इनको छोड निस्त्रैगुण्य होजा ! और निर्द्वन्द्व, नित्य सत्त्वस्थ होकर योग क्षेमकी परवाह न करके आत्मानन्दमें प्रवेश करजा । अप्रमत्त होकर अपनेमें स्थिर होजा ! ऐसा कहकर मुझको निवृत्तिमार्ग उपदेश करते हो। फिर कहते हो, कि "कर्मण्येवाधिकारस्ते ०००" (अध्या० २ श्लो० ४७) तथा "धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते" (अ० २ श्लो० ३१) अर्थात् कर्म ही में तेरा अधिकार है और क्षत्रियोंके लिये युद्धसे बढकर कोई दूसरा धर्म नहीं है । ऐसे कहकर प्रवृत्तिमार्ग में डुबाते हो । फिर कहते हो, कि "दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय !" (अ० २ श्लो० ४९) अर्थात् हे धनंजय बुद्धियोगसे कर्म अत्यन्त निकृष्ट है। इस वचनसे ज्ञाननिष्ठाकी अपेक्षा कर्मको निकृष्ट बतलाते हो । एवम् प्रकार हे भगवन ! एकही अधिकारीको प्रवृत्ति और निवृत्ति दोनोंका अधिकार कैसे होसकता है ? जैसे एक ही प्राणी को कोई कहे, बैठे भी रहो और चलो भी, तो ऐसा नहीं होसकता ।

हे भगवन ! आपहीके उपदेशसे मैं इतना तो अवश्य समझ गया हूं, कि जो देहाभिमानी है, उसको कर्मकी आवश्यकता है। क्योंकि उसे अपने देहका पालन, पोषण तथा अपने नाम, यश, प्रभुता, महत्व इत्यादिके प्रचार करनेकी लालसा बनी रहती है । इसलिये वह कर्मोंमें

फँसा रहता है। इसीके प्रतिकूल जिसका देहाभिमान नष्ट होगया है उसीको ज्ञानकी प्राप्ती होती है। इसलिये यहतो एक सीधी बात सभी समझ सकते हैं, कि कर्म और ज्ञानका अधिकारी एकही पुरुष नहीं होसकता।" हे गोविन्द! तब तुम मुझ एक मन्दमतिके प्रति क्यों ऐसे मिश्रित वचनोंको कहकर मेरी बुद्धिको मोहमें डालरहे हो? यदि ऐसे कहो, कि "मैं तुझसे "कर्म" और "ज्ञान" दोनोंको विकल्प मात्र कहताहूं" तो हे भगवन्! स्वजातीय वस्तुमें विकल्प होसकता है पर विजातीयमें नहीं। जैसे धातुओंके गलाते समय स्वर्णकार सोना, चांदी, तांबा इत्यादि भिन्न-भिन्न धातुओंको मिलानेमें विकल्प करसकता है, पर इन धातुओंमें किसी काष्ठ वा फल, फूल इत्यादिका विकल्प नहीं होसकता। इसीप्रकार ज्ञान और कर्म जो तुम्हारे ही कहने सेविजातीय देख पडते हैं इनमें विकल्प नहीं होसकता। दूसरी बात यह है, कि जब कर्मसे ज्ञान श्रेष्ठ है, तो ऐसा कौन मूर्ख होगा जो ऐसे ज्ञानरूप हीराको छोड कर्मरूप कांचका ग्रहण करेगा? यदि यह कहो, कि इन दोनोंके अधिकारी भिन्न-भिन्न रहे, तो ऐसे अल्प समय में, मुझ एक अर्जुनके प्रति दोनों के कहनेकी क्या आवश्यकता थी? इसलिये हे जनार्दन! मेरी बुद्धि इस समय शान्तिको न प्राप्त करके औरभी व्याकुल होगयी है।

प्रिय पाठको! सत्य है। इस समय अर्जुनकी दशा ऐसी होरहीहै जैसे "ग्रहग्रहीत पुनि वातवश-तेहि पुनि बीछी मार। ताहि पियाइये बारुणी कहहु कौन उपचार॥" (तुलसी) अर्थ—कोई पुरुष अपने किसी बुरे ग्रहसे ग्रसाहुआ दुःखी होरहा हो, तिसपर वातवश हो

अविरतदयिता ११।९९
अविरतरतं ११।१७
अविरल७।१९
अविषह्य२०।१०
अवेक्षिता ३।३०
अव्याकुल ९।६०
अव्याहत१२।७६
अशक्नुवन्१।९३
अशिथिल७।१६
अशेषतीर्थो १।१८
अश्रावि९।९८
असंपाद२।४७
असकल७।२६
असकृद्गृही१३।२८
असिन्यत१७।३८
असुर१९।२३
असृग्जनो१९।७८
अहितादन १६।७
अहितानभि१९।३९
अह्राय१२।७
आकम्प्राग्रै१८।३७
आकर्षते३।१९
आक्रुष्ट८।२९
आक्रम्याजे१८।१४
आक्रम्यका१८।९१
आगच्छतो१२।३४
आगताद्व्यव१३।४४
आगतानग१०।२०
आघ्राय८।१०
आच्छादिता ४।१९
आच्छाद्य४।९२
आच्छिद्य१९।१११
आजिघ्रति९।९४
आतन्वद्भि१८।७४
आताम्राभा१८।४२
आत्मनैव१४।९४
आत्मानमेव९।३२
आत्मोदयः२।३०
आदातु८।२७
आदिता१४।६९
आद्यकोल१४।४३
आधावन्तः१९।१७
आननेन१४।१८
आननै१०।३६
आनन्द८।३६
आननेनः८।२२
आपतन्त१९।२
आपदि१९।६०
आपस्कारा१८।४६
आबद्ध८।४९
आभजन्ति१४।९७
आमूलान्ता१८।२१
आमृशद्भि१०।२९
आमृष्टा८।६१
आयता१०।६९
आयस्त९।६
आयान्तीना१८।८०
आयान्त्या८।११
आयामवद्भिः१२।६९
आयासाद८।१
आरक्ष९।९
आरभन्ते२।७९
आरूढः८।९४
आर्द्रत्वा८।६७
आलप्याल२।४०
आलापैस्तु८।१२
आलोकया१२।९०
आलोक्य९।८४
आलोल९।३०
आवर्तिनः९।४
आवृता१०।९६
आसादित ४।३४
आसीना १।१९
आस्कन्दन् ८।१६
आस्तीर्ण ९।१७
आस्तृते १०।८९
आस्यदष्टे १८।३०
आस्माकी ८।९०
आहत १०।६४
आशु १०।६४
आश्लिष्ट ३।७२
आश्लेष २।१७
इतरानपि १३।१४
इतरेतर २०।२६
इतस्ततो ४।२७
इति कृत ११।३९
इति गदन्त ६।१३
इति गदित ७।९६
इति गन्तु ९।८२
इति चुक्षुभे १९। ११
इति चेदि २०।१७
इति जोष १६।१६
इति तत्तदा १९।९८

इति धौत ८।७१
इति नर २०।७६
इति निन्दि १९।३३ (प्रक्षिप्तः)
इति निश्चि ९।४३
इति पूर १६।७९
इति ब्रुव १।३१
इति भीष्म १५।४७
इति मद १०।९१
इति यस्य १६।७८
इति वदति सखीजने
निमील ७।४३
इति वदति सखीजनेऽ-
नुरागा ७।१३
इति वाच १९।३९
इति विश २।११८
इति संरम्भि २।६७
इतीरिते १७।१
इत्थं गिरः ९।१
इत्थं नारी ९।८७
इत्थं रथा १२।१
इत्थमत्र १४।५३
इत्यालिङ्गि १९।२४
इत्युदीरि १४।१७
इदमपास्य ६।११
इदमयुक्त ६।५६
इदमिद ७।५०
इन्द्रप्रस्थ २।६३
इभकुम्भ १३।१६
इषुवर्ष २०।१८
इष्टं कृत्वा १९।११९
इह मुहु ४।६०
ईदृशस्य १०।१७
उचित २०।३६
उच्चारणा ४।१८
उच्चैर्गता १२।४९
उच्चैर्महा ४।१८
उच्छिद्य ५।१२
उत्क्रान्ता १८।७३
उत्क्षिप्तकाण्ड ५।२२
उत्क्षिप्तगात्रः १२।५
उत्क्षिप्तमुच्छ्रित ४।२५
उत्क्षिप्तस्फुटि ८।१४
उत्क्षिप्योच्चैः १८।३८
उत्खाय ५।५९
उत्तरीय १०।४२
उत्ताल ३।८०
उत्तिष्ठ २।१०
उत्तीर्ण ५।६२
उत्तुङ्गा ८।३१
उत्थातु १३।९
उत्पित्सवो ३।७७
उत्प्लुत्यारा १८।५३
उत्सङ्गिता ३।७९
उत्सेध १२।५२
उदमज्जि ९।३०
उदयति ४।२०
उदयमुदित ११।१२
उदयशिखरि ११।४७
उदयाद्रि १३।६४
उदासिता १।३३
उदासिरे १७।३८
उदित ९।६९
उदितोरु ९।७७
उदीर्ण १।३२
उद्देतु २।८१
उद्धृत १२।६६
उदस्फुशा ५।९
उद्यन्नाद १८।९
उद्दीप्त ८।३७
उद्वोढु ८।४४
उद्धता १९।१०३
उद्धतैरिव १०।३२
उद्धतैर्निभृत १०।७६
उद्धृत्य ३।७५
उन्नमन १४।२८
उन्नम्र ५।६८
उन्निद्र ८।२८
उपकर्त्रा २।३७
उपकारकस्य १९।७ (प्रक्षिप्त)
उपकारपरः १६।२२
उपकारिण १९।६ (प्रक्षिप्त)
उपगूढ ९।३८
उपचितेषु ६।६३
उपजापः २।९९
उपजीवति ९।३२
उपताप्य ९।६५
उपनीय १३।५०
उपनेतु ९।७२
उपप्लुत १।३८
उपमान २०।५४
उपरिज ७।४९
उपवन ७२।७
उपसध्य ९।५

उपायमा २।८०
उपाहितै १७।५१
उपेत्य १७।२८
उपेयिवासि २।११४
उपेयुषो ३।३२
उपैतु १९।८७
उभय १६।४२
उभौ ३।८
उरगेन्द्र १३।५८
उरसा २०।२०
उल्मुकेन १९।८
उष्णोष्ण ५।४५
उरुमूल १०।६७
ऋजुता २०।९
ऋज्वी १२।१८
एक एव वसु १४।४०
एक एव सुसखैष १४।५२
एकत्र ४।२६
एकस्या ८।२
एकेषुणा १९।१०७
एतस्मि ४।५९
एष दाश १४।८१
ओजस्वि १२।३५
ओजोभाजा १८।७५
ओजो महौ १९।१६
ओमित्युक्त १।७५
ओपामासे १८।३५
कश्चिद्दूरा १८।४९
ककुद्मि २।२०
ककुभः २०।३७
ककुभां ९।४२
कटकानि १६।७७
कटुनापि १५।४०
कण्ठावसक्त ५।१८
कण्डूयतः ५।४६
कदलीप्र ९।४५
कनकभङ्ग ६।४७
कनकांगद १५।७
कपाट ३।१३
करकुड्म १५।१०
करजदश ११।३७
करदीकृत २।९
करप्रचेया २।८९
करयुग्म १३।३७
कररुद्ध ९।७५
करेणुः १९।३६
करोति १।३९
कलया ९।३७
कला दधानः ३।६०
कलासम १।५९
कश्चिच्छत्रा १८।६४
कश्चिन्मूर्छा १८।५८
कस्यचित्स १०।१०
कस्याश्चि ८।५६
काचित्कीर्णा १५।९६
कान्तया १०।७३
कान्ताजने ६।७७
कान्तानां ८।२३
कान्तेन्दुका ३।४४
कापिशायन १०।४
कामिनः १०।६१
कामिना १०।५७
कालीयक १२।१४
काले मित ०।२ (कविवंशवर्णने)
किं क्रमिष्य १४।७५
किं तावत् ८।२९
कि नु चित्र १४।३५
किं विधेय १४।११
किमलम्ब ९।२०
किमहो १५।६३
किमिवाखिल १६।३१
किमिवात्र १५।२१ (प्रक्षिप्तः)
किलराव १५।२१ (प्रक्षिप्तः)
किसलय ७ । ३९
कीर्ण शनै ५।३५
कीर्णा रेजे १८।७९
कुटजानि ६।७३
कुतूहले ३।४१
कुन्तेनोच्चैः १८।२३
कुपिताकृति १५।५२
कुपितेषु १५।५५
कुमुदवन ११।६४
कुर्वञ्ज्योत्स्ना १८।४४
कुर्वता १०।३०
कुर्वद्भि ८।३८
कुर्वन्त ६।७९
कुर्वाणानां १८।८
कुशलं १६।४१
कुशेशयै ४।३३
कुसुमकार्मु ६।१६
कुसुमयन् ६।६२
कुसुमादपि ९।६७

कृतःप्रजा १।२८
कृतकृतक ७।४०
कृतकेश २०।४३
कृतगुरु ११।३८
कृतगोप १६।८
कृतदाह २०।७९
कृतधव ११।१४
कृतभय ७।३७
कृतमण्डल २०।४८
कृतमद ६।५०
कृतसनि १९।८
कृतसकल ११।६७
कृतस्य १९।१४
कृतापचारो २।८४
कृतास्पदा ३।३४
कृतोरु १९।३२
कृत्तैः १९।८१
कृत्वा कृत्य २।१११
कृत्वा पुव ४।२३
कृत्वाशिनेः १९।७
केनचित्स्वामि १९।४८
केनचिन्मधु १०।९४
केवल १४।६६
केशप्रचु १९।२२
कोपवत्य १०।३९
कोशातकी १२।३७
कौबेर ३।१
क्रमते १५।२० ( प्रक्षिप्तः )
क्रव्यात्पूगैः ७८।१८
क्रान्तं रुचा ४।३
क्रान्तकान्त १०।३
क्रामतो १४।७७
क्रामन्दन्तौ १८।४३
क्रियते १६।४६
क्रुध्यन् १८।३७
क्रूरारि १९ १०४
क्वचिज्जला ४।९
क्वचिल्लस १७।९६
क्षणमतु ११।६५
क्षणमय ११।४८
क्षणमात्र १५।९१
क्षणमाश्लि १९।६
क्षणमीक्षि १५।७१
क्षणमेष १५।१३( प्रक्षिप्तः )
क्षणशयित ११।६
क्षणेन च १७।४९
क्षितितट ११।७
क्षितिपीठ १९।१७(प्रक्षिप्त )
क्षितिप्रति ३।५२
क्षिप्र पुरो ९।५०
क्षीधता १०।३४
क्षुण्णं ६।९९
क्षुभितस्य १६।९१
क्षोभयन्ति १४।५६
खचरैः २०।६९
गच्छतापि १४।७६
गच्छन्ती ८।७
गजकदम्ब ६।२६
गजपति ६।५५
गजव्रजा १७।६५
गण्डभित्ति १०।३१
गण्डूष ९।३६
गण्डोज्ज्वला १२।८
गत तिर १।२
गतधृति ७।१०
गतमनु ११।१०
गतया निरन्तर १३।११
गतया पुरः ९।२
गतयोर १३।२९
गतव्रता ६।७८
गतवत्य ९।८
गतस्पृहो १।३०
गते मुख १७।६७
गत्यून ५।५३
गत्वा नून १८।६३
गत्वोद्रेक ७।७४
गभीरता १७।२९
गरीयसः १७।५४
गवलासित २०।१२
गाम्भीर्य ८।२६
गुणवन्त १५।१० (प्रक्षिप्त )
गुणाना २।५६
गुरवोऽपि २०।३४
गुरुकोप १५।५६
गुरुतर ७।१८
गुरुताप २०।६३
गुरुद्वया २।६
गुरुनिःश्व १५।६२
गुरुनिबिड ७।६
गुरुभिः १६।४९
गुरुवेग २०।३०
गुर्वीरज ४।२
गृहमागता १५।६८

गोपानसी ३।४९
गोष्ठेषु १२।३८
ग्रन्थिमुद्र १०।६६
ग्राम्यभाव १४।६४
ग्लानिच्छेदि १८।७७
घनजाल १६।१०
घण्टानादो १८।१०
घनपत्र १६।७४
घनसंतम २०।४०
घूर्णयन् २।१६
चक्रुरेव १०।६६
चतुरम्बु २०।६६
चतुर्थो २।९४
चयस्त्विषा १।२
चरणेन १९।९४
चलतैप १९।२२ (प्रक्षिप्तः)
चलांगुली १७।३७
चलितं ततो १९।६९
चलितानक १६।१३
चलितोद्धत २०।६१
चलितोर्ध्वे १६।६७
चारुता १०।३३
चिक्रसया ३।९१
चित्र चापै १९।७९
चित्राभि ३।४
चिरमति ११।६०
चिररति ११।१३
चिरादपि २।१०९
छन्नेष्वपि ३।९६
छलयन् १९।२९
छादितः १०।१९
छायां निज ४।६
छायामपा ९।१४
छायाविधा ९।२१
जगति नैश ६।४३
जगति श्रिया १९।२७
जगत्पवि ३।२
जगत्यप १।२७
जगदंत १९।७३
जगद्वशी ६।६९
जगाद २।२१
जघन ७।२०
जजौ जोजा १९।३
जज्ञे जनै ९।४९
जडीकृत १७।३३
जनतां १६।६
जनिताश २०।७
जलद् ६।३१
जाज्वल्य २।३
जातप्रीति ६।७६
जितरोष १६।७२
जेतुं जैत्राः १८।२४
ज्वलतः २०।७०
ज्वलदम्बर २०।६२
ज्वलितानल २०।६४
तं जगाद १४।१
त वदन्त १४।१२
तं श्रिया १९।८८
त स द्विपे ९।२
तडिद्गु २०।१३
ततः सप २।१४
ततस्तत १९।२६
तत्पूर्वमस १२।७२
तत्प्रणीत १४।३८
तत्र नित्य १४।३०
तत्र बाणा १९।९२
तत्र मन्त्र १४।२६
तत्सुराङ्गि १४।१४
तथापि २।७१
तदय १६।९३
तदयुक्त ९।८०
तदलक्ष्य १३।६२
तदवितथ ११।२३
तदिन्द्र १।४१
तदीय १।६४
तदीशिता २।९९
तदुपेत्य ९।६०
तदेनमु १।७३
तनुभि १३।२९
तनुरुहा ६।४९
तन्त्रावाप २।८८
तन्वा पुसो १८।५०
तपनीय २०।६८
तपेन १।६६
तमकुण्ठ २०।२३
तमङ्गदे ३।६०
तमध्य १।१४
तमागत ३।७८
तव कितव ७।९४
तव धन्य १९।३०
तव धर्म १९।१७
तव सपदि ७।७
तव सा ९।६४

तस्थे १२।३०
तस्य मित्रा २।१०१
तस्य सांख्य १४।१९
तस्यातसी ३।१७
तस्याभव०।२ ( कविवंश- वर्णने )
तस्यावदा १९।१९
तस्योल्ल ३।९
ताः पूर्वं ८।१७
तात नोद १४।८३
तामीक्ष ३।६४
तिरस्कृत १।६२
तिष्ठन्त ८।२१
तीक्ष्णा २।१०९
तीर्त्वा १२।७४
तुङ्गत्व २।४८
तुरगशता ३।८२
तुलयति ६।४
तुल्ये २।४९
तुहिनांशु १६।६४
तूर्णं प्रणे १२।२९
तूर्णं याव १८।२९
तूर्यारावै १८।९४
तृणवाञ्छ १३।९६
तृप्तियोगः २।३१
तेजःक्षमा २।८३
तेजस्वि २।९१
तेजोनिरो ९।१०
तेनाम्भसां ३।९
तैर्जैय १२।२९
तोषमेति १४।३

त्यक्तप्राण १८।६१
त्यजति ६।१८
त्रस्त. समस्त ५।७
त्रस्तौ समा १२।२४
त्रस्यन्ती ८।२४
त्रासाकुलः ५।२६
त्वक्सार ४।६१
त्वमशक्नु १५।३१
त्वया विप्र २।३८
त्वयि पूज १५।३३
त्वयि भक्ति १६।४५
त्वयि भौम २।३९
त्वरमाण १९।७२
त्वष्टुः सदा ३।३९
दक्षिणीय १४।३३
दत्तमात्त १०।२३
दत्तमिष्ट १०।६
ददतम ६।४१
ददृशे ९।२३
दधतः शशा १९।८०
दधतस्तनि २०।४४
दधति च ४।५०
दधति परि ११।५०
दधति सुम ७।२
दधति स्फुट ९।६६
दधतोऽपि १९।७३
दधतो भया १९।७५
दधतोऽसुल १६।६५
दधत्युरो ९।८६
दधत्सध्या २।१८
दधदसक ११।१५
दधद्भिरभि ४।६६

दधानमम्भो १।५
दधानैर्धन १९।११
दधुरम्बुधि २०।५६
दधौ चल १७।१७
दन्ताग्र १२।४७
दन्ताना ८।५५
दन्तालिका ९।५६
दन्तैश्छिच्छि १९।९५
दन्तोज्ज्वला ४।४१
दमघोष १६।१
दयितायमान ९।५७
दयिताय सासव १५।८१
दयिताहृत ९।७०
दयितैरिव २०।२४
दर्पण ४।६७
दर्शना १४।४९
दलितकोम ६।२३
दलितमौक्ति ६।३५
दाददो १९।११४
दान दद ९।३७
दारी दर १९।१०६
दिङ्मुख १९।९९
दिदृक्ष ३।३१
दिवमिच्छ १९।३१
दिवस भ्रशो ९।३४
दिवसोऽनु ९।१७
दिव्यकेसरि १४।७३
दिव्याना ८।६४
दिशमर्क १९।६
दिशामधी १।४४
दीपित १०।४७

दीप्तिनि १४।७४
दुःखेन ९।९१
दुरक्षि १७।१०
दुरुद्वहाः १७।२२
दुर्दान्त १२।२२
दूरादेव १९।१७
दूरोत्क्षिप्त १८।४९
दृष्टोऽदि ४।१७
दृष्टैव ५।१८
द्योतितान्तः २।७
द्राघीयासः १८।२३
द्रुततर ११।८
द्रुतद्रव १७।६०
द्रुतपद ७।१२
द्रुतमध्य १३।९
द्रुतशात ९।९
द्रुतसमी ६।२८
द्रुतहेम २०।९३
द्विधा त्रिधा १९।१७
द्विरददन्त ६।३४
द्विषद्विशस १९।९३
धन्योऽसि १४।८७
धरणी १३।२९
धरस्योद्ध ९।६९
धूतधौता १९।३०
धूमाकारम् ४।२०
धूर्मेद्ध १२।३६
धृततुषा ६।६०
धृतप्रत्य १९।३७
धृतवान्न १९।२६
धैर्यमुल्बण १०।६८
ध्येयमेक १४।६०
ध्रियते २।३९
ध्रियमाण १९।२९
ध्रुवमागताः ९।४९
ध्वजांशु १७।४९
ध्वजाग्र ३।३३
ध्वनतो २०।२१
ध्वनयन्स १९।१३
न केवल जनै १९।९७
न केवल यः ३।१९
नखपद ११।२९
नखरुचि ७।४
न खलुदूर ६।१९
न खलु वय ७।९३
नखांशु १९।१२
न च त तदे १९।४१
न च मेऽत्र ९।९६
न च सुतनु ७।८
न चिकीर्ष १६।६८
न तदङ्ग १६।६०
न तस्थौ १९।३८
न दूये २।११
न नीतम ३।२०
ननु सदि ९।६१
ननु सर्वे १९।१ (प्रक्षिप्तः)
नभोनदी १७।६९
न मनोरमा ९।९०
न ममौ १३।१०
न महानय १९।२ (प्रक्षिप्तः)
न मुमोच ११।६९
नयति १६।७२
न याव १।१९
नरक १६।३२
नरसिंह ११।९८ (प्रक्षिप्तः)
न लङ्घ्या ३।३८
नलिनांति १३।४३
नलिनी १३।९९
नवकदम्ब ६।३२
नवकनक ११।४३
नवकुङ्कु ९।७
नवकुमुद ११।२२
नवगध १३।४९
नवचन्द्रि ९।२८
नवनख ११।३४
नवनग ४।६९
नवपयः ६।३६
नवपलाश ६।२
नवहाटके १३।६२
नवानघो १।४
न विदध्यु १६।९९
न विभावय ९।८१
न स्म माति १०।९०
नन शून्यता १७।४०
नस्या गृही १२।१०
नाञ्जसां १४।२३
नात्तगन्ध १४।८४
नादातु ९।३३
नानवास १४।४९
नानाजाव १९।४०
नावाविवा १२।११
नापचार १४।३२
नाभिह्नदैः ९।२९

नामाक्षरा १९।११०
नारीभि ८।४७
नालम्बते २।८६
निःशेष १२।३६
निःश्वास ४।१
निखिला २३।६९
निजपाणि ९।५२
निजरजः ६।३७
निजसौरभ १३।४९
निजौजसो १।३७
नित्याया ८।१९
निदर्विरे ६।२४
निदाय १।२४
निध्वन १९।३४
निपपात ९।७१
निपातित १९।७९
निपीडना १९।८७
निपीड्य १९।१८
निम्नानि १२।३१
निम्नेष्वोधी १८।६९
नियुज्ज १९।९१
निरन्तर १७।३०
निरन्तराले ३।६७
निराकृते १७।२०
निरायता १७।९
निरीक्षितु १७।६२
निरुद्धवीव २।६४
निरुध्यमाना ३।२९
निर्गुणा १४।४३
निर्जिता १४।१९
निर्धूत ५।४७
निर्वैति ८।५१
निलयः ९।१६
निलयेषु १३।५४
निवर्त्य १।११
निवेशया १।३४
निशमय्य १६।३८
निशम्य ताः २।६८
निशा:त १।६१
निशितासि १९।६७
निषेव्य ३।६२
निष्प्रहन्तु १४।८२
निसर्गचित्रो १।७
निसर्गरक्तै ३।७
निहतोन्मद १६।५९
नीतिरापदि २।६१
नीते पलाशि १२।९९
नीते भेद १८।२०
नीरन्ध्र ८।२
नीलेना १९।८४
नीहार ५।११
नृपता १९।४४
नेच्छन्ती ८।२०
नैक्षता १४।४९
नैतल्लघ्व २।२३
नैरतर्य १८।७६
नोच्चैर्यदा ५।४४
नोज्झितु ६।६८
पटलमम्बु ६।२९
पतता २०।५९
पतत्पत १।१२
पंतिते ९।१८
पाति: पत्ति १८।२
पथान ५।२४
पद्मभूरि १४।६१
पद्माकारै १८।७२
पद्मैरन १२।६१
पयसि ११।४९
पयोमुचा १७।४६
परस्पर परि ११।८
परस्परस्पर्धि ३।१८
परस्य मर्मा १।६२
परानमी १७।१९
परिणत ११।४९
परितः प्रमि १६।८०
परितः प्रस २०।७२
परितप्यत १६।२३
परितश्च १५।७८
पारितोष १६।२८
परिपाटला १३।४२
परिपाति १६।५४
परिमथ ९।७८
परिमोहि १९।७६
परिवेष्टि २०।४९
परिसिथि ११।११
परेत १।५७
पर्यच्छे ८।४६
पल्लवोप १०।५३
पवनात्म १३।२२
पश्चात्कृता १९।९३
पश्यन्कृता १२।३९
पाणिरोध १०।६९
पादाहतं २।४६

प.दैः पुरः १२।२१
पानधौत १०।२६
पारे जलं ३।७०
पाश्चात्य ४।२२
पिदधान ९।७६
पिशङ्ग ११६
पीडिते १०।४६
पीतवत्य १०।९
पीतशीधु १०।११
पीत्वा ३।७३
पुरःप्रयु १९।४७
पुर एव १९।२
पुरस्कृत्य १९।६३
पुराणि १।४९
पुरा शर १७।९९
पुरीमव १।५१
पूर्वमङ्ग १४।१०
पूर्वमेव १४।६७
पृथिवीं १५।२९
पृथुदर्वि २०।४२
पृथुवारि २०।४७
पृथोरध्य १९।९
पौनःपुन्या १८।५७
प्रकट मृदु १६।१९
प्रकटतर ११।३२
प्रकटमलि ११।३०
प्रकटान्यपि १६।३०
प्रकुप्यतः १६।६
प्रक्रान्तं प्रति २०।३९
प्रक्रतजप ११।४२
प्रचल २०।९८
प्रचोदिताः १७।३५
प्रजा इव ३।६९
प्रजापति १७।७
प्रज्ञोत्साहा २।७६
प्रणतः १६।४
प्रणयकोप ६।३८
प्रणयप्रका ९।५९
प्रतनूलसि १६।६१
प्रतिकामि ९।३५
प्रतिकुक्षि २०।१९
प्रतिकूल ९।६
प्रतिक्षण १७।१६
प्रतिनाद १३।२७
प्रतिघः १९।५३
प्रतिपक्ष १६।५७
प्रतिपत्तु १५।२२
प्रतिफलति ११।५८
प्रतिभिद्य ९।५८
प्रतिमण्ड १९।८९
प्रतिवाच १६।२५
प्रतिशरण ११।४१
प्रत्यंस ८।६८
प्रत्यन्यदन्ति ५।४१
प्रत्यन्यनागं १२।१२
प्रत्यावृत्तं १८।५५
प्रत्यासन्ने १८।२८
थमं कला ९।२९
प्रथम शरीर १५।१२
प्रथममलघु ७।६९
प्रतिनाद १३।२७
प्रफुल्ल १।२२
प्रभ्रष्टैः ८।४९
प्रमुखेऽभि २०।२५
प्रयतः २०।७३
प्रलयं परस्य १५।१६
( प्रक्षिप्तः )
प्रलयमखिल ११।६६
प्रवसतः ६।३०
प्रविकसति ११।६३
प्रविदारि १९।४९
प्रविवत्सतः १५।८६
प्रवृत्त एव १।४०
प्रवृत्ते १९।४६
प्रवृद्ध ३।२१
प्रसकल ७।३४
प्रसाधित ३।१२
प्रसारिणी १७।४४
प्रसूतं २०।५१
प्रस्वेद ५।२३
प्रहरक ११।४
प्रहितः १६।५२
प्रह्वानतीव १२।५६
प्राग्भागतः ४।४९
प्राणच्छिदा ३।१४
प्रातिभं १०।१२
प्रापे रूपी १९।९४
प्राप्य नाभि १०।६०
प्राप्य भीम १९।१३
प्राप्यतां २।६६
प्राप्यते १०।७८
प्राप्यमम्भ १०।८०
प्रायेण १२।४६

प्रालेय ४।६४
प्राशुप्राशु १४।३१
प्रासाद १२।६३
प्रियंकर ७।७९
प्रियतमेन ६।५७
प्रियमभि ७।३२
प्रियमिति ७।११
प्रियसखी ६।८
प्रीतिरस्य १४।४१
प्रीत्या १२।४०
प्रीत्यै ४।६२
प्रेक्षणीय १०।८२
प्रेम तस्य १४।४७
प्रेम्णोरः ८।४०
प्रोथैः १२।७३
प्रोल्लस ३।१९
प्लुतमित्र ११।५३
प्लुतेभ १९।११५
फलद्भि ४।१६
फेनाना ८।५९
बद्धदर्भे १४।२२
बन्धौ १९।८०
बभ्रूहिरे १७।३१
बलावले १।७२
बलोर्मि ३।६९
बहिरपि ११।५९
बहु जगद ११।३९
बहुलांजन २०।५०
बह्वपि प्रिय १४।४
बह्वपि स्वेच्छ २।७३
बाणाक्षिप्ता १८।५६
बाणाहत ३।६१
बाणाहि १९। ३९
बाहुपीडन १०।७२
बिभ्रतौ १०।८
बिभ्राणमाय ५।६९
बिभ्राणया ५।१३
बिम्बित १०।५
बिम्बोष्ठ ४।३८
बुद्धिशस्त्रः २।८२
बृहच्छिला १।५४
बृहत्तुलै ३।५०
बृहत्सहायः २।१००
ब्रुवते ९।६२
भक्तिमन्त १४।६३
भग्नद्रुमा १२।४९
भग्नेऽपीभे १८।३९
भग्नैर्दण्डै १८।६७
भग्नो निवा ४।६३
भजते ९।४८
भवति २०।२९
भवद्गिरा २।८
भवनोदरे ९।३९
भवन्मया १९।४
भातु नाम १०।८६
भारती २।६९
भास्वत्कर ९।३
भित्त्वा १८।२२
भिन्नानश्वै १८।६६
भिन्नेषु ४।४६
भिन्नोरस्कौ १८।६९
भीमता १०।५४
भीमास्त्र १९।११२
भीष्मोक्तं १४।८८
भूभृद्भि १२।२३
भूयासः १६।८२
भूरिभि १९।६६
भृङ्गश्रेणी १८।४१
भूतभूति १६।७१
भृशमङ्ग १५।८२
भृशमदु ६।५८
भृशस्विदः १७।६८
भेरीभि १२।२७
भ्रश्यद्भि ८।६०
भ्रेजुर्भ्रष्टा १८।६८
मखविघ्ना २।१०२
मत्कुणाविव १४।६८
मदनरस ७।२३
मदमदन ११।३६
मदरुचि ११।१६
मदाम्भसा १७।६८
मद्यमन्द १०।१७
मधुकर ४।४८
मधुकरै ६।९
मधुमथ ७।२५
मधुर वहु १६।१७
मधुरया ६।२०
मधुरैरपि २०।१७
मधुरोन्नत ९।७९
मध्ये समुद्र ३।३३
मनस्विना १७।४२
मनागन २।४३
मनोहरैः १७।२६

मन्त्रो योध २ । २९
मन्द्रैर्गजा १२।१९
मन्यसे २। १०६
मम तात्र २।१२
मम रूप ९।६३
ममौ पुर १७।४७
मरकत ४।५६
मर्त्यमात्र १४।५९
मर्त्यलोक १३।६९
मलिन १६।६२
महत. कुकु १६।७९
महतः प्रण २०।३८
महतस्तर १६।३९
महात्मानो २।१०४
महामहा १।१६
महीयसा १७।५७
मासव्यधो १९।११२
मा जीव २।४९
मातगाना १८।३४
मानभग १०।२९
मा पन १०।२१
मा वेदि २।९६
मिश्रीभूते १८।१८
मुकुटांशु १३।९
मुक्त मुक्ता ४।४४
मुक्तानेक १९।१०१
मुक्ताभिः ८।९
मुक्तामय ३।१०
मुक्तास्तृणा ९।६१
मुखकंदरा १९।२७ (प्रक्षिप्तः)
मुखकमल ७।४४
मुखमीक्षितुं १३।२६
मुखमुल्लसि २०।१
मुखसरोज ६।४८
मुग्धत्वा ८।२२
मुग्धायाः ८।१३
मुचुकुन्द १९।२४
मुदमब्द ६।७२
मुदितमधु ७।३७
मुदितयुव ११।१७
मुदितैस्तदे १३।२४
मुदे मुरारे ४।१०
मुहु. प्रति १७।२१
मुहुरसु ७।१७
मुहुरिति ७।६८
मुहुरूप ७।५९
मृगविद्वि १९।३४
मृग्यमाणा १४।३९
मृणालसू ३।३
मूर्तिपिंड ९।६३
मृदुचरण ७।४८
मृदुव्यव २।८५
मृष्टचन्दन १०।८४
मेदस्विनः ९।६४
मैत्र्यादि ४।५५
म्रदीयसी २।७४
य लघु १४।४३
य समे १४।८५
यः कोलता १४।८६
य इम १९।९ (प्रक्षिप्तः)
य इहात्म २।११६
यच्छाल ३।४०
यजतां २।६९
यतः परा ४।११
यतः स ३।२५
यत्नाद्रक्ष १८।३१
यत्प्रिय १९।५१
यत्राधिरूढे ४।१३
यत्रोज्झिता ४।१९
यथा यथा १७।४३
यदङ्गना ३।४२
यदनर्गल १६।३७
यदपूपुज १९।१४
यदपूरि १६।३६
यदयुध्य १५।३२ (प्रक्षिप्तः)
यदराजि १९।१९
यदि नाङ्ग १५।३६
यदि वार्च १९।१८
यदि मयि ७।१४
यदुत्पत १७।९
यदुदस्य १९।२८ (प्रक्षिप्तः)
यदुभर्तु १३।२
यदुवाच १९।३४ (प्रक्षिप्तः)
यदेतदस्या ४।३९
यद्यदेव १०।७९
यद्वासुदेवे २।२२
यमुनामती १३।१
यस्तवेह १४।१६
यस्य किंचि १४।७८
यस्यामजिह्मा ३।५७
यस्यामति ३।४६
यस्यामहा १२।६८
यस्याश्चल ३।२७

या चन्द्रकै ९।४०
या यां प्रियः ३।१६
या कथचन १०।१८
या वर्मभानो १२।६७
यातव्य २।९२
यातैश्चातु १८।११
या न ययौ ४।४९
यानाज्जनः ५।१७
यान्तीना ८।२
यान्तोऽस्पृश १२।१७
या वमार १९।१९
या विभर्ति ४।५७
यामूढवा १६।८१
यावचक्रे १८।२६
यावत्स ९।२४
यावदर्थ २।१२
यावद्वयमा १२।५८
यावन्न १९।५७
यियक्षमा २।१
यियासत ३।२४
यियासता १७।४१
युगपद्युग ११।६१
युगपद्विकास ९।४१
युगान्तकाल १।२३
युद्धमित्थ १९।८२
युधै परै. १७।२४
यूनि राग १०।४०
ये चान्ये २।९८
येनाङ्ग १९।७४
ये पक्षिणः ९।३१
योग्यस्य ८।३३
यो बाह्यः ८।५८
योषितः १०।८९
योषितामति १०।९०
रक्तस्रुति १९।६४
रक्षितार १४।५१
रजनी ९।३३
रणद्भि १।१०
रणसमदो १९।७७
रणाङ्गण १९।६९
रणे रभस १९।९६
रणेषु १।५६
रतान्तरे ३।५५
रतिपति ६।७
रतिरभस ११।२
रतौ ह्रिया ३।४९
रत्नस्तम्भे २।४
रन्तु क्षतो १२।५९
रथचरण ७।२८
रथमास्थि १३।१९
रथवाजि १३।१७
रथाङ्गपाणेः १।२१
रथाङ्गभर्त्रे ३।३६
रथ्याघोषै १८।३
रभसप्रवृत्त १३।३
रभसादुद १५।५९
रभसेन १३।३२
रम्या इति ३।५३
रयेण १९।६५
रराज ३।२२
रवितुरग ६।२२
रहित १५।२ ( प्रक्षिप्तः )
रागान्वी ८।३९
राजराजी १९।१०२
राजीव ४।९
रामेण १८।७०
रामे रिपुः १९।९
राहुस्त्री २०।७८
रुग्णोरु १२।६०
रुचिधाम्नि ९।१३
रुचिरचित्र ४।३२
रुरुदिषा ६।१७
रूपमप्र १०।३७
रेचित १०।५९
रेजे जनैः ५।५७
रेणुका १४।८०
रोचिष्णु ९।२०
रोदोरन्ध्र १८।१९
रोषावेशादाभि १८।१२
रोषावेशाद्गच्छ १८।४
लक्ष्मीभृतो ३।७१
लघुललित ७।१९
लघू करि १।३६
लज्जते १४।२
लब्धसौर १०।२४
लब्धस्पर्शा १८।४७
लयनेषु १३।५२
लवङ्ग ३।८१
लिलङ्घ २।५८
लीलयैव १०।३८
लीलाचल १२।४४
लुलित ११।२०
लूनग्रीवा १८।५९
लोकालोक १६।८३

लोकालोकी १९।९८
लोलहेति १४।२९
लोलासि १९।२८
लोलैररित्रै १२।७१
वक्षोम्यो ८।९७
वचनै १६।२७
वणिक्पथे ३।३८
वदन ६।१४
वनस्पति ४।३९
वन्येभ १२।२८
वपुरन्व ९।५१
वपुरम्बु ६।७१
वपुषा १३।८
वररो १९।१००
वर्जयन्त्या ४।४२
वर्णैःकृति २।७२
वर्ध्रावद्धा १८।९
वर्ष्म १२।६४
वलयार्पि १३।४४
वशिन १३।२२
वसुधान्त ९।२९
वहति. यः ४।२१
वाजिनः १९।६२
वारणागग १९।४४
वारणार्थ १०।७०
वारिधेरिव १४।७३
वरिपूर्व १४।३४
वासांसि ८।६६
वाहनाज १९।३३
विकचकमल ११।१९
विकचोत्पल १६।१२
विकसत्कला १३।२१
विक्रीय ३।७६
विगततिमि ११।२६
विगतराग ६।३९
विगतवारि ६।९१
विगतसस्य ६।४९
विचिन्तय १७।११
विच्छितिर्नव १६।८४
विजनमिति ७।९१
विजयस्वायि २।५८
विजितक्लुध १६।१९
विततपृथु ११।४३
विततवलि ७।३३
विदग्ध १।६०
विदतुर्ये १९।६९
विदल १९।७७
विदलित १२।७७
विदित १९।९०
विदुरेष्य १६।४०
विद्रुपीत्र १९।९४
विद्वद्भि ४।३७
विद्विषो १९।८९
विधातु १९।१०९
विधाय तस्या ११।१७
विधाय वैर २।४२
विधूते ९।५३
विनयति ७।९७
विनिवारि २०।१६
विनिहत्य १६।८९
विनोद १।४८
विपक्ष २।३४
विपुलक ७।७०
विपुलतर ११।५
विपुलाचल १९।८४
विपुलाल ११।९७
विपुलेन निपीड्य १६।१
विपुलेन सागर १३।४०
विभावी १९।८६
विभिन्नवर्णा ४।१४
विभिन्नशखः १।५९
विरलातप ९।३
विराद्ध २।४१
विरोधिनां ३।१८
विरोधि २।२९
विलम्बित १७।१२
विलम्बि ४।८
विलसित ७।४६
विलुलित ११।२८
विलुलितामनि ६।९२
विलुलितालक ६।३
विलोकनेनैव १।२९
विवक्षिता २।१९
विवर्तय १७।१२
विविनक्ति १६।३९
विवृतोरु १५।९७
विशदप्रभा ९।२६
विशदाश्म १३।९३
विशिखान्त १९।७०
विशेष २।७९
विश्रमार्थ १०।८८
विश्वद्रीची १८।२९
विषगिणि १७।६२
विषङ्गिभि १७।९३

विपता ९।६८
विगमं ९।४१
विसृजन्त्य १६।३२
विस्तीर्ण १९।४३
विहंगराजा १।७
विहगाः ४। ३६
विहन्तुं १९।४९
विहन्त्वने १५।२९ (प्रक्षिप्तः)
विहित मया १९।४६
विहतागसो १५।४२
विहिताञ्जलि ९।१४
विहिताद्भुत २०।२२
विहिताप१६।९
वीतविघ्न१४।८
वीर्योत्साह १८।१६
वृत्ते युद्धे १८।६०
व्यक्तं वली १२।६९
व्यक्तासीद् १९।१०९
व्यगमन् २०।७४
व्यचलन् १३।३४
व्यतनो १३।३३
व्यवहार २०।४१
व्यवहित ७।३९
व्यसरन् ९।१९
व्याप्त लोके १८।४०
व्यावृत्त १२।२०
व्यासेद्धु १२।४३
व्योमस्पृशः ४।३१
व्रजतः १९।८७
व्रजति विषय ११।२५
व्रजति स्त्र १५।५ (प्रक्षिप्तः)
व्रजतोऽपि १३।६
गणभृता ६।५९
व्रततिनितति ७।४५
शकट १९।३७
शल्यान्य १०।३५
शठनाक १९।८८
शतशः २०।३१
शनकै १३।२०
शनैरनी ३।६८
शब्दिता १४।२०
शमितताप ६।३३
शरक्षतं १९।७०
शरदीव २०।२७
शर्वरी १९।९६
शस्त्रव्रण १९।५२
शाखिने १४।१९
शिखरोन्नत २०।२२
शिखिपिच्छ २०।४६
शितचक्र २०।२
शितशल्य २०।१४
शितितार १५।४८
शिरसि १३।१२
शिरोरुहे।१७।५८
शिशिरकिरण ११।२१
शिशिरमास ६।६५
शिशुरेव १५।३१ (प्रक्षिप्तः)
शीतार्त ८।६२
शुकाङ्ग ३।४८
शुक्लांशु ५।५२
शुक्लैः स १२।४
शुद्धम १४।३७
शुभ्राः १८।१३
शुद्धि २०।७७
शूरः १९।१०८
शृङ्गाणि ८।३०
शैलानि १२।५१
शैलोरु ९।८
शोचित्वा १८।५२
शौरिः १२।२३
श्च्योतन्द्भिः ८।३३
श्च्योतन्मदा १२।४८
श्मश्रु १२।२९
श्यामाङ्गी १२।७
श्रियः पतिः १।१
श्रिया जुष्ट २०।७९
श्रीमद्भि ८।८
श्रीशब्द २०।? ( कवि नामाङ्के )
श्रुतिपथ ७।२४
श्रुतिसम ११।१
श्रोतमार्ग १४।६९
श्लक्ष्णं यत् ८।६५
श्लथता २०।३९
श्लथशिरसि ७।६२
श्लिष्यद्भि ३।६६
षड्गुणाः २।२६
षाड्गुण्य २।९३
सशयाय १४।२४
सकथेच्छु १०।४१
संकीर्ण ४।४३
संक्रान्त ८।४१
संक्रीडन्ती १८।७

सक्षिप्तस्या २।२४
सक्षोभ ८।१८
सगताभि १०।८१
सजग्माते १८।१
सजहार १०।४४
सदानान्ता १८।७१
सपदा २।३२
संपादित २।९७
सप्रत्यसां २।७०
संप्रत्युपे १५।९५
सप्रदाय १४।७९
सप्रवेष्टु १०।४८
सभाव्य २।१०३
संभृतोप १४।७
समूर्च्छ १२।१३
ससार्षपभिः ९ । ३९
सस्पर्श ८।६
सहल्या १९।४२
स इन्द्र ३।११
सकलमपि ११।३१
सकलापि हि १६।११
सकले च १३।६७
सकलैर्वपुः १५। ३२
सकल्पन १७।२३
सकाञ्चने १।१९
सकारना १९।२७
सकुंकुमै १७।१४
सखा गरी २।३६
सजलाम्बु २०।५
सञ्जितानि १०।१
सटाछटा १।४७
सतत ७।९
स तप्तकार्त १।२०
सत्व मान १०।१२०
सत्यवृत्त १४।७०
सदामद १९।११६
स दिव्र २०।२८
सदैव १९।११८
सद्गत्वा १८।१९
स निकाम १९।५
स निरायत २०।४
सन्तमेव १०।१५
सपदि ११।२४
सप्ततन्तु १४।६
सप्तभेद १४।२१
सवाल १।७०
समं सम १९।१०
समकाल २०।८
समत्सरे १।४३
समदन ७।५९
समनद्ध १६।२४
समभि ६।१०
सममेक ४।४४
समय ६।४४
समराय १६।६३
समरेषु १६।१४
समरोन्मु १५।९३
समस्थली १७।६६
समाकुले १७।१८
समीर ४।५४
समुत्क्षिप १।५०
समुपेत्य १३।१५
समुल्लस १७।६१
समूल २।३३
सरजस ७।४२
सरभस ११।२३
सरसनख ११।५४
सरसिज ११।५६
सरागया १७।२
सर्वकार्य २।२८
सर्ववेदि १४।६२
सर्वाधिकारी ०।१ (कविवंश- वर्णने )
सर्वेण ०।४ ( कविवंशवर्णने )
सललित ७।४७
सलिलार्द्र २० ।३३
सलीलयाता १।५२
सवधुकाः ४ । ५१
स वमन् १९। ४
सव्रीहिणां १२। ४२
स विकचो ६।४२
सविक्रम १७।३६
सवितुः २०।६९
सविशेष २।११५
सविष २०।४५
स व्याप्त १२।५७
स सचरि १।४६
ससम्भ्रम १७।१५
सस्नुः ५।२८
स स्वहस्त १४।३६
सह कज्ज १५।९०
सहजचाप २।११७
सहजान्ध १६।२९

सहसा दध २०।६०
सहसा सम १९।७४
सहस्रपूर १९।९१
सहस्रसख्यै ४।४
सहिष्ये २।१०८
साटोप ३।७४
सादर १९।२३
सादिता १४।१३
सान्द्रत्व १८।६
सान्द्राम्भोद १८।३६
सामवादा. २।९९
सायं ४।९८
सार्धं कथ ५।६६
सार्वमुद्धव २।२
सावज्ञ १२।५२
सावर्ण्य ३।४७
सावशेष १०।१६
सा विभूति १४।९
सा सेना १९।२९
सिक्ता इव ९।१६
सिक्ताया ८।४३
सिञ्जत्याः ८।३४
सित सिति १।२९
सितरुचि ११।९२
सीत्कृतानि १०।७९
सीमन्त ८।६९
सीमन्त्य १२।७९
सुकुमार १६।२१
सुकृतोऽपि १९।११(प्रक्षिप्तः)
सुखवेदना १३।१३
सुखिनः १३।९९
सुगन्धय १९।२०
सुगन्धिता ३।५४
सुतरां १३।६९
सुदृशः समीक १९।८३
सुदृशः सरस ९।८९
सुभ्रुवा १०।८७
सुमेखला १७।२५
सुरभिणि ६।१२
सुसंहतै १७।५९
सेव्योऽपि ५।४२
सोढुं तस्य १९।२१
सोपचार १०।२
सोपधाना २।७७
सोष्मणः १०।५८
सौगन्ध्य ८।४८
स्कन्धधूनन १४।७१
स्कन्धावि ४।७
स्खलन्ती १९।९९
स्तनयो' ६।७५
स्तम्भ महा ५।४८
स्थगयन्त्यमी ४।२४
स्थगिता ९।२१
स्थाने शम २।९४
स्थायिनो २।८७
स्नातक १४।५५
स्नान्तीना ८।९३
स्निग्धाञ्जनश्यामतनू १२।६२
स्निग्धाञ्जनश्यामरुचि ३।६३
स्निह्यन्ती ८।३९
स्तुवतामुना १५।३३(प्रक्षिप्त.)
स्नेहनिर्भर १०।४९
स्पर्शभाजि १०।३९
स्पर्शमुष्ण १४।२७
स्पष्ट बहिः ९।६७
स्पृशन्ति २।७८
स्पृशन्स १।५८
स्फुटतर ११।३
स्फुटमिद ७।५८
स्फुटमिवो ६।५
स्फुरत्तुषा ३।४३
स्फुरदधीर ६।२५
स्फुरदुज्ज्वला ९।४७
स्फुरमाण १५।६०
स्मरत्यदो ११।६८
स्मरराग ६।७०
स्मररस ७।६५
स्मरहुता ६।६
स्मितसरो ६।९४
स्मृति व.र्म १९।४३
स्रसमान १०।४५
स्रस्ताङ्ग १२।९५
स्वच्छ सुपत्र १२।२
स्वगुणै १९।६१
स्वच्छाम्भः ८।७०
स्वजने १९।१२ (प्राक्षिप्तः)
स्वभुज १६।६९
स्वय कृत २।११०
स्वयं मण २।५०

स्वय विधा १।७१
स्वयमाक्रियः १९।८(प्रक्षिप्तः)
स्वयमेव १९।२०
स्व रागा ८।९
स्वर्गे वास १८।६२
स्वशक्त्युप २।९७
स्वादनेन १०।७
स्वादयन् १४।९०
स्वापतेय २४।९
स्वैर कृता १२।६
हते हिडिम्ब २।६०
हरत्यव १।२६
हरितपत्र ६।९३
हरिमप्य १९।६१
हरिमर्चित १६।२०
हरिराक्रुमा १३।६८
हरेरपि १७।९०
हसितु १३।६०
हस्तास्थिता १२।३
हस्तेनाग्रे १८।४८
हावहारि १०।१३
हितमप्रिय १६।९६
हिमकृता ६।६१
हिममुक्त १३।२८
हिमलव ७।७३
हूतायाः ८।४२
हृदयमरि १।७४
हेम्नः ९।९९
ह्रीभरा १०।९२
ह्रीविमोह १०।२२

सपूर्णग्रन्थस्य वृत्तसख्या १६४९ 'माघः स्तुत्यः' एतन्मिता। पञ्चदशे सर्गे क्षेपकाः श्लोकाः३४ चतुस्त्रिंशत् समाप्तौ कविवंशवर्णनश्लोकाः ५ पञ्च एव समुदिता वृत्तसख्या १६८४ 'भज तपः' एतन्मिता।



श्रीमद्वेङ्कटेशाय नमः ।

# शिशुपालवधमहाकाव्यटीका प्रारभ्यते ।



इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ १ ॥

दन्ताञ्चलेन धरणीतलमुन्नमय्य
पातालकेलिषु धृतादिवराहलीलम् ।
उल्लाघनोत्फणफणाधरगीयमान-
क्रीडावदानमिभराजमुखं नमामि ॥ २ ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥ ३ ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥

मल्लिनाथः सुधीः सोऽयं महोपाध्यायशब्दभाक्
विधत्ते माघकाव्यस्य व्याख्यां सर्वङ्कषाभिधाम् ॥ ५ ॥

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वनि ।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे निमङ्क्षन्ति ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्वङ्कषाम् ॥ ६ ॥

नेतास्मिन्यदुनन्दनः स भगवान्वीरप्रधानो रसः
शृङ्गारादिभिरङ्गवान्विजयते पूर्णा पुनर्वर्णना ।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलं
धन्यो माघकविर्वयं तु कृतिनस्तत्सूक्तिसंसेवनात् ॥ ७ ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ८ ॥



श्रीः ।

सर्वङ्कषया समेतं–

# शिशुपालवधम् ।



## प्रथमः सर्गः ।

अथ तत्रभवान् माघकविः ' काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ' इत्यालंकारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनतां ' काव्यालापांश्च वर्जयेत् ' इति निषेधस्यासत्काव्यविषयतां च पश्यन् शिशुपालवधाख्यं काव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् ' आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ' इत्याशीरादन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्यफलं शिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति–

**श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।**
**वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥**

**श्रिय इति** । तत्रादौ श्रीशब्दप्रयोगात् वर्णगणादिशुद्धेरभ्युच्चयः । तदुक्तम् । ' देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा' ' इति । श्रियः लक्ष्म्याः पतिः अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम् । 'राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणात् । जगन्निवासो जगतामाधारभूतः । कुक्षिस्थाखिलभुवन इति यावत् । तथापि जगत् लोकं शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं श्रीमति लक्ष्मीयुक्ते वसुदेवसद्मनि वसुदेवरूपिणः कश्यपस्य वेश्मनि वसन् कृष्णरूपेण तिष्ठन् हरिर्विष्णुः अम्बरादवतरन्तमायान्तम् । इन्द्रसन्देशकथनार्थमिति भावः । हिरण्यस्य गर्भो हिरण्यगर्भो ब्रह्मा । ब्रह्माण्डप्रभवत्वात् तस्याङ्गभुवं तनूजम् । अथवा तस्याङ्गादवयवादुत्सङ्गाख्याद्भवतीति हिरण्यगर्भाङ्गभूस्तं मुनिम् । नारदमित्यर्थः । 'उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुवः' इति [illegible]वतात् । ददर्श । कदाचिदिति शेषः । अत्राल्पीयसि वसुदेवसद्मनि सकलजगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकप्रभेदोऽर्थालंकारः । तदुक्तम् । ' आधाराधेययोरानुरूप्याभावोऽधिको मतः ' इति । जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । तथा तकारसकारादेः केवलस्यासकृदावृत्त्या जगज्जगदिति सकृद्व्यञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ शब्दालंकारौ । एषां चान्योन्यनैरपेक्ष्ये

णैकत्र समावेशात्तिलतण्डुलवत्संसृष्टिः । सर्गेऽस्मिन् वंशस्थवृत्तम् । ‘ जतौ तु वंशस्थमुदीरितं जरौ ’ इति लक्षणात् ॥ १ ॥

तदानीं जनैर्विस्मयादीक्षितु प्रवृत्तमित्याह–

**गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।**
**पतत्यधोधाम विसारि सर्वतः, किमेतदित्याकुलमीक्षितं जनैः ॥२॥**

गतमिति । अविद्यमानावूरू यस्य सोऽनूरुः स सारथिर्यस्य तस्यानूरुसारथेः सूर्यस्य गतं गतिः । भावे क्तः । तिरश्चीनं तिर्यग्भूतम् “विभाषाऽञ्चेरदिक्स्त्रियाम्” इति तिर्यक्छब्दादञ्च्वन्तात्प्रातिपदिकात्स्वार्थे खप्रत्ययः । हविर्भुजोऽग्नेरूर्ध्वज्वलनमूर्ध्वस्फुरणं प्रसिद्धम् इदं तु सर्वतो विसारि धामाधः पतति । किमेतदिति सूर्याग्निविलक्षणमदृष्टपूर्वमिदं धाम किमात्मकं स्यादित्याकुलं विस्मयात् सम्भ्रान्तं यथा तथा, जनैरीक्षितम् ईक्षणं कृतम् । सकर्मकादप्यविवक्षिते कर्मणि भावे क्तः “ प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ” इति वचनात् केचित् कर्मणि क्तान्तं कृत्वा ईक्षितं मुनिं ददृशुरिति पूर्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निरूपादुपमानाभ्यामधःप्रसरणधर्मेणाधिक्यवर्णनात् व्यतिरेकः । तदुक्तं काव्यप्रकाशे । ‘ उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ’ इति ‘ धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः ’ इति हेमचन्द्रः ॥ दिवाकरस्तु वृत्तरत्नाकरटीकायां प्रथमपठितेन

‘ द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं हुताशनः ’

इति चरणद्वयेन सहेममेव श्लोकं षट्पदच्छन्दस उदाहरणमाह–तत्राद्यचरणद्वयेन सन्देहाकारो गतमिति तन्निरासश्च बोध्य इत्युपरिष्टात् २ ॥

अथ भगवान्निरणैषीदित्याह–

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥३॥**

चय इति । विभुस्तत्त्वावधारणसमर्थः स हरिः पुरा प्रथमं त्विषां चय इत्यवधारितं तेजःपुञ्जमात्रत्वेन विनिश्चितं ततः प्रत्यासत्तौ विभाविता विमृष्टा आकृतिः संस्थानं यस्य तं तथोक्तम् अत एव शरीरी चेतन इत्यवधारितम् । ततो विभक्ता विविच्य गृहीता अवयवा मुखादयो यस्य तं तथोक्तम् । अत एव पुमानित्यवधारितं अमुमागच्छन्तम् व्यक्तिविशेषं नारदं वास्तवाभिप्रायेणेति पुंलिङ्गतो निर्वाहः । क्रमात् पूर्वोक्तसामान्यविशेषज्ञानक्रमेण । लोकदृष्ट्येदमुक्तं हरिस्तु सर्वं वेदैवेति तत्त्वम् । नारद इत्यबोधि । नारदं बुद्धवानित्यर्थः । नारदस्य कर्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया । तिङाद्युपसंख्यानस्योपलक्षणत्वात् । यथाह वामनः । “ निपातेनाभिहिते कर्मणि न कर्मविभक्तिः । परिगणनस्य प्रायिकत्वात् ” इति बुध्यतेः कर्तरि लुङ् “ दीपजन ” इत्यादिना चिण् „ चिणो लुक् ” इति तस्य लुक् । अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनाव–

यत्र विभावनयोः पदार्थयोर्विशेषणवृत्त्या शरीरित्वपुंस्त्वावधारणहेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । " हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् " इति लक्षणात् ॥ ३ ॥

अथ सप्तभिर्मुनिं विशिनष्टि—

**नवानधोऽधो बृहतः पयोधरान्समूढकर्पूरपरागपाण्डुरम् ।**
**क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना ॥ ४ ॥**

**नवानित्यादि** । कीदृशममुं नवान् सद्यःसम्भृतसलिलान् । अतिनीलानिति यावत् । बृहतो विपुलान् पयोधरान् मेघान् अधोऽधः मेघानां समीपाधःप्रदेशे स्थितमिति शेषः । " उपर्यध्यधसः सामीप्ये " इति द्विर्भावः, तद्योगे द्वितीया । " उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु " इत्यादिवचनात् । समूढः पुञ्जीकृतः 'समूढः पुञ्जिते शुभ्रे' इति विश्वः । कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुरम् अत एव क्षणं मेघसमीपावस्थानक्षणे । अत्यन्तसंयोगे द्वितीया । क्षणेषु ताण्डवोत्सवेषु । ' निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ' इत्युभयत्राप्यमरः । उत्क्षिप्ता उपरि धारिता गजेन्द्रस्य कृत्तिश्चर्म येन तेन । 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः । भूत्या भस्मना सितेन । ' भूतिर्भस्मनि सम्पदि ' इत्यमरः । शम्भुना स्फुटा उपमा सादृश्यं यस्य तं स्फुटोपमं शम्भूपममित्यर्थः । सापेक्षत्वेऽपि समासः । सदृशपर्याययोस्तुलोपमाशब्दयोः "अतुलोपमाभ्याम्" इति निषेधात्सादृश्यवाचित्वे तृतीयेत्याहुः । केचिदिमं श्लोकं चयरिचयामित्यतः प्राक् लिखित्वा व्याचक्षते तेषां पुंस्त्वावधारणात् प्राक् तेजःपिण्डमात्रस्य शम्भूपमौचित्यं चिन्त्यम् ॥ ४ ॥

**दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम् ।**
**विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव ॥ ५ ॥**

**दधानमिति** । पुनश्च अम्भोरुहकेसरद्युतीः पद्मकिञ्जल्कप्रभाः पिशङ्गीरित्यर्थः । जटा दधानं स्वयं तु शरच्चन्द्रमरीचिरिव रोचिर्यस्य तं धवलमित्यर्थः । अत एव विपाकेन परिणामेन पिङ्गाः पिङ्गलाः तुहिनस्थल्यां रोहन्तीति तुहिनस्थलीरुहः व्रततीततीर्लतासमूहान् । ' वल्ली तु व्रततिर्लता ' इत्यमरः । दधानं धराधरेन्द्रं हिमवन्तम् । तुहिनस्थलीति लिङ्गात् नारदोपमानत्वाच्च तमिव स्थितम् ॥ ५ ॥

**पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ।**
**सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ॥ ६ ॥**

**पिशङ्गेति** । पुनः मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी पिशङ्गया मौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुक् तम् । "सत्सूद्विष" इत्यादिना क्विप्, " स्त्रियाः पुंवत्" इत्यादिना पिशङ्गशब्दस्य पुंवद्भावः । अर्जुनच्छविं धवलकान्तिम् । 'वलक्षो धवलोऽर्जुनः' इत्यमरः । अञ्जनद्युति

अञ्जनवर्णम् एणाजिनं कृष्णमृगचर्म वसानम् आच्छादयन्तम् । 'वस आच्छादने' इति धातोः शानच् । सुवर्णसूत्रेण कनकमेखलया आकलितं वद्धम् अधराम्बरम् अन्तरीयकं यस्यास्ता शितिवाससो नीलाम्बरस्य रामस्य तनुं विडम्बयन्तमनुकुर्वाणमित्यार्थीयमुपमा ॥ ६ ॥

**विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।**
**कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गणैरिव ॥ ७ ॥**

**विहङ्गेति** । पुनः विहङ्गराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैः कैः आयतैर्दीर्घैः हिरण्यस्य विकारो हिरण्मयी । " दाण्डिनायन हास्तिनायन " इत्यादिना मयटि यलोपनिपातः । तस्या-मुर्व्या रुहा रूढाः इगुपधालक्षणः कप्रत्ययः । तासां वल्लीनां तन्तुभिस्तत्तुल्यैः सूक्ष्मावयवैः उपा-दानगुणात् हिरण्मयैः कृतोपवीतं शोभार्थं कल्पितयज्ञसूत्रं स्वयं हिमशुभ्रम् अत एव घनान्ते शरदि तडितां गणैरुपलक्षितम् । 'तडित्सौदामनी विद्युत्' इत्यमरः । उच्चैरेव उच्चकैरुन्नतं घनं मेघमिव स्थितम् ॥ ७ ॥

**निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना ।**
**चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥**

**निसर्गेति** । पुनः निसर्गात् स्वभावादेव चित्राणि शबलानि उज्ज्वलानि भास्वराणि सूक्ष्माणि पक्ष्माणि लोमानि यस्य तेन लसन् यो बिसच्छेदो मृणालखण्ड । 'छेदः खण्डोऽस्त्रि-याम्' इति त्रिकाण्डशेष । तद्वत्सिते अङ्गे वपुषि सङ्गिना सक्तेन चारुणा चमूरुचर्मणा मृगत्वचा कुथेन पृष्ठास्तरणेन । 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः । इन्द्रवाहन नागेन्द्रम् ऐरावतमिव चकासतं शोभमानम् । इन्द्रस्य वाहनमिति स्वस्वामिभावमात्रस्य विवक्षि-तत्वात् " वाहनमाहितात् " इति न णत्वम् । यथाह वामनः । 'नेन्द्रवाहनशब्दे णत्वमाहितत्व-स्याविवक्षितत्वात्' इति । चकास्तेः शतरि " नाभ्यस्ताच्छतु " इति नुमभावः । " जक्षित्यादयः षट् " इत्यभ्यस्तसंज्ञा ॥ ८ ॥

**अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।**
**पुरः प्रवालैरिव पूरितार्द्धया विभान्तमच्छस्फटिकाक्षमालया ॥ ९ ॥**

**अजस्रमिति** । पुनरजस्रं प्राचुर्येणास्फालितास्ताडिताः । सौष्ठवपरीक्षार्थं न्युब्जाङ्गुष्ठेन तन्त्री-ताडनं प्रसिद्धम् । तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन सङ्घर्षणेन उज्ज्वलैरङ्गुष्ठनखांशुभिर्भि-न्नया मिश्रया । तद्रागरक्तयेत्यर्थः । अतएव पुरः पुरोभागे प्रवालैर्विद्रुमैः । 'अथ विद्रुमः पुंसि प्रवालं पुनपुंसकम्' इत्यमरः । पूरितार्द्धयेव स्थितया अच्छस्फटिकाक्षमालया स्वच्छस्फटिकानां मालया । जपमालयेत्यर्थः । 'अच्छो भल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययम्' इति हेमचन्द्रः । तथा प्रसिद्धस्फटिकग्रहणात् ऋषेर्मोक्षार्थित्वं व्यज्यते । 'स्फटिको मोक्षदः परम्' इति मोक्षार्थिनः

स्फटिकाक्षमालाभिधानात् । विभान्तं भासमानम् । भातेः शतृप्रत्ययः । अत्र नखांशुभिन्नयेति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालंकार उक्तः । 'तद्गुणः स्वगुणत्यागात्' इति॥९॥

**रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।**
**स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥ १० ॥**

**रणद्भिरिति** । पुनर्नभस्वतो वायोराघट्टनया आघातेन पृथगसङ्कीर्णं रणद्भिर्ध्वनद्भिः । अनुरणनोत्पद्यमानैरित्यर्थः । 'श्रुत्यारब्धमनुरणनं स्वरः' इति लक्षणात् । तदुक्तं रत्नाकरे । 'श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतुश्चित्तं स स्वर उच्यते ' इति। श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः । तदुक्तम् । 'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा ' इति । विभिन्नानि प्रतिनियतसङ्ख्यया व्यवस्थितानि श्रुतीनां मण्डलानि समूहा येषां तैर्विभिन्नश्रुतिमण्डलैः. श्रुतिसङ्ख्यानियमश्च दर्शितः । 'चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ' इति स्वराः षड्जादयः सप्तोक्तलक्षणाः । तदुक्तम् । 'श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः । पञ्चमो धैवतश्चाथ निषाद इति सप्त ते । तेषां सञ्ज्ञाः सरिगमपधनीत्यपरा मताः ' इति । तैः स्वरैः स्फुटीभवन्त्यो ग्रामविशेषाणां षड्जाद्यपरनामकानां स्वरसङ्घातभेदानां त्रयाणां मूर्छनाः स्वरारोहावरोहक्रमभेदा यस्यां तां महतीं निजवीणाम् । 'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी ' इति वैजयन्ती । मुहुर्मुहुरवेक्षमाणम् । तन्त्रीयोजनाभेदलक्षणमहिम्ना पुरुषप्रयत्नमन्तरेणैवाविसंवादं ध्वननीति कौतुकादनुसन्दधानमित्यर्थः। अथ ग्रामलक्षणम् । 'यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते । षड्जग्रामो भवेदादौ मध्यमग्राम एव च । गान्धारग्राम इत्येतद्ग्रामत्रयमुदाहृतम्' इति । तथा च 'नन्द्यावर्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः । षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः ' इति। मूर्च्छनालक्षणं च । 'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् । सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च' इति। ग्रामत्रयेऽपि प्रत्येकं सप्त सप्त मूर्च्छना इत्येकविंशतिमूर्च्छना भवन्ति । तत्र नामानि तु 'नानपेक्षितमुच्यते' इति प्रतिज्ञाभङ्गभयान्न लिख्यन्ते इति सर्वमवदातम् । अत्र पुरुषव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवातिशयो वीणायाः प्रतीयते । तेन सह स्वतःप्रसिद्धातिशयस्याभेदेनाध्यवसितत्वात् तन्मूलातिशयोक्तिरलंकारः । सा च महत्याः पुंव्यापारं विना मूर्च्छाद्यसम्बन्धेऽपि सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपतया पुंव्यापाराख्यरूपकारणं विनापि मूर्च्छनादिकार्योत्पत्तिद्योतनाद्विभावना व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरितिसंक्षेपः ॥ १० ॥

**निवर्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधिर्नभस्सदः।**
**समासदत्सादितदैत्यसम्पदः पदं महेन्द्रालयचारु चक्रिणः॥११॥**

**निवर्त्त्येति** । अतीन्द्रिया इन्द्रियमतिक्रान्ता देशकालस्वरूपाद्विप्रकृष्टार्थाः । " अत्यादयः क्रान्ताद्यर्थे द्वितीयया " इति समासः । " द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु परलिङ्गताप्रतिषेधो वक्तव्यः " इति विशेष्यलिङ्गत्वम् । तेषां ज्ञानं तस्य निधिः सर्वार्थद्रष्टेत्यर्थः । कृतानतीन् कृतप्रणामान् अनुव्रजतोऽनुगच्छतः नभसि आकाशे सीदन्ति गच्छन्तीति नभःसदः सुरान् । "सत्सूद्विष "इत्यादिना क्विप् । निवर्त्त्य प्रतिषिध्य स मुनिः सादितदैत्यसम्पदः सादिताः विध्वस्तीकृताः दैत्यानां सम्पदो येन तस्य चक्रिणः कृष्णस्य पदं स्थानं महेन्द्रालयचारु इन्द्रभवनमिव भासमानं समासदत् । समाङ्पूर्वात् पद्धातोर्लुङ् । "पुषादि " इत्यङ् । अत्र नतीनती पदः पदमिति च द्वयोर्व्यञ्जनयुग्मयोरसकृदावृत्त्या छेकानुप्रासः अन्यत्र वृत्त्यनुप्रासः इत्यनयोः संसृष्टिः ॥११॥

**पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत ।**
**गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः ॥ १२ ॥**

**पतदिति** । पतन् यः पतङ्गः सूर्यः स प्रतिमा उपमानं यस्य सः । ' पतङ्गौ पक्षिसूर्यौ च ' इत्यमरः । तपोनिधिर्मुनिः अस्य हरेः पुरो भुवि पुरःप्रदेशे यावन्न व्यलीयत नातिष्ठत् । " लीङ् गतौ " इति धातोर्दैवादिकात्कर्तरि लङ् । तावदच्युतो हरिर्गिरेः शैलात् तडितोऽस्य सन्तीति तडित्वान् मेघ इव " मादुपधायाश्च मतोर्वोऽयवादिभ्यः " इति मतुपो मकारस्य वकारः " तसौ मत्वर्थे " इति भसंज्ञायामेकसंज्ञाधिकारेणापदत्वान्न जश्त्वम् । उच्चैरुन्नतात्पीठात् आसनात् जवेनोदतिष्ठत् । मुनिचरणस्य भूस्पर्शात्प्रागेव स्वयमुत्थितवान् । ' ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ' इति शास्त्रमनुस्मरन्निति भावः । " उदोऽनूर्ध्वकर्मणि " इति नियमादिहोर्ध्वकर्म्मणि नात्मनेपदम् । पतत्पतङ्ग इत्यत्र पतङ्गस्य पतनासम्भवादियमभूतोपमा इत्याचार्यदण्डिप्रभृतयो बभणुः अतएवाप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्वे वर्णयन्ति ॥ १२ ॥

**अथ प्रयत्नोन्नमितानमत्फणैर्धृते कथञ्चित्फणिनां गणैरधः ।**
**न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्तले ॥ १३ ॥**

**अथेति** । अथाच्युताभ्युत्थानानन्तरं धातुः सुतेन नारदेन प्रयत्नोन्नमितास्तथापि मुनिपादन्यासभारादानमन्त्यः फणा येषां तेषां फणिनां गणैः अधोऽधःप्रदेशे कथंचिद् धृते स्थापिते भुवस्तले भूपृष्ठे । अभिदेवकीसुतं देवकीसुतमभिलक्ष्यीकृत्येत्यर्थः । "लक्षणेनाभिप्रती आभिमुख्ये " इत्यव्ययीभावः । चरणौ पादौ । ' पदङ्घ्रिश्चरणोऽस्त्रियाम् ' इत्यमरः । न्यधायिषातां निहितौ । दधातेः कर्म्मणि लुङ् । " स्यसिच्सीयुट् " इत्यादिना चिण्वदिटि " आतो युक्चिण्कृतोः " इति युक् । अत्र फणानां नमनोन्नमनासम्बन्धेऽपि मुनिगौरवाय तत्सम्बन्धाभिधानादतिशयोक्तिभेदः ॥ १३ ॥

**तमर्घ्यमर्घ्यादिकयादिपूरुषः सपर्यया साधु स पर्यपूपुजत् ।**
**गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः ॥ १४ ॥**

**तमिति** । आदिपूरुषः पुराणपुरुषः "अन्येषामपि दृश्यते" इति वा दीर्घः । स कृष्णः । अर्घं पूजामर्हतीति अर्घ्यः । "दण्डादिभ्यो यः" इति यः । तं नारदम् । अर्घार्थं द्रव्यमर्घ्यम् । "पादार्घाभ्यां च" इति यत्प्रत्ययः 'मूल्ये पूजाविधावर्घः','षट् तु त्रिष्वर्घ्यमर्घार्थे' इति चामरः । अर्घ्यमादिर्यस्यास्तया अर्घ्यादिकया । "शेषाद्विभाषा" इति विकल्पेन कप्प्रत्ययः । सपर्यया पूजया । 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः । साधु यथा तथा पर्यपूपुजत् परिपूजितवान् । णौ चङन्तं कर्तव्यम् । युक्तं चैतदित्यर्थान्तरं न्यस्यति **गृहानिति** । मनस ईषिणो मनीषिणः सन्तः पृषोदरादित्वात्साधुः । अपुण्यकृतां पुण्यमकृतवताम् । "सुकर्मपापमन्त्रपुण्येषु कृञः" इति भूते क्विप् । गृहान् प्रणयादुपैतुमभीप्सवः प्राप्तुमिच्छवः । आप्नोतेः सन्नन्तात् उप्रत्ययः "आप्ज्ञप्यृधामीत्" इतीकारः । न भवन्ति किन्तु पुण्यकृतामेव । अतः कृच्छ्रलभ्याः सन्तः पूज्या इत्यर्थः ॥ १४ ॥

**न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।**
**स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥ १५ ॥**

**न यावदिति** । उत्थितौ तौ मुनिकृष्णौ जनस्तुषाराञ्जनपर्वताविव यावन्नोदपश्यन्नोत्प्रेक्षितवान् । तावच्चिरन्तनः पुराणो मुनिः कृष्णः । पुरा किल भगवान् बदरिकारण्ये नारायणावतारेण तपसि स्थितवानिति पुराणात् । "सायंचिरम्" इत्यादिना ट्युप्रत्ययः तुडागमश्च । स्वहस्तेन दत्ते आसने मुनिं नारदम् अभिन्यवीविशत् स्वाभिमुखेनोपवेशितवान् । अभिनिपूर्वात् विशतेर्ण्यन्ताल्लुङि "णिश्रि" इति चङ् ॥ १५ ॥

**महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृषः स विष्टरे ।**
**श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १६ ॥**

**महामहेति** । महत्या महानीलशिलायाः सिंहलद्वीपसम्भवेन्द्रनीलोपलस्य रुगिव रुग्यस्य तस्येत्युपमालङ्कारः । 'सिंहलस्याकराद्भूता महानीलास्तु ते स्मृताः' इति भगवानगस्त्यः । कंसकृषो हरेः पुरोऽग्रे उच्चकैरुन्नते विष्टरे आसने । "वृक्षासनयोर्विष्टरः" इति पत्वम् । निषेदिवानुपविष्टवान् । "भाषायां सदवसश्रुवः" इति क्वसुः । स मुनिरभिसायं सायंकालाभिमुखम् । अव्ययीभावसमासः । सायंकालस्य कार्ष्ण्यात् कृष्णोपमानत्वम् । श्रित आश्रित उदयाद्रिरुदयाचलो येन तस्य चन्द्रमसोऽभिरामतां शोभामचूचुरत् चोरितवान् प्राप्तवानित्यर्थः । "चुर स्तेये" "णिश्रि", इति चङ् । अन्यस्यान्यधर्मसम्बन्धासम्भवात् चन्द्रमसोऽभिरामतामिवाभिरामतामित्यौपम्यपर्यवसानादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाभेदः, स चोक्तोपमया अङ्गाङ्गिभावेन सङ्कीर्यते ॥ १६ ॥

क्तं " टिड्ढाणञ्" इत्यादिना ङीप् । सभा आस्थानी सैव वेदिः । 'वेदिः परिष्कृता भूमिः' इत्यमरः । तस्या व्यद्योतिष्ट दीप्यते स्म । " द्युद्भ्यो लुङि " इत्यभावे तङ् । रूपकालङ्कारः ॥ ३ ॥

**रत्नस्तम्भेषु संक्रान्तप्रतिमास्ते चकाशिरे ।**
**एकाकिनोऽपि परितः पौरुषेयवृता इव ॥ ४ ॥**

**रत्नेति** । रत्नानां स्तम्भाः । इति षष्ठीसमासस्य विशेषे पर्यवसानाद्विकारार्थत्वम् । तेषु सङ्क्रान्तप्रतिमाः सङ्क्रान्तप्रतिबिम्बाः । 'प्रतिमानं प्रतिबिम्बं प्रतिमा' इत्यमरः । ते त्रयः एकाकिनोऽसहाया अपि । " एकादाकिनिच्चासहाये " इत्याकिनिच् प्रत्ययः । परितोऽभितः सर्वतः 'पर्यभिभ्यां च" इति तसिल्प्रत्ययः स च सर्वोभयार्थाभ्यामिष्यते । पौरुषेयेण प्रतिबिम्बभूयस्त्वात् पुरुषसमूहेनावृता इवेत्युत्प्रेक्षा । चकाशिरे । " सर्वपुरुषाभ्यां णढञौ । " पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्" इति समूहे ढञ्प्रत्ययः । एतेन विजनत्वमुक्तम् । यद्यपि 'निस्तम्भे निर्गवाक्षे च निर्भित्त्यन्तरसंश्रये । प्रासादाग्रे त्वरण्ये वा मन्त्रयेद्भावमाश्रितौ ॥' इति कामन्दकीये मन्त्रभूमेः स्तम्भप्राचुर्यनिषेधो गम्यते तथापि तस्यापि विजनोपलक्षणत्वाददोष इति भावः ॥ ४ ॥

**अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी ।**
**तैरूहे केसरिक्रान्तत्रिकूटशिखरोपमा ॥ ५ ॥**

**अध्यासामासुरिति** । अमी त्रयो रामकृष्णोद्धवा यान्युत्तुङ्गहेमपीठानि आसनानि अध्यासामासुरधितष्ठुः । येषूपविष्टा इत्यर्थः । " अधिशीङ्स्थासां कर्म " इति कर्मत्वम् । 'आस उपवेशने " लिट् दयायासश्च " इत्याम्प्रत्ययः " कृञ्चानुप्रयुज्यते लिटि " इति अस्तेरनुप्रयोगः 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य " इति कृञ एवेति नियमादस्तेर्नात्मनेपदम् । तैः पीठैः केसरिभिः सिंहैः क्रान्तानां त्रिकूटस्य त्रिकूटाद्रेः शिखराणामुपमा सादृश्यम् ऊहे ऊढा । वहेः " कर्मणि लिट् " सम्प्रसारणम् । त्रीणि कूटान्यस्येत्यन्वर्थसंज्ञा । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । उपमालङ्कारः ॥ ५ ॥

**गुरुद्वयाय गुरुणोरुभयोरथ कार्ययोः ।**
**हरिर्विप्रतिषेधं तमाचचक्षे विचक्षणः ॥ ६ ॥**

**गुर्विति** । अथोपवेशनानन्तरं विचष्टे इति विचक्षणः वक्ता 'कर्तरि ल्युडिति" न्यासकारः । 'असनयोश्च प्रतिषेधो वक्तव्यः " इति चक्षिङः ख्याञादेशाभावः । हरिर्गुर्वोः उद्धवरामयोः पितृव्यज्येष्ठभ्रात्रोर्द्वयाय । द्वाभ्यामित्यर्थः । गुरुणोर्महतोरुभयोः कार्ययोः पूर्वोक्तयोः तं विप्रतिषेधं विरोधमाचचक्षे आख्यातवान् । तुल्यबलविरोधो विप्रतिषेधः ॥ ६ ॥

**द्योतितान्तःसभैः कुन्दकुड्मलाग्रदतः स्मितैः ।
स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती ॥ ७ ॥**

**द्योतितेति** । कुन्द माघ्यमत्र पुष्पविशेषः । 'माघ्य कुन्दम्' इत्यमरः । कुन्दकुड्मलाग्राणीव दन्ता यस्य तस्य कुन्दकुड्मलाग्रदतः । "अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च" इत्यग्रान्तपूर्वपदबहुव्रीहेः समासान्तो वैभाषिको दतादेशः । तस्य हरेः सरस्वती अन्तःप्रधाना सभा अन्तःसभा सभाभ्यन्तरमित्यर्थः । सा द्योतिता प्रकाशिता यैस्तैः स्मितैः स्नपितेव क्षालितेव । "स्नातेर्ण्यन्तात् क्तः" अर्तिह्रीव्ली" इत्यादि । पुगागमः "मितां ह्रस्वः" इति ह्रस्वः । शुद्धवर्णा स्फुटाक्षरत्वात् स्वच्छकान्तिश्च भवत् । अत्र स्वाभाविकवर्णशुद्धेः स्नानहेतुकत्वमुत्प्रेक्ष्यते । स्मितपूर्वाभिभाषी हरिरिति भावः ॥ ७ ॥

कार्यविप्रतिपत्ते निवेद्य तत्र स्वमतमावेदयिष्यन् पण्डितमानित्व तावत्परिहरति—

**भवद्गिरामवसरप्रदानाय वचांसि नः
पूर्वरङ्गप्रसङ्गाय नाटकीयस्य वस्तुनः ॥ ८ ॥**

**भवद्गिरामिति** । भवद्गिरां युष्मद्वाचाम् अवसरप्रदानाय । प्रसञ्जनायेत्यर्थः । नोऽस्माक वचांसि । सिद्धान्तोन्नयनार्थमुच्यते न तु सिद्धान्तत्वेनेत्यर्थ । तथाहि । पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्ग नाट्यशाला तस्य कर्माणि पूर्वरङ्ग इति दशरूपके । अतः पूर्वरङ्गो नाम रङ्गप्रधानाख्यो रङ्गविघ्नशान्तिकारी नान्दीपाठगीतवादित्राद्यनेकाङ्गविशेषो नाट्यादौ कर्तव्य कर्मविशेषः । तदुक्त वसन्तराजीये । 'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः प्रकीर्तितः ॥ ' इति । स पूर्वरङ्गः । नाटके भव नाटकीय तत्र वर्त्यमित्यर्थः । "वृद्धाच्छः " तस्य "आयनेयीनीयि" इत्यादिनेयादेशः । तस्य वस्तुनः प्रसिद्धस्य प्रसङ्गाय प्रसञ्जनाय । प्रवर्त्तनायेति यावत् । अत्र प्रथमवादो न दोषायेति भाव । पूर्वरङ्ग प्रस्तावनेति रङ्गराजः । तच्चिन्त्यम् । 'पूर्वरङ्ग विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नट ॥ प्रथम पूर्वरङ्गश्च ततः प्रस्तावनेति च ' । ' आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते' ॥ इति दशरूपकाद्युक्तभेदविरोधादिति । अत्र हरिवाक्यपूर्वरङ्गयोः प्रसञ्जकत्वस्वरूपसामान्यस्य वाक्यद्वये शब्दान्तरेण पृथङ्निर्देशात्प्रतिवस्तूपमालङ्कारः । तल्लक्षण तूक्तम् ॥ ८ ॥

सम्प्रति स्वमतमाह—

**करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।
विनाप्यस्मदलंभूष्णुरिज्यायै तपसः सुतः ॥ ९ ॥**

**करदीकृतेति** । दिशां जित्वरैः जयनशीलैः । "इण्नशजिसर्तिभ्यः क्वरप्" इति क्वरप् । कृद्योगात्कर्मणि षष्ठी । भ्रातृभिर्भीमादिभिर्हेतुभिः करदाः षष्ठभागप्रदाः । 'भागधेयः करो बलिः'

इत्यमरः। तनञ्च्वि "ऊर्यादिच्विडाचश्च" इति गतिसञ्ज्ञायां "कुगति प्रादयः" इति नित्यसमासः। अकरदा करदा सम्पद्यमाना कृता. करदीकृता भूपाला यस्य स वशीकृतराजमण्डल. तपसः सुतो धर्मपुत्रः। 'तपश्चान्द्रायणादौ स्याद्धर्मे लोकान्तरेऽपि च' इति विश्वः। अस्मद्विना अस्माभिर्विनापीत्यर्थे 'पृथग्विनानाना" इत्यादिना तृतीयाविकल्पात्पञ्चमी। इज्यायै यागाय। यजेर्भावे क्यप् "वचिस्वपि" इत्यादिना सम्प्रसारणम्, "नमःस्वस्ति" इत्यादिना चतुर्थी। अलं समर्थौ भूष्णुर्भवनशील। 'भूष्णुर्भविष्णुर्भविता' इत्यमरः। "ग्लाजिस्थश्च ग्स्नुः" इति ग्स्नुप्रत्ययः "क्ङिति च" इत्यत्र गकारप्रश्लेषाद् गुणाभावः। तथा च जयादित्यः। तत्रैव गकारोऽपि च तत्त्वभूतो निर्दिश्यते इति। अतो जैत्रयात्रैव कार्या न यज्ञयात्रेति भावः॥ ९॥

ननु यज्ञतो जैत्रयात्रायामुभयानुसरणं स्यात्तत्राह—

**उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।**
**समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च॥१०॥**

**उत्तिष्ठमान इति**। उत्तिष्ठमानो वर्द्धमानः। "उदोऽनूर्ध्वकर्मणि" इत्यात्मनेपदम्। परः शत्रुः पथोऽनपेतं पथ्यं हितमारोग्यं चेच्छता। पुंसेति शेषः। नोपेक्ष्यो नौदासीन्येन द्रष्टव्यः। कुतः। हि यस्माद्वर्त्स्यन्तौ वर्धिष्यमाणौ। "लटः सद्वा" इति सदादेशे. "वृद्भ्यः स्यसनोः" इति विभाषया परस्मैपदम् "न वृद्भ्यश्चतुर्भ्यः" इतीडभावः। आमयो व्याधिः। 'रोगव्याधिगदामयाः' इत्यमरः। स शत्रुश्च शिष्टैर्नीतिज्ञैः समौ तुल्यवृत्ती आम्नातावाख्यातौ अल्पीयसोऽप्यरेर्वृद्धिर्महानर्थाय रोगवत्। अतस्तस्यानुपेक्ष्यत्वादुभयानुसृतिः कुत इति भावः। उपमालङ्कारः॥ १०॥

नन्वेवं स्वार्थपरत्वदोषः स्यादिति चेन्न लोकानुग्रहार्थत्वादस्याः प्रवृत्तेरित्याशयेनाह—

**न दूये सात्त्वतीसूनुर्यन्मह्यमपराध्यति।**
**यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम्॥११॥**

**नेति**। सत्वतोऽपत्यं स्त्री सात्वती नाम हरेः पितृष्वसा। "उत्सादिभ्योऽञ्" इत्यञ् तस्याः सूनुश्चैद्यः। बन्धुरपि खलो न मृष्यत इति भावः। यन्मह्यमपराध्यति द्रुह्यतीति यावत् "क्रुधद्रुहेर्ष्या" इत्यादिना चतुर्थी। ततः इति शेषः। यत्तदोर्नित्यसम्बन्धात्। न दूये न परितप्ये। दूङो दैवादिकात्कर्तरि लट्। उत्तमपुरुषैकवचनम्। किन्तु लोकं दन्दह्यते गर्हितं यथा स्यादेवं दहतीति यत्। 'लुपसदचरजप" इत्यादिना गर्हायां यङ्। "जपजभदहदशभञ्जपशां च" इत्यभ्यासस्य नुगागमः। अदो लोकदहनं मा दुःखाकरोति दुःखमनुभावयतीत्यर्थः। "दुःखात्प्रातिलोम्ये" इति डाच्प्रत्ययः। अतश्चैद्य एवाभियातव्यः। पार्थस्तु प्रार्थनयापि पश्चात्समाधेय इत्यर्थः॥ ११॥

स्वमत निगमयन्परमत शुश्रूषुः पृच्छति—

**मम तावन्मतमिदं श्रूयतामङ्ग वामपि ।**
**ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्यवस्तुनि ॥ १२ ॥**

**ममेति** । तावद्भवन्मतश्रवणपर्यन्तमित्यर्थः । मम मतमिदम् । अङ्गेत्यामन्त्रणेऽव्ययम् ।' अथ सम्बोधनार्थकाः । स्युः प्याट् पाडङ्ग हे है भोः' इत्यमरः । वा युवयोः । " युष्मदस्मदोः षष्ठीचतुर्थी " इत्यादिना वामादेशः । मत श्रूयताम् । विधौ लोट् । तदिद मया श्रोतव्यमन्यथा सन्देहानिवृत्तेरिति भावः । विदुषस्ते कुत सन्देहस्तत्राह । ज्ञातसारः ज्ञाततत्त्वार्थोऽप्येकः एकाकी कार्यवस्तुनि कर्त्तव्यार्थे सन्दिग्धे सशेते खलु निश्चये । अतो मयापि सन्दिह्यत इत्यर्थः । ' दिह उपचये ' कर्तरि क्तः । वस्तवत्वे । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

**यावदर्थपदां वाचमेवमादाय माधवः ।**
**विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ १३ ॥**

**यावदिति** । माधवो हरिर्यावानर्थो यावदर्थम् । " यावदवधारणे " इत्यव्ययीभावः । यावदर्थं पदानि यस्यास्ताम् अभिधेयसम्मिताक्षरामित्यर्थः । एवमुक्तप्रकारेण वाचमादाय गृहीत्वा । उक्त्वेत्यर्थः । विरराम तूर्णीमास । " व्याङ्परिभ्यो रमः " इति परस्मैपदम् । तथाहि । महीयास उत्तमाः प्रकृत्या स्वभावेन मितभाषिण भवन्तीति शेषः । वृथालापनिषेधादिति भावः । पूर्ववदलङ्कार ॥ १३ ॥

अथाष्टभि कुलकेन राम वर्णयन्तद्वाक्यमवतारयति—

**ततः सपत्नापनयस्मरणानुशयस्फुरा ।**
**ओष्ठेन रामो रामोष्ठबिम्बचुम्बनचुञ्चुना ॥ १४ ॥**

**तत इति** । ततो रामो जगादेत्युत्तरेणान्वयः । सपत्नो रिपुः । ' रिपौ वैरिसपत्नारि ' इत्यमरः । तस्यापनयोऽपकारः तस्य स्मरणेन योऽनुशयः पश्चात्तापः । ' भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः ' इति विश्वः । तेन स्फुरतीति अनुशयस्फूः तेन सपत्नापनयस्मरणानुशयस्फुरा । ओष्ठो बिम्बमिवेत्युपमितसमासः । रामायाः ओष्ठबिम्बस्य चुम्बनेन वित्तो रामोष्ठबिम्बचुम्बनचुञ्चुः " तेन वित्तश्चुञ्चुप्चणपौ " इति चञ्चुप्रत्ययः । "ओत्वोष्ठयोः समासे वा " पररूप वक्तव्यम् इति विकल्पेन पररूपम् । तेनौष्ठेनोपलक्षितः । समरसुरतयोः समरस इति भाव । उपमानुप्रासयोः संसृष्टिः ॥ १४ ॥

**विवक्षितामर्थविदस्तत्क्षणप्रतिसंहृताम् ।**
**प्रापयन्पवनव्याधेर्गिरमुत्तरपक्षताम् ॥ १५ ॥**

**विवक्षितामिति** । विवक्षिता वृद्धत्वाभिमानादग्रे वक्तुमिष्टाम् । " वचेर्ब्रूञो वा " सन्नन्तात्कर्मणि क्तः । तत्क्षणे विवक्षाक्षणे एव इत्यविलम्बोक्तेः । प्रतिसंहृतां समानुरोधादनुरुद्धाम्

अर्थविदः कार्यज्ञस्य अत एव पवनव्याधेरुद्धवस्य गिरमुत्तरपक्षतः सिद्धान्तपक्षतां प्रापयन् । स्वयमसत्पक्षावलम्बित्वादिति भावः । अनेन रामस्य व्यग्रतोक्ता ॥ १५ ॥

घूर्णयन्मदिरास्वादमदपाटलितद्युती ।
रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ ॥ १६ ॥

घूर्णयन्निति । पुनः मदिरास्वादेन मद्यपानेन यो मदस्तेन पाटलिता रक्तीकृता द्युतिर्ययोस्ते । रेवत्या देव्याः वदने यदुच्छिष्टं मद्यलेपताम्बूलादि । अक्षिचुम्बनसंक्रान्तमिति भावः । तेन परिपूते शुद्धे पुटे ययोस्ते दृशौ घूर्णयन् भ्रामयन्निति मद्यविकारोक्तिः । उच्छिष्टपरिपूतेत्यत्र 'रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम्' । इति स्मरणात् । उच्छिष्टस्य पावित्र्यजनकत्वविरोधस्याभासत्वाद्विरोधाभासोऽलङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास उच्यते' । इति लक्षणात् ॥ १६ ॥

आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् ।
म्लापयन्नभिमानोष्णैर्वनमालां मुखानिलैः ॥ १७ ॥

आश्लेषेति । पुनराश्लेषलोलुपाया आलिङ्गनलुब्धाया वध्वाः स्तनयोः कार्कश्यस्य काठिन्यस्य साक्षिणीम् उपद्रष्ट्रीं नित्यं पीड्यमानामिति भावः । " साक्षाद्द्रष्टरि सञ्ज्ञायाम् " इति साक्षाच्छब्दादिनिप्रत्ययः । वनमालामभिमानोष्णैरहङ्कारतप्तैर्मुखानिलैः निश्वासमारुतैर्म्लापयन् ग्लपयन् । ग्लायतेर्ण्यन्ताल्लटः शत्रादेशः । " आदेच " इत्यादिनात्वे पुगागमः । अम्लाने म्लानसम्बन्धादतिशयोक्तिः ॥ १७ ॥

दधत्सन्ध्यारुणव्योमस्फुरत्तारानुकारिणीः ।
द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेदविप्रुषः ॥ १८ ॥

दधदिति । पुनः सन्ध्यायामरुणे व्योम्नि स्फुरन्तीस्तारा अनुकुर्वन्तीति तथोक्ताः । कुतः द्विषतः शत्रोर्द्वेषेण क्रोधेनोपरक्ते अङ्गे वपुषि सङ्गिनीः सक्ताः । स्वेदविप्रुषः स्वेदबिन्दून् । 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ' इत्यमरः । दधद्दधानः । "नाभ्यस्ताच्छतुः " इति नुमभावः । उपमालङ्कारः ॥ १८ ॥

प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा ।
कृष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम् ॥ १९ ॥

प्रोल्लसदिति । पुनः प्रकर्षेणोल्लसतां कुण्डलयोः प्रोतानां स्यूतानां पद्मरागदलानां माणिक्यशकलानां त्विषा कान्त्या । प्रोतेति " प्रपूर्वाद्वेञः " कर्मणि क्तः । यजादित्वात्सम्प्रसारणम् । कृष्णोत्तरासङ्गो नीलोत्तरीयम् । ' द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा । संव्यानमुत्तरीयं च ' इत्यमरः । तस्य रुचं चूतपल्लवस्येमां चौतपल्लवीम् विदधत् कृष्णलोहितमिश्रवर्णचू-

तपल्लववद् धूम्रा कुर्वन्नित्यर्थः । 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरवचनात् । अत्रान्यरुचोऽन्यदीयत्वायोगात्तादृश्याक्षेपान्निदर्शनालङ्कारः ॥ १९ ॥

**ककुम्भिकन्यावक्त्रान्तर्वासलब्धाधिवासया ।**
**मुखामोदं मदिरया कृतानुव्याधमुद्वमन् ॥ २० ॥**

**ककुम्भीति ।** पुनः ककुम्भिकन्यायाः रेवत्याः वक्त्रस्यान्तः अभ्यन्तरे वासेन स्थित्या लब्धोऽधिवासो वासना यया तया । तन्मुखसौरभवासितयेत्यर्थः । 'संस्कारो गन्धमाल्याद्यैर्योऽधिवासनमुच्यते' । मदिरया कृतानुव्याधं कृतसंसर्गम् । प्रियागण्डूषगन्धिनमित्यर्थः । "व्यधजपोरनुपसर्गे" इत्यनुपसृष्टाद्प्रत्ययविधानादुपसृष्टाद्व्यधेर्घञ् प्रत्ययः. मुखामोदं स्वमुखगन्धविशेषम् । 'आमोदः सोऽतिनिर्हारी' इत्यमरः । उद्वमन् उद्गिरन् अत्र मदिरारामसुखगन्धयोः स्वगन्धतिरोधानेन रामामुखतद्गण्डूषमद्यगन्धस्वीकारात्तद्गुणयोस्तत्रोत्तरस्यात्मविशेषकत्वेन पूर्वसापेक्षत्वादङ्गाङ्गिभावेन सङ्करः । 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः'। इति तल्लक्षणात्॥२०॥

**जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।**
**नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः॥ कुलकम् ॥ २१ ॥**

**जगादेति ।** वदनमेव छद्म कपटं यस्य तत् पद्मं वदनमेव पद्ममित्यर्थः । पद्मशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवः । तस्य पर्यन्तपातिनः प्रान्तसञ्चारिणः । मधु लिहन्तीति मधुलिहस्तान् मधुपान् । क्विप् । उदग्रैः उच्छ्रितैः दशनांशुभिः श्वैत्यं धावल्यं नयन् एव जगाद । तद्गुणालङ्कारः । तस्य मधुपसन्निधापकवदनापह्नवसापेक्षत्वात्तेन सङ्करः ॥ २१ ॥

रामो जगादेत्युक्तं किं तदित्याकाङ्क्षायामाह—

**यद्वासुदेवेनादीनमनादीनवमीरितम् ।**
**वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥ २२ ॥**

**यदिति ।** वासुदेवेन न दीनमित्यदीनम् अकातरम् न आदीनवोऽस्येत्यनादीनवं निर्दोषम् । 'दोष आदीनवो मतः' इत्यमरः । यद्वचः ईरितम् 'उत्तिष्ठमानस्तु परः' इत्यादिपक्षमाश्रित्य यदुक्तमित्यर्थः । तस्य वचसः सपदि क्रिया केवलं सद्योऽनुष्ठानमेवोत्तरम् । सिद्धान्तस्योक्तत्वादिति भावः ॥ २२ ॥

अथ तदेव प्रतिपादयिष्यन् अनन्यातिशयतयोपस्करोति—

**नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते ।**
**इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ २३ ॥**

**नैतदिति ।** लघु सङ्क्षिप्तमप्येतद्वचो भूयस्या बहुतरया । विस्तृतयापीत्यर्थः । "द्विवचनविभज्य" इत्यादिना ईयसुनि "बहोर्लोपो भू च बहोः" इतीकारलोपो बहोश्च भूरा-

देशः । वाचा नातिशय्यते नातिरिच्यते । गुर्वर्थत्वादिति भावः । शीङः कर्मणि लटि यक् "अयङ्यि क्ङिति" इति अयङादेशः । तथाहि इन्धनौघान् दहतीति इन्धनौघधक् काष्ठराशिदाहक'। भूयानपीत्यर्थ'। क्विपि धत्वे धत्वम् ( भष्भावः ) । अग्निस्त्विषा प्रभया पूरणं दर्पम् । अल्पीयासमपीति भाव । न अत्येति नातिक्रामति । तेजस' प्रभावत्त्वमिव वचसोऽर्थवत्त्वमलङ्घ्यत्वहेतुरित्यर्थ । अत्र समानधर्मबिम्बप्रतिबिम्बिततया दृष्टान्तालङ्कारः ॥ २३ ॥

यदि हरिवचो नातिशय्यते अल तर्हि तवापि वागारम्भैरत आह—

**संक्षिप्तस्याप्यतोऽस्यैव वाक्यस्यार्थगरीयसः ।**
**सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥ २४ ॥**

**संक्षिप्तस्येति** । अतो हरिवचसोऽनतिशयनीयत्वादेव सुविस्तरतराः प्रपञ्चतरा । "प्रथने वावशब्दे" इति घञः प्रतिषेधे 'ऋदोरप्' इत्यप् । मे वाच संक्षिप्तस्याऽल्पाक्षरस्याप्यर्थेन गरीयस सूत्रकल्पस्येत्यर्थ । 'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदु.' ॥ इति लक्षणात् । अस्यैव नान्यस्य भाष्यभूता भाष्यं समाः । नित्यसमासः । 'क्ष्मादौ जन्तौ भूत क्लीब समेऽतीते त्रिषु' इति वैजयन्ती । व्याख्यानरूपा भवन्त्वित्यर्थः । सूत्रव्याख्यानविशेषो भाष्यम् । "सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इति भाष्यलक्षणात् । मया तु तदेव विशेषप्रकाशनाय व्याख्यायते न त्वतिशयाय नत्याख्यायते इत्यदोष इत्यर्थः। उपमालङ्कार ॥ २४ ॥

इत्थं यान सिद्धान्तयित्वा तत्रोद्धवप्रतिरोधं हृदि निधाय त्रिभि प्रत्याचष्टे—

**विरोधिवचसो मूकान्वागीशानपि कुर्वते ।**
**जडानप्यनुलोमार्थान्प्रवाचः कृतिनां गिरः ॥ २५ ॥**

**विरोधीति** । कृतिनां कुशलाना गिरः । कर्त्र्य' । विरोधिवचसः प्रतिकूलवादिनो वागीशान्वाक्पतीनपि । 'वागीशो वाक्पति समौ' इत्यमरः । मूकान्निर्वाचः कुर्वते जडयन्तीत्यर्थः । अनुलोमोऽनुकूलोऽर्थोऽभिधेयं येषां तेऽनुलोमार्थाः अनुकूलवादिनस्तान् जडानन्धानपि प्रवाचः प्रगल्भवाचः कुर्वते । अतोऽस्मद्गिरः त्वदन्या इति भाव. । अत्र वागीशाना मूकीकरणाज्जडानां प्रवाक्त्वकरणाच्च शक्यवस्तुकरणरूपो विशेषोलङ्कार । असम्बन्धे सम्बन्धातिशयोक्तिप्रतिभोत्थापित इति सङ्कर ॥ २५ ॥

नन्वात्मवर्तिनेन स्वामिना 'बुद्धेः फलमनाग्रह' इति न्यायेन शास्त्रवचनं प्रतिकूलमपि ग्राह्यमेवेत्याशङ्क्याह—

**षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।**
**ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥ २६ ॥**

**षडिति** । दुष्टा मेधा येषां ते दुर्मेधसः. मन्दबुद्धयोऽपि । "नित्यमसिच् प्रजामेधयोः" इति समासान्तोऽसिच्प्रत्ययः । सन्धानौशनसादीनधीत्य पठित्वा गुणा सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्याः षट् । शक्तयः प्रभुत्वमन्त्रोत्साहाख्यास्तिस्रः । सिद्धयः पूर्वोक्तशक्तित्रयसाध्याः पुरुषार्थलाभात्मिका ताश्च तिस्रः प्रभुसिद्धिर्मन्त्रसिद्धिरुत्साहसिद्धिश्चेति । उदयाः वृद्धिक्षयावस्थानानि क्षत्रियन्यायेनोदया उच्यन्ते । तत्र वृद्धिक्षयौ स्वशक्तिसिद्धयोः पूर्वावस्थानादुपचयापचयौ स्थानं ते च त्रय इति व्याकर्तुं व्याख्यातुमलं समर्थाः । "पर्याप्तिवचनेष्वलमर्थेषु" इति तुमुन् । षड्गुणनिर्णयशक्तिविकलाना सन्ध्यादिरूपसङ्ख्यामात्रपाठकानाम् अशास्त्रज्ञत्वादुद्धवादयो न ग्राह्यवचना इत्यभिसन्धिः । अत्रामरः । 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रय । षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः । क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ' इति । तत्रारिविजिगीष्वोर्न्यर्थवशाकरणमैक्यं सन्धिः, विरोधो विग्रहः विजिगीषोरारिं प्रति यात्रा यानं तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम् । दुर्बलबलयोर्वाचिकमात्मसमर्पणं द्वैधीभावः । अरिणा पीड्यमानस्य बलवदाश्रयणं समाश्रयः, कोषदण्डोत्थं तेजः प्रभावः. कर्तव्यार्थेषु स्थेयान् प्रयत्न उत्साह, षड्गुणचिन्तनं मन्त्रः । गतमन्यदिति संक्षेपः ॥ २६ ॥

ननु प्रावोक्तार्थव्याख्यातैव शास्त्रज्ञः स एव ग्राह्यवचनश्चेत्याशङ्क्याह—

**अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ।**
**निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ २७ ॥**

**अनिर्लोडितेति** । अनिर्लोडितं नालोकितं कार्यं येन तस्य । कार्याकार्यमजानत इत्यर्थः । वाचोऽस्य सन्तीति वाग्मी वावदूकः । ' वाचो युक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ।' इत्यमरः । "वाचो ग्मिनिः" इति ग्मिनिप्रत्ययः । तस्य वाग्जालं वागाडम्बरो निमित्तात् लक्ष्यात् । 'वेध्यं लक्ष्यं निमित्तं च शरव्यं च समं विदुः' इति वैजयन्ती । अपराद्धेषोः स्खलितबाणस्य धनुः प्रहरणमस्येति धानुष्को धन्वी । "प्रहरणम्" इति ठक् "इसुसुक्तान्तात्कः" इति कः । 'अपराद्धपृषत्कोऽसौ लक्ष्याच्च्युतसायकः । धन्वी धनुष्मान् धानुष्कः' इत्यमरः । तस्य वल्गितमिव तथा निष्फलम् । कार्यज्ञस्य वचो ग्राह्यं न तु वाचालस्येति भावः ॥ २७ ॥

षाड्गुण्यादिपाठमात्रं न मन्त्र इति सिद्धे सम्प्रति स्वयं मन्त्रस्वरूपमाह—

**सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।**
**सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥ २८ ॥**

**सर्वेति** । सर्वाणि कार्याणि सन्ध्यादीनि शरीराणीव इत्युपमितसमासः । सौगतानामिवेति लिङ्गात्तेषु सर्वकार्यशरीरेषु सर्वेषु शरीरेष्विव सर्वकार्येष्वित्यर्थः । अङ्गानि स्कन्धा इवेत्युपमितसमासः । तेषां पञ्चकं मुक्त्वा स्कन्धपञ्चकमिवाङ्गपञ्चकं हित्वेत्यर्थः । पञ्च परिमाणमस्येति

पञ्चकम् । "सङ्ख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेषु" इति कप्रत्ययः । सुगतो भक्तिर्भजनीय एषा सौगता. बौद्धाः । "भक्तिः" इत्यण्प्रत्ययः तेषामन्य आत्मेव महीभृतामन्यो मन्त्रो नास्ति । कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, विपत्तिप्रतीकारः, कार्यसिद्धिश्चेति पञ्चाङ्गानि । यथाह कामन्दकः । 'सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ' ॥ इति । रूपवेदनाविज्ञानसञ्ज्ञासंस्कारा. पञ्च स्कन्धा । तत्र विषयप्रपञ्चो रूपस्कन्धः । तज्ज्ञानप्रपञ्चो वेदनास्कन्धः । आलयविज्ञानसन्तानो विज्ञानस्कन्धः । नामप्रपञ्च संज्ञास्कन्धः । वासनाप्रपञ्चः संस्कारस्कन्धः । एव पञ्चधा परिवर्त्तमानो ज्ञानसन्तान एवात्मा इति बौद्धाः । एव यथा बौद्धानां सर्वेषु शरीरेषु स्कन्धपञ्चकातिरिक्त आत्मा नास्ति तथा राज्ञामङ्गपञ्चकातिरिक्तो मन्त्रो नास्तीत्युपमालकारः । तच्चास्माक समग्रमेवेत्ययमेव यात्राकाल इति भावः ॥ २८ ॥

अथ मन्त्रितार्थक्रियाविलम्बे दोषमाह—

**मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि ।**
**चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ २९ ॥**

**मन्त्र इति** । सवृतैर्गुप्तैः सर्वाङ्गैः पूर्वोक्तैरुपायादिभिरुरःस्थलादिभिश्च उपलक्षितोऽपि सर्वाङ्गसंवृतोऽपीत्यर्थः । मन्त्रो विचार अधीरो भीरु युध्यत इति योधो भट इव पचाद्यच् । परेभ्योऽन्येभ्योऽरिभ्यश्च । ' पर दूरान्यमुख्येषु परोऽरिपरमात्मनो. ' । इति वैजयन्ती । भेदो विदारणं तृतीयगामित्व च तस्य शङ्कया चिर स्थातु विलम्बितुमित्यर्थ । न सहते न क्षमः । "शकधृष" इत्यादिना तुमुन्प्रत्ययः । अतो न विलम्बितव्यमन्यथा मन्त्रभेदे कार्यहानिः स्यादिति भावः ॥ २९ ॥

किञ्च नीतिसर्वस्वपर्यालोचनयापि न विलम्बः कार्य इत्यभिप्रेत्याह—

**आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती ।**
**तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥ ३० ॥**

**आत्मोदय इति** । आत्मन उदयो वृद्धिः परस्य शत्रोर्ज्यानिर्हानिः । "वीज्याज्वरिभ्यो निः" इत्यौणादिको निः प्रत्ययः । इति द्वयम् इद परिमाणमस्या इति इयती एतावती । "किमिदम्भ्या वो घः" इति वतुपो वस्य घश्च "उगितश्च" इति ङीप् । नीतिः नीतिसङ्ग्रहः एतद्व्यतिरिक्तो न कश्चिन्नीतिपदार्थोऽस्तीत्यर्थः । यदन्यत् षाड्गुण्यादिवर्णन तत्सर्वमस्यैव प्रपञ्च इत्याह । तदिति तद्द्वयमूरीकृत्याङ्गीकृत्य । 'ऊरीकृतमुररीकृतमङ्गीकृतम् ' इत्यमरः । "ऊर्यादिच्विडाचश्च" इति गतिसञ्ज्ञायाम् "कुगतिमादयः" इति समासे क्त्वो ल्यप् । कृतिभिः कुशलैः वाचस्पत्यम् वाग्मित्वम् । कस्कादित्वादलुक् सत्वे "षष्ठ्याः पतिपुत्र"

[1] ग्लानिरित्यपि पाठः ।

इत्यादिना सत्यमिति स्वामी । तत्र । तस्य छन्दोविषयत्वात् । ब्राह्मणादित्वात् भावे ष्यञ् प्रत्ययः । प्रतायते विस्तार्यते । कर्मणि लट् " तनोतेर्यकि " इत्यात्वम् । तस्मादात्मोदयार्थिभिः अविलम्बाच्छत्रुरुच्छेत्तव्यः । तत्रान्तरीयत्वात्तस्येति भावः ॥ ३० ॥

ननु लब्धोदयस्य किं परोच्छित्त्येत्यत्राह—

**तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ।**
**पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥ ३१ ॥**

**तृप्तियोग इति** । महीयसा महात्मना परेणापि प्रभूतेनापि महिम्ना ऐश्वर्येण तृप्तियोगः सन्तोषलाभो न । अत्र तृप्त्यभावे पूर्णः सन् चन्द्रोदयाकाङ्क्षी । वृद्ध्यर्थमिति भावः । महार्णवो दृष्टान्तः । दृष्ट अन्तो निश्चयो यस्मिन् स दृष्टान्तो निदर्शनमुपमानमिति यावत् । राज्ञा वृद्ध्यावलम्बुद्धिर्न कार्या । " असन्तुष्टा द्विजा नष्टा सन्तुष्टाश्च महीभुजः । सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना " ॥ इति न्यायादिति भावः । नाय दृष्टान्तालङ्कारः । बिम्बप्रतिबिम्बभावेनौपम्यस्य गम्यत्वे तस्योत्थानात् । किन्तु दृष्टान्तशब्देन तस्याभिधानादुपमालङ्कारः ॥ अत एव दृष्टान्तोदाहरणनिदर्शनरूपा शब्दा न प्रयोक्तव्या पौनरुक्त्यापत्तेरित्येकावल्यलङ्कारः ३१

तथापि सन्तोष दोषमाह—

**सम्पदा सुस्थिरम्मन्यो भवति स्वल्पयापि यः ।**
**कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ३२ ॥**

**सम्पदेति** । यः स्वल्पयापि सम्पदा सुस्थिरमात्मानं मन्यत इति सुस्थिरम्मन्यः स्वस्थमानी भवति । " आत्ममाने खश्च " इति खश्प्रत्यये मुमागमः । तस्याल्पसन्तुष्टस्य तां स्वल्पसम्पदं कृतकृत्यस्तावतैव कृतार्थः विधिर्दैवमपि न वर्धयति अहमिति मन्ये । पौरुषहीनाद्दैवमपि जुगुप्सते । तत्प्रवृत्ते. परमर्द्धिप्राप्तिरिति भावः ॥ ३२ ॥

किञ्च पराक्रमलब्ध एवोदयो नान्यलब्ध इत्याह—

**समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः ।**
**प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ ३३ ॥**

**समूलेति** । मानिनः अभिमानिनः । परान् शत्रून् समूलं हत्वा समूलघातम् । अघ्नन्तः । अनुन्मूलयन्त इत्यर्थ. । " समूलाकृतजीवेषु हन्कृञ्ग्रहः " इति णमुल्प्रत्ययः, " कषादिषु यथाविध्यनुप्रयोगः " इति हन्तेरनुप्रयोगः । नोद्यन्ति किन्तु हत्वैवोद्यन्तीत्यर्थः । तत्र हत्वैवोदये अन्धयतीत्यन्धं गाढं तमोऽन्धतमसम् । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः " अवसमन्धेभ्यस्तमसः " इत्यच्प्रत्यय. । प्रध्वंसितमन्धतमसं येन सः । उदयात्प्रागिति भावः । रविरुदाहरणं दृष्टान्तः ॥ अत्रापि दृष्टान्तोऽत्र महार्णव इतिवदुपमालङ्कारो न तु दृष्टान्त इति द्रष्टव्यम् ॥ ३३ ॥

किञ्चानुच्छिन्नशत्रोः प्रतिष्ठैव दुर्घटेत्याह—

**विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।**
**अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥ ३४ ॥**

**विपक्षमिति** । विपक्षं शत्रुमखिलीकृत्य । खिलमुत्सन्नमकृत्वा । अनुन्मूल्येत्यर्थः । प्रतिष्ठा दुर्लभा खलु । तथाहि । उदकम् । कर्तृ । धूलिम् । स्वपरिभाविनीमितिभावः । पङ्कतामनीत्वा । नाधः कृत्वेत्यर्थः । नावतिष्ठते । किन्तु नीत्वैव तिष्ठतीत्यर्थः । " समवप्रविभ्यः स्थः " इत्यात्मनेपदम् । वाक्यभेदेन प्रतिबिम्बानपेक्षो दृष्टान्तालङ्कारः ॥ ३४ ॥

नन्वयं शिशुपाल एकाकी नः किं करिष्यतीत्याशङ्क्याह—

**ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ।**
**पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥ ३५ ॥**

**ध्रियत इति** । एकोऽपि रिपुर्यावत् ध्रियते अवतिष्ठते । "धृङ् अवस्थाने " इति धातो स्तौदादिकात्कर्तरि लट् " रिङ्शयग्लिङ्क्षु " इति रिङादेशः । तावत्तदवधि सुखं कुतः । ' यावत्तावच्च साकल्येऽवधौ ' इत्यमरः । तथाहि । सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः । ' तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ' इत्यमरः । " स्त्रीभ्यो ढक् " । असुरद्रुहां देवानां पुरः अग्रे सोमं क्लिश्नाति बाधते । प्राचुर्यात्सोमग्रहणं सूर्यं चेति भावः । तस्मादेकोऽपि शत्रुरुच्छेत्तव्य इति भावः । ' अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत् ' । इति तात्पर्यम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३५ ॥

ननु क्षुद्रोऽयं चैद्यः किं नः करिष्यतीत्याशङ्क्य तस्य बलवत्तां वक्तुं मित्रामित्रबलाबलविवेकं तावत्करोति—

**सखा गरीयाञ्छत्रुश्च कृत्रिमस्तौ हि कार्यतः ।**
**स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥ ३६ ॥**

**सखेति** । क्रियया उपकारापकारान्यतररूपया निर्वृत्तः कृत्रिमः । " ड्वितः क्त्रिः " " क्त्रेर्मम्नित्यम् " सखा सुहृत् शत्रुश्च कृत्रिमो गरीयान् । कुतः । हि यस्मात्तौ कृत्रिममित्रशत्रू कार्यतः उपकारापकाररूपकार्यवशात् । निवृत्ताविति शेषः । उक्तकार्योपाधेर्यावज्जीवमनपायादनयोर्मित्रामित्रभावोऽपि अनपायीति गरीयस्त्वमिति भावः । सहजप्राकृतौ तु नैवमित्याह स्यातामिति । सह जातः सहजः एकशरीरावयवत्वात् तत्र सहजं मित्रं मातृष्वसेयपितृष्वसेयादिः सहजशत्रुस्तु पितृव्यतत्पुत्रादिः । प्रकृत्या सिद्धः प्राकृतः पूर्वोक्तसहजकृत्रिमलक्षणरहित इत्यर्थः । तत्र विषयान्तरः प्राकृतः शत्रुः तदनन्तरः प्राकृतं मित्रम् । अपिरत्यर्थे । तौ सहजप्राकृतौ शत्रुमित्रे च स्यातां तावात्मकार्यवशादनियमेनोभयरूपतामापद्येते न कृत्रिमशत्रुमित्रे कृत्रिमः शत्रुः शत्रुरेव

मित्रं च मित्रमेवेति कृत्रिमावेव मित्रामित्रौ गरीयांसौ न तु सहजौ नापि प्राकृतावित्यर्थः। अनेन कृत्रिमस्य सर्पापवादीति सिद्धम् ॥ ३६ ॥

एवं चेदस्माकं पैतृष्वसेयः शिशुपालः सहजमित्रत्वात्सन्धातव्यो न तु यातव्य इत्यत आह—

**उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा।**
**उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ३७ ॥**

**उपकर्त्रेति**। उपकर्त्रा उपकारकारिणा अरिणापि। सहजेन प्राकृतेन वेति शेषः। सन्धिः कार्यः। अरित्वापवादेन कृत्रिममित्रताया बलीयस्या यावज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः। एवमपकारिणा मित्रेणापि। सहजेन प्राकृतेन वेति शेषः। सन्धिर्न कार्यः। मित्रत्वापवादेन कृत्रिमशत्रुताया बलीयस्या यावज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः। ननु साक्षादरिणा सन्दध्यान् मित्रेण कथं विरुन्ध्यादित्याशङ्क्य क्रियया तयोर्वैपरीत्याददोष इत्याह। हि यस्मादुपकारापकारावेव तयोर्मित्रामित्रयोर्लक्षणं स्वरूपं लक्ष्यं द्रष्टव्यम्। उपकर्तैव मित्रम् अपकर्तैव शत्रुरित्यर्थः। तस्मात्सहजमित्रत्वेऽपि चैद्यः क्रियया शत्रुत्वात् यातव्य एवेति भावः ॥ ३७ ॥

अथ चैद्यस्य कृत्रिमशत्रुत्वमनुभिगाह—

**त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे।**
**बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ ३८ ॥**

**त्वयेति**। हे हरे। रुक्मिणीं हरता। बन्धुभिस्तस्मै प्रदत्ता राक्षसधर्मेणोद्वहतेत्यर्थः। 'राक्षसो युद्धहरणात्' इति याज्ञवल्क्यः। 'गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ' इति मनुः। त्वया चैद्यो विप्रकृतः। विप्रियं प्रापितः। तथाहि बद्धमूलस्य रूढमूलस्य वैरतरोः स्त्रियो महत् प्रधानं मूलम्। हि निश्चये। रूपकसंसृष्टोऽयं सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३८ ॥

अथ तेनापि त्वं विप्रकृत इत्याह—

**त्वयि भौमं गते जेतुमरौत्सीत्स पुरीमिमाम्।**
**प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव ॥ ३९ ॥**

**त्वयीति**। त्वयि भूमेरपत्यं पुमांसं भौमं नरकासुरं जेतुं गते सति स चैद्य इमां पुरीं द्वारकां प्रोषितोऽर्यमा सूर्यो यस्यास्तां मेरोस्तटीं सानुमन्धकार इवारौत्सीत् रुद्धवान्। रुधेरनिटो लुङि रूपम्। उपमालङ्कारः ॥ ३९ ॥

अपकारान्तरमाह—

**आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत्।**
**कथापि खलु पापानामलमश्रेयसे यतः ॥ ४० ॥**

**आलप्येति** । स चैद्यो बभ्रोर्यादवभेदस्य दारान् भार्याम् । 'भार्या जायाथ . दाराः स्यात्तु कुटुम्बिनी' इत्यमरः । अपाहरत् इति यदिदं दारापहरणम् आलप्योच्च नालपनीयमित्यर्थः । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वाप्रत्यये समासे ल्यबा-यतः । पापानां पाप्मनां कथनमुच्चारणमपि । "चिन्तिपूजिकथिकुम्बि" इत्यादिना अप्रत्यय अश्रेयसेऽनर्थायालं समर्थम् । 'नमः स्वस्ति" इत्यादिना चतुर्थी । अत्र निषिध्यमानस्य निषेधनसमर्थनात्कार्येण कारणसमर्थकोऽर्थान्तरन्यासः ॥ ४० ॥

फलितमाह—

**विराद्ध एवं भवता विराद्धा बहुधा च नः ।**
**निर्वर्त्यतेऽरिः क्रियया स श्रुतश्रवसः सुतः ॥ ४१ ॥**

**विराद्ध इति** । एवं भवता विराद्धः विप्रकृतः । राधेरनिटः कर्मणि क्तः । बहुधा नोऽस्माकं च विराद्धा विप्रकर्ता । श्रुतश्रवा नाम हरेः पितृष्वसा तस्याः सुतः । पैतृष्वसेयत्वात्सहजामित्रमपीति भावः । स चैद्यः क्रियया पूर्वोक्तान्योन्यापकारक्रियया अरिर्निर्वर्त्यते कृत्रिमः शत्रुः क्रियते । अतो बलीयस्त्वादनुपेक्ष्य इति भावः ॥ ४१ ॥

अत्राप्युपेक्षायां दोषमाह—

**विधाय वैरं सामर्षे नरोऽरौ य उदासते ।**
**प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ ४२ ॥**

**विधायेति** । ये नराः पुमांसः 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' । इत्यमरः । सामर्षे प्रागेव सरोषे अरौ वैरं विधाय स्वयं चापकृत्येत्यर्थः । उदासते उपेक्षन्ते । ते नराः कक्षे गुल्मे । 'कक्षस्तु गुल्मे दोर्मूले पापे जीर्णवने तृणे' इति वैजयन्ती । उदर्चिषम् अग्निं प्रक्षिप्य अभिमारुतम् । अभिमुख्येऽव्ययीभावः । शेरते स्वपन्ति । तद्वन्नाशहेतुरित्यर्थः । "शीङो रुट्" इति रुडागमः । अत्र ये उदासते ते शेरते इति विशिष्टोदासीन्यशयनयोर्वाक्यार्थयोर्निर्दिष्टैकत्वासम्भवात्सादृश्यलक्षणायामसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिर्वृत्तिरिति निदर्शनाभेदः । न चायं दृष्टान्तः । वाक्यभेदेन प्रतिबिम्बकारणाक्षेपे तस्योत्थानात् । अत्र तु वाक्यार्थे वाक्यार्थसमारोपाद्वाक्यैकवाक्यतायां तदभाव इत्यलङ्कारसर्वस्वकारः ॥ ४२ ॥

तथापि बान्धवत्वात् सोढव्य इत्याशङ्क्याह—

**मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।**
**क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥ ४३ ॥**

**मनागिति** । यः क्षमी सहनः "शमित्यष्टाभ्यो घिनुण्" इति घिनुण् प्रत्ययः । स सोढ मनागल्पम् । अभ्यावृत्तावपीति भावः । अभ्यावृत्त्यासकृद्वा अनल्पत्वेऽपीति भावः । विराध्यन्तमपकुर्वाणं कामं भृशं क्षाम्यतु क्षम्यताम् । सम्भावनायां लोट् । "शमामष्टानां दीर्घः"

---

१ 'सहते' इत्यपि साधु. ।

क्रियासमभिहारेण भृशं पौनःपुन्येन चेत्यर्थः । न च पुनाक्येऽप्यनेकार्थत्वं दोषाय । विराध्यन्त क क्षमेत सहेत सोढुं शक्नुयात् । न कोऽपीत्यर्थ. । " शकि लिङ् " इति शक्यार्थे लिङ् । 'क्षमूष् सहने' दैवादिकश्च ॥ ४३ ॥

ननु सर्वदा क्षमैव पुंसो भूषणम् अतोऽपराधेऽपि क्षन्तव्यमत आह—

**अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः ।**
**पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ४४ ॥**

**अन्यदेति** । अन्यदा सुरतव्यतिरिक्ते काले योषितो लज्जेव पुंसोऽन्यदा अपरिभवे क्षमा शमो भूषणम् । परिभवे तु योषितः सुरतेषु वैयात्य धार्ष्ट्यमिव । 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः । पराक्रम. पौरुष भूष्यतेऽनेनेति भूषणम् आभरणम् । एव च क्रियावचनत्वाविरोध इति वल्लभोक्त प्रत्युक्तम् ॥ ४४ ॥

अथ परिभवेऽप्यपराक्रमे त्रिभिर्निन्दामाह—

**मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ।**
**तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ ४५ ॥**

**माजीवन्निति** । यः परस्यापकर्तुरवज्ञया अमानेन यद्दुःख तेन दग्धस्ततोऽत एव माजीवन् गर्हितजीवी सन् । 'माङ्याक्रोशे " इति लटः शत्रादेशः । जीवति प्राणान्धारयति । जनन्या क्लेशकारिण गर्भधारणप्रसवादिवेदनाकारिणः । तद्व्यतिरिक्तार्थक्रियाहीनस्येत्यर्थः । तस्या जननमजननिरनुत्पत्तिरेवास्तु । जननीक्लेशनिवृत्त्यर्थमिति भाव । " आक्रोशे नञ्यनिः " इति नञ्पूर्वाज्जनिधातोरनिप्रत्ययः ॥ ४५ ॥

**पादाहतं यदुत्थाय मूर्द्धानमधिरोहति ।**
**स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ ४६ ॥**

**पादेति** । यद्रजो धूलि. पादेनाहत सत् उत्थायोड्डीय मूर्द्धानमाहन्तुरेव शिरोऽधिरोहति आक्रमति तद्रजः । अचेतनमपीति भाव. । अवमाने सत्यपि स्वस्थात्सन्तुष्टाद्देहिनः चेतनाद्वरं श्रेष्ठम् । व्यतिरेकालङ्कार' ॥ ४६ ॥

**असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः ।**
**यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ ४७ ॥**

**असम्पादयत इति** । किञ्च जाति. ब्राह्मणत्वादिः क्रिया इज्याध्ययनादिः गुणः शौर्यादि. तैः साधनैः । करणे तृतीया । कञ्चिदर्थं सुकृतकीर्त्यादिपौरुषार्थमन्यत्र गोत्वपाचकत्व-शौक्ल्यादिभिः स्वाभिधेयभूतैः करणै. कञ्चिदर्थं व्यवहाररूप प्रयोजनमसम्पादयतः । उभयत्र

---

१ 'शमो' इति वा पाठः ।

नाद्रजात्याद्यसम्भवादिति भावः । पुसो जन्म सत्तालाभः यदृच्छाशब्दवत् इच्छा[illegible] जात्यादिप्रवृत्तिनिमित्तशून्यस्य डित्थादिशब्दस्येव । नत्र तस्येव " इति वतिप्र[illegible] 'स्वेच्छा यदृच्छा स्वच्छन्द. स्वैरता चेति ते समाः' । इति केशवः । सज्ञायै केवल [illegible] मेव एकत्र पारिभाषिक किञ्चिन्नाममात्रम् अनुभवितुम् अन्यत्र तादृक्नामनुभवितुमित्यर्थः ॥ ४७

एवमपौरुष दूषयित्वा पौरुष भूषयति-

**तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता ।**
**अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ ४८ ॥**

**तुङ्गत्वमिति** । अद्रौ पर्वते तुङ्गत्वमौन्नत्यमस्तीति शेषः । 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति' इत्यादिभाष्यात् । भवन्ती पूर्वाचार्याणां लटः सज्ञा । इतरा अगाधता नास्ति । सिन्धौ समुद्रे अगाधता गम्भीरतास्ति इद तुङ्गत्व नास्ति । मनस्विनि वीरे तु अलङ्घनीयताहेतुरलङ्घ्यत्वकारण तदुभय तुङ्गत्वमगाधता च । तस्मादद्रिसिन्धुभ्यामधिको मनस्वीति व्यतिरेकालङ्कारः ॥ ४८ ॥

सम्प्रति शत्रौ मार्दवमनर्थायेत्याह-

**तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।**
**हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ४९ ॥**

**तुल्य इति** । स्वर्भानु. राहु अपराधे तुल्येऽपि भानुमन्त सूर्य चिरेण ग्रसते हिमांशु चन्द्रमाशु शीघ्र ग्रसते गिलतीति यत् । 'ग्रसिते गिलित गीर्णम्' इत्यभिधानात् तत् म्रदिम्नो मार्दवस्य फल स्फुटम् । " पृथ्वादिभ्य इमनिज्वा" इतीमनिच्प्रत्ययः । तस्माद्विपक्षे तीव्रेण भवितव्यम् । अन्यथा मृदुः सर्वत्र बाध्यत इति भाव । एतच्च प्रस्तुतमप्रस्तुतार्केन्दुकथनेन सारूप्यात्प्रतीयते इत्यप्रस्तुतप्रशसाभेदोऽयम् । 'अप्रस्तुतस्य कथनात्प्रस्तुत यत्र गम्यते । अप्रस्तुतप्रशसेय सारूप्यादिनियन्त्रिता' इति लक्षणात् ॥ ४९ ॥

एतदेव भङ्ग्यन्तरेणाह-

**स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि ।**
**निदर्शनमसाराणां लघुर्बहुतृणं नरः ॥ ५० ॥**

**स्वयमिति** । असाराणा दुर्बलाना निदर्शन दृष्टान्त. अत एव ईषदसमाप्त तृणं बहुतृणम् । तृणकल्पमित्यर्थः । "विभाषा सुपो बहुच् पुरस्तात्तु" इति बहुच्प्रत्ययः प्रकृतेः पूर्वं च भवति 'स्यादीषदसमाप्तौ तु बहुच् प्रकृतिलिङ्गकः' इति वचनात् प्रकृतिलिङ्गता । लघुर्निष्पौरुषो नरोऽल्पेऽपि परो वायुरिवेत्युपमितसमासः । बहुतृणमिति स्पष्टोपमासाहचर्यात्कल्पब्देश्यदेशीयदेश्यादिति दण्डिना कल्पबादीनामौपम्यवाचकेष्वभिधानात् । तस्मिन्नुपेयुषि प्राप्ते सति स्वय प्रणमते स्वयमेव प्रह्वीभवति । " कर्मवत्कर्मणा तुल्यक्रिय. " इति कर्मवद्भावात " [illegible] "

इत्यात्मनेपदम् । " न दुहस्नुनमां यक्चिणौ " इति यक्प्रतिषेधः । वायुना तृणमिवाल्पीयसापि रिपुणा लघुरक्लेशेन परिभूयत इत्यर्थः । उपमालङ्कारः ॥ ९० ॥

पुनः पौरुषे गुणमाह—

**तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।**
**पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥ ९१ ॥**

**तेजस्वीति** । दवीयानपि दूरस्थोऽपि । "स्थूलदूर" इत्यादिना पूर्वगुणश्चणादिपरलोपौ । तेजस्विनां मध्ये गण्यते सङ्ख्यायते । तथाहि । पञ्चाग्निसाध्यं तपो यस्य स तथा तस्य पञ्चतपसः पञ्चाग्निमध्ये स्थितस्य तपनोऽर्को जातवेदसामग्नीनां पञ्चमः पञ्चानां पूरणः । पञ्चमो जातवेदा भवतीत्यर्थः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ९१ ॥

गुणान्तरं च व्यतिरेकेणाह—

**अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् ।**
**कथङ्कारमनालम्बा कीर्तिर्द्यामधिरोहति ॥ ९२ ॥**

**अकृत्वेति** । उच्चैरुन्नतेषु विद्विषां मूर्धसु हेलया पादमकृत्वा अनिधाय " अनन्तर्वे इति निषेधात्समासेऽपि न ल्यबादेशः । कीर्तिः कथङ्कारं कथमित्यर्थः । "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् " इत्यनर्थकादेव करोतेः कथम्पूर्वाण्णमुल् । अनालम्बा निराधारा कीर्तिः दिवमधिरोहति । न कथञ्चिदित्यर्थः । किञ्चिन्निःश्रेण्यादिकं विनानाक्रम्योच्चसौधस्य दुरारोहत्वादिति भावः । तस्मात्कीर्तिमिच्छता पौरुषमेवाश्रयणीयम् इति श्लोकतात्पर्यम् । कीर्तितद्वतोरभेदोपचारात्समानकर्तृतानिर्वाहः । अत्र प्रस्तुतायाः कीर्तेर्विषयमहिम्ना अप्रस्तुतप्रासादारोहणस्त्रीव्यवहारप्रतीतेः समासोक्तिः ॥ ९२ ॥

पौरुषमेवाश्रयणीयमित्यत्रान्वयव्यतिरेकदृष्टान्तावाचष्टे—

**अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।**
**केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ ९३ ॥**

**अङ्केति** । अङ्कमुत्सङ्गमधिरोपितो मृगो येन स चन्द्रमाः मृगलाञ्छनः मृगाङ्कः तथा निष्ठुरं यथा तथा क्षिप्तो हतो मृगयूथो मृगसमूहो येन स केसरी सिंहो मृगाधिपः । उभयत्रापि ख्यात इति शेषः । तस्माच्छत्रौ मार्दवं दुष्कीर्तये पौरुषं तु कीर्तये इति भावः । अत्राप्रस्तुतकथनात् प्रस्तुतार्थप्रतीतेरप्रस्तुतप्रशंसा ॥ ९३ ॥

ननु सामादिसुकरोपायमुपेक्ष्य किं पाक्षिकसिद्धिना दण्डेन । यथाह मनुः 'साम्ना भेदेन दानेन समस्तैरुत वा पृथक् । विजेतुं प्रयतेतारीन्न युद्धेन कदाचन' ॥ इति । तस्मात्सान्त्वमेव युक्तमित्याशङ्क्य द्वाभ्यां निराचष्टे—

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥ ५४ ॥

**चतुर्थोपायेति** । चतुर्थोपायसाध्ये दण्डसाध्ये रिपौ सान्त्वम् साम । 'सामसान्त्वमुभे समे' इत्यमरः । अपक्रिया अपकारः । तथा हि । स्वेद्य स्वेदार्हं स्वेदनकार्यार्हमित्यर्थः । 'स्वेदस्तु स्वेदने धर्मे' इति विश्वः । आमज्वरमपक्वज्वरं प्राप्य । 'आमो रोगे रोगभेदे आमोऽपक्वे तु वाच्यवत्' इति विश्वः । कः प्राज्ञः पण्डितः अम्भसा जलेन परिषिञ्चति । न कोऽपीत्यर्थः । ज्वरितस्याम्भःसेकवत् क्रुद्धस्य सान्त्वमुद्दीपकं स्यात् । अतो दण्डय एवेति भावः । वाक्यभेदेन प्रतिबिम्बकरणापेक्षो दृष्टान्तालङ्कारः ॥ ५४ ॥

सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ ५५ ॥

**सामेति** । सकोपस्य रूढवैरस्य तस्य चैद्यस्य सामवादाः प्रियोक्तयः सहसा प्रतप्तस्य क्वथितस्य सर्पिषो घृतस्य तोयबिन्दव इव प्रत्युत वैपरीत्येन दीपकाः प्रज्वलनकारिणः । न तु शान्तिकरा इत्यर्थः । तस्माद्दण्डय एव सः । मनुवचनं त्वप्ररूढवैरविषयमिति भावः ॥ ५५ ॥

एवं स्थिते केचिदुद्धवादयः प्रत्याचक्षीरन् तान् प्रत्याह-

गुणानामायथातथ्यादर्थं विप्लावयन्ति ये ।
अमात्यव्यञ्जना राज्ञां दूष्यास्ते शत्रुसंज्ञिताः ॥ ५६ ॥

**गुणानामिति** । सन्ध्यादीनां गुणानामायथातथ्यात् तथात्वमनतिक्रम्य यथातथं यथायोग्यम् इति यावत् । 'यथार्थे तु यथातथम्' इत्यमरः । यथार्थेऽव्ययीभावः "स नपुंसकम्" इति नपुंसकत्वम् "ह्रस्वो नपुंसके" इति ह्रस्वत्वम् । ततो नञ्समासे अयथातथम् तस्य भावः आयथातथ्यं ब्राह्मणादित्वात् ष्यञ् प्रत्ययः । "यथातथयथापुरयोः पर्यायेण" इति विकल्पान्नञ्पूर्वपदवृद्धिः । तस्मादायथातथ्यादयथायोग्यत्वादन्यकालेऽन्यप्रयोगादित्यर्थः । अर्थं प्रयोजनं ये विप्लावयन्ति निघ्नन्ति कार्यहानिं कुर्वन्तीत्यर्थः । अमात्यानां व्यञ्जनं चिह्नं येषां ते तथोक्तास्तद्वेषधारिण इत्यर्थः । "अव्ययो बहुव्रीहिर्व्यधिकरणे जन्माद्युत्तरपदः" इति वामनः । वस्तुतस्तु शत्रुरिति संज्ञा एषां सञ्जाता शत्रुसंज्ञिताः शत्रव एव ते कूटमन्त्रिणो राज्ञां दूषयितुमर्हाः दूष्या गर्ह्यास्त्याज्या इति यावत् । "कृत्यानां कर्त्तरि वा" इति षष्ठी । अतः स्वोक्तम् । प्रतिरोद्धव्यमिति भावः ॥ ५६ ॥

ननु यातव्योऽपि काले यातव्य इत्याशङ्कयायमेव काल इत्याह-

स्वशक्त्युपचये केचित्परस्य व्यसनेऽपरे ।
यानमाहुस्तदासीनं त्वामुत्थापयति द्वयम् ॥ ५७ ॥

**स्वेति** । केचिद् वृद्धाः स्वस्य शक्त्युपचये सामर्थ्यातिरेके यानं यात्रामाहुः । यथाह कामन्दकः । 'प्रायेण सन्तो व्यसने रिपूणां यातव्यमित्येव समादिशन्ति । तथा विपक्षे व्यसनानपक्षी क्षमो द्विषन्तं मुदितः प्रतीयात्' इति । अपरे वृद्धाः परस्य शत्रोर्व्यसने विपदि । 'व्यसनं विपदि भ्रंशे' इत्यमरः । यानमाहुः । अत्र मनुः । 'तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः' इति । तदुभयमुक्तपक्षद्वयं कर्तृ । आसीनमनुभुञ्जानम् । "ईदासः" इति शानजाकारस्यैकारादेशः । त्वामुत्थापयति प्रेरयति । तदुभयलाभादीदृक् कालो न कदापि लभ्यत इत्यर्थः ॥ ९७ ॥

तत्र स्वशक्त्युपचयं तावल्लक्षयति—

**लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः ।**
**यादवाम्भोनिधीन्रुन्धे वेलेव भवतः क्षमा ॥ ९८ ॥**

**लिलङ्घयिषत इति** । लोकान् लङ्घयितुमिच्छतो लिलङ्घयिषतः । लङ्घयतेः सन्नन्ताल्लटः शतरि शत् । अलङ्घ्यान् स्वयं दुर्लङ्घ्यान् । कुतः । अलघीयसः अतिगुरून् अत एव यादवा अम्भोनिधय इवेत्युपमितसमासः । तान् यादवाम्भोनिधीन् भवतः क्षमा तितिक्षा वेलेव कूलमिव । 'वेला कूलेऽपि वारिधेः' इति विश्वः । रुन्धे प्रतिबध्नाति । अन्यथा प्रागेव सर्वं संहरेयुरिति भावः ॥ ९८ ॥

अभ्युच्चयश्रायमपरः यदक्लेशेनैव ते विजयलाभ इत्याह—

**विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम् ।**
**फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥ ९९ ॥**

**विजय इति** । सेनायाः । कर्त्र्याः । विजयः साक्षिमात्रे उदासीने एव फलभाजि त्वयि समीक्ष्योक्ते साङ्ख्योक्ते । 'साङ्ख्यं समीक्ष्यम्' इति त्रिकाण्डः । आत्मबुद्धेर्महत्तत्त्वस्य मूलप्रकृतेः प्रथमविकारस्य । कर्त्र्याः । भोगः सुखदुःखानुभव इवापदिश्यतां व्यवह्रियताम् । भृत्यजयपराजययोः स्वामिगामित्वादिति भावः । साङ्ख्या अप्याहुः । कर्तैव भवत्युदासीन इति सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिरिति च ॥ ९९ ॥

अथ परस्य व्यसनमाह—

**हते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि ।**
**चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥ १०० ॥**

**हत इति** । हिडिम्बरिपुणा भीमेन द्वयोर्मात्रोरपत्यं पुमान् द्वैमातुरः "मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः" इत्यण् प्रत्ययः । उकारश्चान्तादेशो रेफपरः । तस्मिन् राज्ञि जरासन्धे । स हि ताभ्यां पत्नीभ्याम् अर्धशः प्रसूतो जरया नाम पिशाच्या सन्धितश्चेति कथयन्ति । युधि हते सति चिरस्य चिरकालेन । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' । इत्यमरः । मित्रव्यसनवान्

मित्रअशरावानिति यावत् । 'व्यसन विपदि भ्रंशे' इत्यमरः । दमघोषाज्जातो दमघोषजर्न्मयः सुखेन दम्यत इति सुदम. एकाकित्वात्सुसाध्य इत्यर्थ ॥ ६० ॥

कष्टश्चाय पक्षोऽभ्युपेत्यवादिनोक्तः । वस्तुतस्तु शूराणाम् अभियान एव इष्ट शास्त्रमवादी । यथाह कामन्दक. 'यदा समस्त प्रसभ निहन्तु पराक्रमादूर्जितमन्यमित्रम् । तदाभियायाद्विदितानि कुर्वन्नुपान्तत कर्षणपीडनानि' ॥ इतीत्यभिप्रेत्याह-

नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये ।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥ ६१ ॥

**नीतिरिति** । परः शत्रुः आपदि गम्यो गमनार्हः नीतिरिति यत्तदापदि गमन मानिन. शौर्याभिमानिनः । ह्रिये । लज्जाकरमित्यर्थ । किन्तु पूर्ण उपचितगात्रः स शत्रुस्तस्य मानिन । विधुश्चन्द्र विधु तुदति हिनस्तीति विधुन्तुदो राहु."विध्वरुषोस्तुदः" इति खश् प्रत्यये मुमागम । तस्येवोत्सवाय अत एव बलिना बलवानेव यातव्यः । बलिनश्च वयमिति भावः ॥ ६१ ॥

तर्हि पूर्वोदाहृतमन्वादिशास्त्रविरोध स्यादित्याशङ्क्याह-

अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ ६२ ॥

**अन्यदिति** । अन्यदुच्छृङ्खलमनर्गलम् । प्रसह्य पीडनक्षममिति भावः । सत्त्व बलम् अन्यत् । शास्त्रेण मन्वादिशास्त्रेण नियन्त्रितम् उदाहृत परव्यसनकाले सत्त्वमन्यत् । तयो सापेक्षत्वनिरपेक्षत्वाभ्या मिथो विरोधान्नैकशास्त्रत्व सम्भवतीत्यर्थ. । अत्र दृष्टान्तमाह । तेजस्तिमिरयोः समानमधिकरण ययोस्तयोर्भाव. सामानाधिकरण्यम् एकाश्रयत्व कुत. । न कुतश्चित् । तयो सहावस्थानविरोधादिति भाव. । तस्मादुभयोरुदितानुदितहोमवद्भिन्नविषयत्वादितरेतरशास्त्रविरोधो न बाधक इति भाव ॥ ६२ ॥

तर्हि नः किमिदानीं कार्यमत आह-

इन्द्रप्रस्थगमस्तावत्कारि मा सन्तु चेदयः ।
आस्माकदन्तिसान्निध्याद्वामनीभूतभूरुहः ॥ ६३ ॥

**इन्द्रप्रस्थेति** । इन्द्रप्रस्थस्य गमः पार्थिनगरस्य गमनम् । "ग्रहवृदृनिश्चिगमश्च" इत्यप्प्रत्यय । माकारि तावन्न क्रियतामेवेत्यर्थः । 'यावत्तावत्परिच्छेदे कार्त्स्न्ये मानावधारणे' । इति विश्व । कृञः कर्मणि लुङ् "माङि लुङ्" इत्याशीरर्थे लुङ् "न माङ्योगे" इत्यट्प्रतिषेधः । किन्तु चेदय चेदिदेशा' अस्माकमिमे आस्माका । "युष्मदस्मदोरन्यतरस्या खञ् च" इति विकल्पादण् प्रत्यय' । "तस्मिन्नणि च युष्माकास्माकौ" इत्यस्माकादेश. । सन्निधिरेव सान्निध्यम् । स्वार्थे ष्यञ् प्रत्यय । आस्माकाना दन्तिनां सान्निध्यात् वामनीभूता शाखाभङ्गात् खर्वीभूता भूरुहो वृक्षा येषा ते तथोक्ताः सन्तु । चेदियात्रैव क्रियतामित्यर्थ' । सा च प्रस्तुता प्रस्तुतेनैव

स्वकार्येण गम्यत इति पर्यायोक्तालङ्कारः । ' कारणं गम्यते यत्र प्रस्तुतात्कार्यवर्णनात् । प्रस्तुतेनैव सम्बन्धात्पर्यायोक्तः स उच्यते ' ॥ इति लक्षणात् ॥ ६३ ॥

**निरुद्धवीवधासारप्रसारा गा इव व्रजम् ।**
**उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः ॥ ६४ ॥**

**निरुद्धेति** । किञ्च दाशार्हाः यादवाः वीवधो धान्यादिप्राप्तिः आसारः सुहृद्बलं प्रसारस्तृणकाष्ठादेः प्रवेशः । ' धान्यादेर्वीवधः प्राप्तिरासारस्तु सुहृद्बलम् । प्रसारस्तृणकाष्ठादेः प्रवेशः ' । इति वैजयन्ती । ते निरुद्धा यैस्ते तथोक्ताः अन्यत्र निरुद्धौ वीवधाना पर्याहारापरनाम्ना स्कन्धवाह्यक्षीराद्याहरणसाधनभारविशेषाणाम् आसारप्रसारौ प्रवेशनिर्गमौ यैस्ते तथोक्ताः । ' विवधो वीवधो भारे पर्याहाराध्वनोरपि ' । इति हेमचन्द्रः । व्रजं गोष्ठम् ' व्रजः स्याद्गोकुलं गोष्ठम् । इति वैजयन्ती । गा इव माहिष्मतीं पुरीं द्विषोऽरीनुपरुन्धन्तु व्रजे गा इव माहिष्मत्यामरीन् आवृण्वन्त्वित्यर्थः । " दुह्याच्पच्दण्ड्रुधि " इति द्विकर्मकत्वम् । तत्र पुरीव्रजावकथितं कर्म अन्यदीप्सितं कर्म ॥ ६४ ॥

तर्हि पार्थप्रार्थनायाः का गतिरित्याशङ्क्य उपेक्षैव गतिरित्याह—

**यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः ।**
**वयं हनाम द्विषतः सर्वः स्वार्थं समीहते ॥ ६५ ॥**

**यजतामिति** । पाण्डवो युधिष्ठिरो यजतां यागं करोतु । इन्द्रः स्वर्गमवतु रक्षतु । इनोऽर्कः । 'इनः पत्यौ नृपार्कयोः' । इति मेदिनी । तपतु प्रकाशताम् । वयं द्विषोऽरीन् हनाम मारयाम । " आडुत्तमस्य पिच्च " इत्याडागमः, सर्वत्र प्राप्तकाले लोट् । तथाहि सर्वो जनः स्वार्थं स्वप्रयोजनं समीहते अनुसन्धत्ते । इन्द्रादिसमान्योगक्षेमो नः पार्थ इत्यर्थः । अर्थान्तरन्यासः ॥ ६५ ॥

**प्राप्यतां विद्युतां सम्पत्सम्पर्कादर्करोचिषाम् ।**
**शस्त्रैर्द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः ॥ ६६ ॥**

**प्राप्यतामिति** । किञ्च द्विषतां शिरश्छेदेन प्रोच्छलता उद्गच्छता शोणितेनोक्षितैः सिक्तैः शस्त्रैरर्करोचिषां सम्पर्काद्विद्युतां सम्पत् लक्ष्मीः प्राप्यताम् । इति निदर्शनालङ्कारः ॥ ६६ ॥

**इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः ।**
**सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव ॥ ६७ ॥**

**इतीति** । इतीत्थं संरम्भिणः क्षुभितस्य बलभद्रस्य वाणीरालेख्यदेवताश्चित्रलिखितदेवताः सभायाः सदोगृहस्य भित्तीनां प्रतिध्वानैः प्रतिध्वनिव्याजेनेत्यर्थः । भयादन्ववदन् अन्वमोदयन्निवेत्युत्प्रेक्षा ॥ ६७ ॥

निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद्दृशा ॥ ६८ ॥

**निशम्येति** । अधःकृतमक्षजमिन्द्रियज ज्ञान येन सोऽधोक्षजो हरि ताः शेषस्य शेषावतारस्य बलभद्रस्य गा. वाच शेषगवी । 'गोरतद्धितलुकि' इति टच् । टित्त्वान्ङीप् । निशम्य श्रुत्वा । निशाम्यतीति श्रवणे तथा निशमयत्यपीति भट्टमल्ल । तत्र शाम्यतेर्ण्यि रूपम्।अन्यथा निशमय्येति स्यात् । अत एव वामन. "निशम्यनिशमय्यशब्दौ प्रकृतिभेदात्" इति । बृहता वाचा पत्यु' बृहस्पतेस्तस्य शिष्याय उद्धवायाभिधातु वक्त दशा दृक्संज्ञया प्रस्तावमवसरमदिशत अतिसृष्टवान् । 'प्रस्ताव' स्यादवसर' इत्यमर ॥ ६८ ॥

भारतीमाहितभरामथानुद्धतमुद्धवः ।
तथ्यामुतथ्यानुजवज्जगादाग्रे गदाग्रजम् ॥ ६९ ॥

**भारतीमिति** । अथ कृष्णानुज्ञानन्तरम् उद्धव आहितो भरोऽर्थगौरव यस्या ना ता तथ्या यथार्थां भारतीं वाचम् अनुद्धतमगर्वित यथा तथा गदस्याग्रज कृष्णम् । अग्रे पुरत इति प्रागल्भ्योक्तिः । उतथ्यस्य महर्षेरनुजो बृहस्पतिः । 'उतथ्यावरजो जीवः' इति विश्वः । तद्वत्तेन तुल्य जगाद । "तेन तुल्य क्रिया चेद्वति" इति वति । तद्धितगेयमुपमा ॥ ६९ ॥

किं जगादेत्याह-

सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना ।
निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥ ७० ॥

**सम्प्रतीति** । सम्प्रति मुसलपाणिना बलभद्रेण । केवल शूरेणेति ध्वनिः । उक्ते सति वक्तुमसाम्प्रतम् अयुक्तम् । असाधूक्तत्वादभ्याससमानयोगक्षेमप्रसङ्गादिति ध्वनि । साम्प्रतशब्दस्यार्हार्थत्वात्तद्योगे "शकधृष" इत्यादिना तुमुन् । तथाहि । लेखेन पत्रेणार्थे वाच्ये निर्धारिते निर्णीते सति वाचिक व्याहृतार्थां वाचम् । सन्देशवचनमित्यर्थ 'सन्देशवाग्वाचिक स्यात्' । इत्यमरः । "वाचो व्याहृतार्थायाम्" इति ठक् । उक्त्वा खलु । न वाच्य खल्वित्यर्थ । खल्वाद्य. प्रतिषेधे, अन्यो वाक्यालङ्कारे । 'निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु' इत्युभयत्राप्यमर' । "अलखल्वो. प्रतिषेधयो. प्राचां क्त्वा" इति क्त्वा प्रत्ययः। इह 'न पादादौ खल्वादय' इति निषेधस्योद्वेजकाभिप्रायत्वात् । नञर्थखलुशब्दस्यानुद्वेजकत्वात् नञ्वदेव पादादौ प्रयोगे न दूष्यतीत्यनुसन्धेयम् । लिखितार्थे वाचिकमिव बलोक्ते मदुक्तिरनवकाशेति वाक्यार्थप्रतिबिम्बकरणात् स्पष्टस्तावद्दृष्टान्त स्तुतिव्याजेन निन्दावगमात् व्याजस्तुतिश्च लक्षण चाग्रे वक्ष्यते ॥ ७० ॥

तर्हि किं तूष्णीम्भूतेन भाव्यम्, नेत्याह-

तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम् ।
तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः ॥ ७१ ॥

**तथापीति** । तथापि बलेन निर्णीतेऽपि ते तव मय्यपि बलभद्र इवेत्यपिशब्दार्थः । गुरावित्येव यद्गौरवमादरः तद्गौरव जल्पत' जल्पने प्रयोज्यकर्मणो मे प्रयोजककर्तृत्व प्रेरकत्व-मुपैति । अतो वक्ष्यामीत्यर्थः । न हि पण्डितैः सादर पृष्टस्य विशेषज्ञस्य अज्ञवत्तूष्णींभावो युक्त इति भाव ॥ ७१ ॥

ननु रामेणैव सर्व प्रपञ्चेनोक्तम्, सम्प्रति किं ते वाच्यमस्तीत्याशङ्क्य वृथाप्रपञ्चोऽयमिति हृदि निधाय स्तुवन्नाह त्रयेण—

**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ।**
**अनन्ता वाङ्मयस्याहो ! गेयस्येव विचित्रता ॥ ७२ ॥**

**वर्णैरिति** । कतिपयैः परिमितैर्वर्णैः पञ्चाशतैव मातृकाक्षरैः कतिपयैः सप्तभिरेव स्वरैर्नि-पादादिभिः ग्रथितस्य गुम्फितस्य वाङ्मयस्य शब्दजालस्य । ' एकाचोऽपि नित्य मयटमि-च्छन्ति " इति स्वार्थे मयट् । गीयत इति गेय तस्य गानस्येव विचित्रता रचनाभेदादनन्ता अपरिमिता भवतीत्यर्थः । अहो ! अतस्तेनसाधूक्तेऽपिविशेषानन्त्यात् ममापि वक्तव्यमस्तीत्ये-कोभाव । तस्य दुरुक्तत्वान्ममैवास्तीत्यन्य । प्रत्ययत्रयमिवोपादानादनेकैवेयमुपमा ॥ ७२ ॥

**बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।**
**अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥ ७३ ॥**

**बह्वपीति** । स्वेच्छया स्वप्रतिभानुसारेण प्रकीर्णमसङ्गत बह्वपि काम यथेष्टमभिधीयते किन्तु अनुज्झितोऽर्थसम्बन्धः पदार्थसङ्गतिर्यस्मिन् स प्रबन्ध सन्दर्भ दुरुदाहरो दुर्वच हरतेः खल् प्रत्यय । रामेण तु सङ्गतमेवोक्तमिति स्तुतिः । असङ्गतमेवोक्तमिति निन्दा च गम्यते ॥७३॥

**म्रदीयसीमपि घनामनल्पगुणकल्पिताम् ।**
**प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव ॥ ७४ ॥**

**म्रदीयसीमिति** । कुशलाः वक्तारोम्रदीयसीमतिसुकुमाराक्षरा श्लक्ष्णतरा च तथापि घनामर्थगुर्वीम् अन्यत्र सान्द्राम् । कदलीदलकल्पामित्यर्थः । अनल्पैर्बहुभिर्गुणैः श्लेषादिभिस्तन्तु-भिश्च कल्पिता रचिता निर्मिता च चित्रा शब्दादिविचित्रा विचित्ररूपा च वाच पटीं शाटीमिव प्रसारयन्ति । रामवागप्येवंविधेति स्तुतिः । रामवाक् तु नैवंविधेति निन्दा च गम्यते । अत्र श्लेषस्य शुद्धविषयासम्भवेन सर्वालङ्कारबाधकत्वादुपमाप्रतिभोत्थापित प्रकृताप्रकृतश्लेषोऽयमित्य-लङ्कारसर्वस्वकार. । एवञ्च पूर्णोपमाया निर्विषयत्वप्रसङ्गात् श्लेषप्रतिभोत्थापितेयमुपमैवेत्यन्ये ॥ ७४ ॥

अथोद्धव स्वसिद्धान्त वर्णयिष्यन् स्तुत्या गर्व परिहरन्हरिमभिमुखीकरोति—

**विशेषविदुषः शास्त्रं यत्तवोद्ग्राह्यते पुरः ।**
**हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव सा ॥ ७५ ॥**

**विशेषेति** । विशेष वेत्ति इति विशेषविद्वान् तस्य विशेषविदुषो विशेषज्ञस्य । गतिगम्यादि पाठात् द्वितीयासमासः । तत्र पुरोऽग्रे शास्त्र नीतिशास्त्रमुद्ग्राह्यते उपन्यस्यत इति यत् । 'उद्ग्राहितमुपन्यस्ते ' इति वैजयन्ती । सा तद्ग्रहणामित्यर्थ । विधेयप्राधान्यात् स्त्रीलिङ्गत्व वक्तुः उद्ग्राहयितु' परिचयस्थैर्ये अभ्यासदाढर्ये हेतुर्गुणनिका । आम्रेडितमेवेति यावत् । नतु वैदुष्यप्रकटनमिति भावः । " गुण आम्रेडने " " चौरादिकात् " ण्यासश्रन्थो युच् " इति युच्, ततः सञ्ज्ञाया कन्, कात्पूर्वस्येकार. ॥ ७५ ॥

सम्प्रति स्वमतमुपन्यस्यति-

**प्रज्ञोत्साहावतः स्वामी यतेताधातुमात्मनि ।**
**तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसम्पदः ॥ ७६ ॥**

**प्रज्ञेति** । अतोऽस्मात्कारणात् स्वमस्यास्तीति स्वामी प्रभु । ' स्वामिन्नैश्वर्ये " इति निपातः । प्रज्ञोत्साहौ मन्त्रोत्साहशक्ती आत्मनि स्वस्मिन्नाधातु सम्पादयितु यतेत । स्वयमुभयशक्तिमान् भवेदित्यर्थ' । कुत । हि यस्मात् तौ प्रज्ञोत्साहौ उदेष्यन्त्याः वर्त्स्यन्त्या. । जिगीषोरात्मन. सम्पदः प्रभुशक्तेर्मूलम् । अत्रोत्साहग्रहणदृष्टान्तार्थम् । यथोत्साहस्तथा मन्त्रोऽपि ग्राह्यो न तु केवलोत्साह इति बलभद्रापवाद ॥ ७६ ॥

उत्साहवत्प्रज्ञापि ग्राह्यो इत्युक्त तस्या प्रयोजनमाह-

**सोपधानां धियं धीराः स्थेयसीं खट्वयन्ति ये ।**
**तत्रानिशं निषण्णास्ते जानते जातु न श्रमम् ॥ ७७ ॥**

**सोपधानामिति** । ये धीरा धीमन्तः सोपधाना सविशेषाम् । युक्तियुक्तामित्यर्थ अन्यत्र सगेन्दुका सोपवर्हामित्यर्थ. । ' उपधान विशेषे स्याद्गेन्दुके प्रणयेऽपि च ' इति विश्व' । स्थेयसीं स्थिरतराम् अचपला द्रढीयसीं च । स्थिरशब्दादीयसुनि " प्रियस्थिर " इत्यादिना स्थादेशः । धिय खट्वयन्ति खट्वा पर्यङ्क कुर्वन्ति । आश्रयन्तीत्यर्थ 'शयन मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमर "तत्करोति तदाचष्टे" इति णिच् । धीरास्तत्र धीखट्वायामनिशमश्रान्त निषण्णा' विश्रान्ता सन्तो जातु कदाचिदपि श्रम खेद न जानते न विदन्ति । श्रम. खेदो ग्ल्यादेरिति लक्षणम् । धीपूर्वक एवोत्साह' सेव्यो न केवल इति सर्वथा धीराश्रयणीयेत्यर्थः । अत्र धिय आरोप्यमाणाया प्रकृतश्रमापनोदरूपोपकारपर्यन्ततया परिणामालङ्कार । 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम ' इति लक्षणात् ॥ ७७ ॥

अथ प्रज्ञाऽप्रज्ञयोर्द्वाभ्या वैषम्यमाह-

**स्पृशन्ति शरवत्तीक्ष्णास्तोकमन्तर्विशन्ति च ।**
**बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत् ॥ ७८ ॥**

अथ पूर्वश्लोके इतिशब्दपरामृष्टानन्तरात्रप्रभृत्युत्तरोत्तरक्रमभाविनः प्रभातवृत्तान्तानासर्गसमाप्ति वर्णयन्नाह—

**रतिरभसविलासाभ्यासतान्तं न यावन्नयनयुगममीलत्तावदेवाहतोऽसौ। रजनिविरतिशंसी कामिनीनां भविष्यद्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २ ॥**

**रतीति।** रतिरभसविलासानां सुरतसम्भ्रमलीलानाम् अभ्यासेनावर्तनेनतान्तं क्लान्तं नयनयुगं कर्तृ। कामिनामिति शेषः। यावन्नामीलन्न मुकुलीभवति तावदेवासौ रजनिविरतिशंसी निशावसानसूचक उच्चैर्मृदङ्गः कामिनीनां भविष्यता उत्तरक्षणभाविना विरहेण विहितः कृतो निद्राभङ्गो यस्मिन् कर्मणि तत्तथा तथा आहतस्ताडितः। अत्र विरहशब्देन सामर्थ्याच्चिन्ता लक्ष्यते। अन्यथा असतः साम्प्रतिकनिद्राभङ्गहेतुत्वायोगादिति। अत्र रतितान्तत्वरजनिविरतिशंसनयोर्विशेषणगत्या नेत्रानिमीलननिद्राभङ्गहेतुत्वात्पदार्थहेतुके काव्यलिङ्गे ॥ २ ॥

**स्फुटतरमुपरिष्टादल्पमूर्तेर्ध्रुवस्य स्फुरति सुरमुनीनां मण्डलं व्यस्तमेतत्। शकटमिव महीयः शैशवे शार्ङ्गपाणेश्चपलचरणकाब्जप्रेरणोत्तुङ्गिताग्रम् ॥ ३ ॥**

**स्फुटेति।** अल्पमूर्तेर्दूरत्वात्सूक्ष्मबिम्बस्य ध्रुवस्यौत्तानपादेः। 'ध्रुव औत्तानपादिः स्यात्' इत्यमरः। उपरिष्टात् स्फुटतरम् उज्ज्वलतरं व्यस्तं पर्यस्तमेतत् सुरमुनीनां सप्तर्षीणां मण्डलं शार्ङ्गपाणेः केशवस्य कृष्णस्य तवेत्यर्थः। शैशवे प्रचलितस्य चपलस्य चरणकाब्जस्याल्पचरणारविन्दस्य। "अल्पे" इत्यल्पार्थे कन्प्रत्ययः। प्रेरणया नोदनेनोत्तुङ्गितमुत्तुङ्गीकृतमग्रं यस्य तत् विपर्यासिताग्रमित्यर्थः। महीयो महत्तरं शकटमिव शकटाकारं शकटासुरशरीरमिव स्फुरति दीप्यते। उपमालङ्कारः। पुरा किल बाल्ये कृष्णः शकटरूपधारिणं शकटासुरं पादघातेन पातयामासेति पौराणिकी कथात्रानुसन्धेया ॥ ३ ॥

**प्रहरकमपनीय स्वं निदिद्रासतोच्चैः प्रतिपदमुपहूतः केनचिज्जागृहीति। मुहुरविशदवर्णां निद्रया शून्यशून्यां ददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥ ४ ॥**

**प्रहरकमिति।** स्वं स्वकीयं स्वपाल्यमित्यर्थः। प्रहर एव प्रहरको यामः। 'द्वौ यामप्रहरौ समौ' इत्यमरः। तमपनीय नीत्वा निदिद्रासता निद्रातुमिच्छता। निद्रातेः सन्नन्ताल्लटः शत्रादेशः। केनचिदतीतप्रहरपालेनेत्यर्थः। जागृहि प्रबुध्यस्वेति प्रतिपदं पदेपदे उच्चैरुपहूतो मनुष्योऽनन्तरयामिको मुहुर्निद्रया अविशदवर्णाम् अस्पष्टाक्षरामत एव शून्यशून्या शून्यप्रकारामनर्थ-

प्रायामित्यर्थः । "प्रकारे गुणवचनस्य" इति द्विर्भावः "कर्मधारयवदुत्तरेषु" इति कर्मधारयवद्भावादव्ययत्वसुपो लुक् । गिरमयमह जागर्मीति प्रतिवाचंददपि प्रयच्छन्नपि । "नाभ्यस्ताच्छतु" इति नुमागमप्रतिषेधः । अन्तरन्तःकरणे नो बुध्यते न जागर्ति बुध्यतेर्दैवादिकात्कर्त्तरि लट् । अत्राप्रबोधप्रतिवचनदानयोर्विरोधे अपिशब्द । निद्राह्वानास्या तत्समाधानाद्विरोधाभासोऽलङ्कारः ॥ ४ ॥

**विपुलतरनितम्बाभोगरुद्धे रमण्याः शयितुमनधिगच्छन्
जीवितेशोऽवकाशम् । रतिपरिचयनश्यन्नैद्रतन्द्रः कथंचिद्ग-
मयति शयनीये शर्वरीं किङ्करोतु ॥ ५ ॥**

**विपुलेति** । रमण्या विपुलतरस्य नितम्बस्याभोगेन विस्तारेण रुद्धे आक्रान्ते शयनीये शयितुमवकाशमनधिगच्छन् अलभमानो जीवितेशः प्रेयान् रतिपरिचयेन पुनः पुनः सुरतावृत्त्या नश्यन्ती निवर्त्तमाना निद्राया इय नैद्री निद्राप्रयुक्ता तन्द्रा आलस्य यस्य स तथाभूतः सन् शर्वरीङ्कथञ्चिद्गमयति कृच्छ्रेण नयति किङ्करोतु किमन्यत्कुर्यात् । शयनानवकाशे सुरतमेव कालयापनोपाय इति तत्रैव प्रवृत्त इति भावः । अत्र शयनीयस्येद्धरोधासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः । तादृग्रोधस्य विशेषणगत्या शयनावकाशानधिगमहेतुत्वात्काव्यलिङ्गभेद इति सङ्करः ॥ ५ ॥

**क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगानुदधिमहति राज्ये
काव्यवद्दुर्विगाहे । गहनमपररात्रप्राप्तबुद्धिप्रसादाः कवय इव
महीपाश्चिन्तयन्त्यर्थजातम् ॥ ६ ॥**

**क्षणेति** । क्षण शयिताः सुरतश्रमापनोदाय विपुसाः विबुद्धाः तदैव प्रबुद्धाः । यथाकाल प्रबुद्धत्वादिति भाव । क्षणशयितविबुद्धा । स्नातानुलिप्तवत्, "पूर्वाकाल" इत्यादिना समासः । महीपाः कवय इव अपररात्रे । रात्रेः पश्चिमयाम इत्यर्थः । "पूर्वापरा" इत्यादिना एकदेशिसमासे समासान्त अच् । "रात्राह्नाहाः पुंसि" इति पुंस्त्वम् । तत्र प्राप्तबुद्धिप्रसादाः लब्धबुद्धिप्रकाशाः सन्तः उदधिमहति समुद्रगम्भीरे एकत्र तुरगादिभिरपरत्र रसभावादिभिश्चेति भाव. । अत एव दुर्विगाहे दुष्प्रवेशे राज्ये काव्ये इव काव्यवत् । "तत्र तस्येव" इति वतिप्रत्ययः प्रयोगान् । सामाद्युपायानुष्ठानानि अन्यत्रार्थगुणसाधुशब्दगुम्फान् कल्पयन्तस्तर्कयन्त. । 'ब्राह्मे मुहूर्ते उत्थाय चिन्तयेदात्मनो हितम' इति स्मरणादिति भावः । गहन दुष्प्रापमन्यत्र दुर्दर्शमर्थजात पुरुषार्थजातम् । त्रिवर्गमित्यर्थः । अन्यत्र वाच्यलक्ष्यव्यङ्ग्यरूपमभिधेयजात चिन्तयन्ति विचारयन्ति । इवशब्दस्योपलक्षणत्वात्काव्यवदिति वतिप्रत्ययेऽप्यनेकशब्दार्थगता श्रौती पूर्णा वाक्यार्थोपमा । काव्यवदिति तद्धितगता कवय इवेति समासगता चेति संकीर्णा ॥ ६ ॥

**क्षितितटशयनान्तादुत्थितन्दानपङ्कप्लुतबहुलशरीरं शायत्येष भूयः। मृदुचलदपरान्तोदीरितान्दूनिनादङ्गजपतिमधिरोहः पक्षकव्यत्ययेन ॥ ७॥**

**क्षितीति**।। क्षितितट भूतलमेव शयनान्तः शयनस्थान तस्मादुत्थित सुप्तोत्थितमित्यर्थः अत एव दानपकप्लुतबहुलशरीर मदकर्दमोक्षितमहाकाय गजपतिमेषः अधिरोहतीत्यधिरोह आरोहणः। पचाद्यच्। मृदु मन्द चलता अपरान्तेन पश्चिमपादेनोदीरित उत्पादितोऽन्दूनिनाद शृङ्खलारवो यस्मिन् कर्म्मणि तद्यथा तथा। पक्ष एव पक्षक. पार्श्व'। 'पक्ष पार्श्वगरुत्साध्यसहायफलभित्तिषु' इति वैजयन्ती। तस्य व्यत्ययेन पार्श्वान्तरेणेत्यर्थः। भूय शाययति शयन कारयति। "गतिबुद्धि" इत्यादिना अणि कर्त्तुः कर्मत्वम्। स्वभावोक्तिरलङ्कारः ॥ ७ ॥

**द्रुततरकरदक्षाः क्षिप्तवैशाखशैले दधति दधनि धीरानारवान्वारिणीव। शशिनमिव सुरौघाः सारमुद्धर्तुमेते कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति ॥ ८॥**

**द्रुतेति**। द्रुततरकरा अतिलघुहस्तास्ते च ते दक्षाश्च वल्लवा गोपाला'। 'आभीरः स्यान्महाशूद्रो गोपालो वल्लवस्तथा' इति वैजयन्ती। विशाखा प्रयोजनमस्येति वैशाखो मन्थनदण्ड। 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमर। "विशाखाषाढादण् मन्थदण्डयो" इत्यण् प्रत्ययः। वैशाख' शैल इवेत्युपमितसमासः। साहचर्य्यात्क्षिप्तो वैशाखशैलो यस्मिन् धीरान् गम्भीरानारवान्दधति दधनि दध्नि। "विभाषा ङिश्योः" इति विकल्पादल्लोपाभाव'। वारिणीव सुरौघाः शशिनमिव सार नवनीतमुद्धर्तुम् उ कष्टमुदधिरिव गुर्वीम्। "उपमानानि सामान्यवचनैः" इति समास'। ता कलशिं कुम्भीमेते लोडयन्ति मथ्नन्ति। एषापि पूर्वतरवत् पूर्णा वाक्यार्थोपमा वाक्यसमाससंकीर्णा च ॥ ८ ॥

**अनुनयमगृहीत्वा व्याजसुप्ता पराचीरुतमथ कृकवाकोस्तारमाकर्ण्य कल्य। कथमपि परिवृत्ता निद्रयाऽन्धा किल स्त्री मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ ९ ॥**

**अनुनयमिति**। अनुनय प्रियप्रार्थनामगृहीत्वा नाङ्गीकृत्य पराची पराङ्मुखी व्याजेन कपटेन सुप्ता स्त्री अथ कल्ये प्रभाते। 'प्रत्यूषोऽहर्मुख कल्यम्' इत्यमर.। कृकवाको कुक्कुटस्य। 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः। "कृके वच. कश्च" इत्युण् प्रत्यय। तारमुच्चै' रुत कूजितमाकर्ण्य कथमपि गात्रजृम्भणादि व्याजेन परिवृत्ता सम्मुखीभूता निद्रयान्धा किल अजानतीव मुकुलितनयनैव मीलिताक्षी सत्येव प्राणनाथमाश्लिष्यति। एषा कलहान्तरिता ॥ ९ ॥

गतमनुगतवीणैरेकतां वेणुनादैः कलमविकलतालं गायकैर्बोधहेतोः । असकृदनवगीतं गीतमाकर्णयन्तः सुखमुकुलितनेत्रा यान्ति निद्रां नरेन्द्राः ॥ १० ॥

गतमिति । अनुगतवीणैरनुसृतवीणैर्वीणासंवादिभिर्वेणुनादैर्वंशस्वरैः एकतामेकरूपतां गतं कलमव्यक्तमधुरम् अविकलोऽविसंवादी तालः कांस्यादितालो यस्य तत् बोध एव हेतुस्तस्य बोधहेतोर्बोधकारणेन बोधनार्थमित्यर्थः । फलस्यापि कारणत्वमिच्छाद्वारा स्वर्गादिवत् फलरागस्य तत्साधनप्रवृत्तिहेतुत्वात् षष्ठी । गायकैर्वैतालिकैरनवगीतमगर्हितम् । 'अवगीतं तु निर्वादे मुहुर्दृष्टेऽपि गर्हिते' इति विश्वः । गीतं गीयमानं वस्तु । आवृत्तिर्वा गीतशब्दस्य । गीतं गानं समाकर्णयन्तो नरेन्द्राः सुखेन गानसुखेन मुकुलितनेत्रा निमीलिताक्षाः सन्तः निद्रां यान्ति भजन्ति । वृत्त्यनुप्रासोऽलङ्कारः ॥ १० ॥

परिशिथिलितकर्णग्रीवमामीलिताक्षः क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव । रिरसयिषति भूयः शष्पमग्रे विकीर्णं पटुतरचपलोष्ठः प्रस्फुरत्प्रोथमश्वः ॥ ११ ॥

परीति । अयमश्वः परिशिथिलितं स्रस्तमुक्तं कर्णग्रीवं कर्णौ च ग्रीवा च यस्मिन् कर्मणि तद्यथा तथा आमीलिताक्षः ऊर्ध्वे जानुनी यस्य स ऊर्ध्वज्ञुः ऊर्ध्वजानुस्तिष्ठन्नित्यर्थः । 'ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्' इत्यमरः । "ऊर्ध्वाद्विभाषा" इति जानुशब्दस्य ज्ञुरादेशः । क्षणं स्वप्नं निद्रामनुभूय उत्तमाश्वलक्षणमेतत् । भूयः पुनरपि पटुतरौ ग्रासग्रहणसमर्थौ चपलौ चञ्चलौ चोष्ठौ यस्य स सन् प्रस्फुरत्प्रोथं प्रस्फुरमाणघोणं यथा तथा । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः । अग्रे विकीर्णं क्षिप्तं शष्पं घासं 'शष्पं बालतृणं घासः' इत्यमरः । रिरसयिषति रसयितुमास्वादयितुमिच्छति । रसयतेः सन्नन्ताल्लट् । स्वभावोक्तिरलङ्कारः । 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' ॥ ११ ॥

उदयमुदितदीप्तिर्याति यः सङ्गतौ मे पतति न वरमिन्दुः सोऽपरामेष गत्वा। स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः ॥ १२ ॥

उदयमिति । य इन्दुः मे मम सङ्गतावुदितदीप्तिः प्रवृद्धद्युतिः सन् उदयमुदयाद्रिम् अभ्युदयञ्च याति स इन्दुरेषोऽपरामपश्चिमाशां पराङ्गनाञ्च गत्वा पतति अस्तमेति पातित्यञ्च गच्छति न वरमनर्हमित्यर्थः । इति सद्यः साभ्यसूयं यथा तथा पूर्वकाष्ठा प्राची सैवाङ्गना पूर्वनायिका च गम्यते । तस्याः स्मितरुचिर्मन्दहासकान्तिरिवैषा प्रभा विशदं निर्मलं स्फुरति प्रकाशते । प्राच्यामीषद्विशदा प्रभा प्रादुरभूदित्यर्थः । अत्र प्राचीगतप्राभातिकप्रभायामिन्दोः पराङ्गनासङ्गपातित्यनिमित्ता चेतनधर्मस्मितरुचित्वोत्प्रेक्षा पूर्वकाष्ठाङ्गनाया इति रूढिव्यूढेत्यनयोरङ्गाङ्गिभावेन सङ्करः॥ १२॥

**चिररतिपरिखेदप्राप्तनिद्रासुखानां चरममपि शयित्वा पूर्वमेव प्रबुद्धाः। अपरिचलितगात्राः कुर्वते न प्रियाणामशिथिलभुजचक्राश्लेषभेदं तरुण्यः॥ १३॥**

**चिरेति**। चरममपि शयित्वा पश्चात् सुप्ता अपि पूर्वमेव प्रबुद्धाः। 'सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते। नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता' इति स्मरणादिति भावः। तथापि तरुण्यः अपरिचलितगात्राः अस्पन्दवपुष्काः सत्यः चिररतिपरिखेदेन प्राप्तनिद्रासुखानां प्रियाणाम् अशिथिलो गाढो यो भुजचक्रेण परस्परभुजवलयेनाश्लेषः तस्य भेदं विश्लेषं विस्रंसनं न कुर्वते किन्त्वाश्लिष्यैव स्थिताः। अन्यथा तन्निद्राभङ्गः स्यात्। 'शयानं न प्रबोधयेत्' इति निषेधात्स्कन्दनभयादिति भावः। रतिश्रमोऽत्र सञ्चारी तदनुभावो निद्रा॥ १३॥

**कृतधवलिमभेदैः कुंकुमेनेव किंचिन्मलयरुहरजोभिर्भूषयन्पश्चिमाशाम्। हिमरुचिररुणिम्ना राजते रज्यमानैर्जरठकमलकन्दच्छेदगौरैर्मयूखैः॥ १४॥**

**कृतेति**। हिमरुचिश्चन्द्रः अरुणिम्ना अस्तमयरागेण हेतुना रज्यमानैर्लोहितायमानैः रञ्जेर्दैवादिकात्कर्त्तरि शानच् "अनिदिताम्" इति नलोपः। त्रीणि रज्यति राजति लोहितायति चात्मन इति भट्टमल्लः। जरठस्य परिणतस्य कमलकन्दस्य छेदा इव गौराः शुभ्राः। छेदग्रहणम् धावल्यार्थम्। 'गौरः पीते सितेऽरुणे' इति विश्वः। तैर्मयूखैः कुंकुमेन किञ्चित्कृतो धवलिमभेदो धावल्यभङ्गो येषां तैरीषद्भग्नस्वधावल्यैः मलयरुहरजोभिश्चन्दनरेणुभिरिव पश्चिमाशां प्रेयसीमिवेति भावः। भूषयन् राजते उपमालङ्कारः॥ १४॥

**दधदसकलमेकं खण्डितामानमद्भिः श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः। कलरवमुपगीते षट्पदौघेन धत्तः कुमुदकमलषण्डे तुल्यरूपामवस्थाम्॥ १५॥**

**दधदिति**। एकं कुमुदषण्डमानमद्भिर्मुकुलीभवद्भिः पलाशैर्दलैरसकलमर्द्धं खण्डितां क्षीयमाणामित्यर्थः। श्रियं दधत् अपरं कमलषण्डमुच्छ्वसद्भिः विकसद्भिः पलाशैरपूर्णां वर्द्धमानां श्रियं दधत् षट्पदौघेन कलरवं यथा तथा उपगीते उभे अपीत्यर्थः। कुमुदकमलषण्डे कुमुदानां कमलानां च षण्डे कदम्बे। 'कदम्बे षण्डमस्त्रियाम्' इत्यमरः। तुल्यरूपामवस्थां धत्तः दधाते अत्र क्षयवृद्ध्योरर्थप्रवृत्तेरैकरूप्ये कस्य क्षयः कस्य वा वृद्धिरिति दुर्ग्रहमिति भावः। अत्रोभयविशेषणानां तुल्यावस्थाधारणहेतुकत्वात् काव्यलिङ्गम्। तेन द्वयोः क्रमेणोपमानोपमेयभावरूपोपमेयोपमा व्यज्यते॥ १५॥

मदरुचिमरुणेनोद्गच्छता लम्भितस्य त्यजत इव चिराय स्थायिनीमाशु लज्जाम्। वसनमिव मुखस्य स्रंसते संप्रतीदं सितकरकरजालं वासवाशायुवत्याः ॥ १६ ॥

**मदेति** । सम्प्रति सितकरस्येन्दो. इदं करजल कर्तृ । उद्गच्छता उद्यता अरुणेन अनूरुणा मदरुचि तत्तुल्या रुचिमरुणिमानमित्यर्थ' । अत एव निदर्शनालकार. । लम्भितस्य प्रापितस्य । लभेर्ण्यन्तात्कर्मणि क्त. "लभेरशब्लिटोः" इति नुमागमः । अत एव चिराय स्थायिनीं लज्जामाशु त्यजत इव मुखप्रकाशनादियमुत्प्रेक्षा । वासवाशा प्राची तस्या एव युवत्या मुखस्य प्राग्भागस्याननस्य च वसनमिवावकुण्ठनपट इव स्रसते गलति । रक्ता स्त्रिय. पाटलमुखा निर्लज्जा स्रस्तवस्त्राश्च भवन्तीति भाव । अत्र मुखस्येति प्राग्भागवदनयोरभेदाध्यसायात् श्लेषमूलातिशयोक्ति· । तया पूर्वोक्तनिदर्शनोत्प्रेक्षाभ्यां चानुगृहीता वसनमिवेत्युत्प्रेक्षेति सकरः ॥ १६ ॥

अविरतरतलीलायासजातश्रमाणामुपशममुपयान्तं निस्सहेऽङ्गनानाम्। पुनरुषसि विविक्तैर्मातरिश्वावचूर्ण्य ज्वलयति मदनाग्निं मालतीनां रजोभिः ॥ १७॥

**अविरतैरिति** । अविरतरतलीलायासेनाविच्छिन्नसुरतक्रीडाप्रयासेन जातश्रमाणामङ्गनानां सम्बन्धिनि निस्सहत इति निस्सहे अक्षमे । पचाद्यच् । अङ्गे उपशनमुपयान्तं शाम्यन्तं मदन एवाग्निस्त पुनरुषसि मातरि अन्तरिक्षे श्वयति वर्द्धते इति मातरिश्वा । 'श्वन्नुक्षन्'·इत्यादिना औणादिको निपातः । विविक्तैरमलैर्नोर्भ्रैश्च मालतीना जातीकुसुमानाम् । 'सुमना मालती जाति.' इत्यमरः । रजोभिः परागैः करीषैरिवेति भाव । अवचूर्ण्य अवध्वस्य सयुज्येति भावः । ज्वलयत्युद्दीपयति प्राभातिकमालतीवातस्पर्शात्पुनरुद्बुद्धो मदन इत्यर्थः ॥ १७ ॥

अनिमिषमविरामा रागिणां सर्व्वरात्रं नवनिधुवनलीलाः कौतुकेनातिवीक्ष्य । इदमुदवसितानामस्फुटालोकसम्पन्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥ १८ ॥

**अनिमिषमिति** । इद पुरोवर्त्ति अस्फुटा सूर्यतेजोभिभवान्मन्दायमाना आलोकसम्पत प्रकाशसम्पत्तिर्यस्य तत् अन्यत्र निद्राभिभवादनुद्बुद्धविषयावधानशक्तिक दीपस्येद दैपमर्चिर्ज्वाला 'ज्वालाभासोर्न पुस्यर्चिः' इत्यमरः । सर्वस्या रात्राविति सर्वरात्रम् "पूर्वकाल" इत्यादिना समासः । "अहस्सर्व" इत्यादिना समासान्तः, "रात्राह्नाहाः पुंसि" इति पुल्लिङ्गता "अत्यन्तसयोगे द्वितीया" इति द्वितीया । अविरामाः अविच्छिन्नाः रागिणा कामिना कामिनीगा च । "पुमान् स्त्रिया" इत्येकशेषः । नवाः निधुवनलीलाः सुरतविलासान् । 'व्यवायो ग्राम्यधर्मो मैथुन निधुवन रतम्' इत्यमरः । कौतुकेन न निमिषतीत्यनिमिष यथा तथा । पचाद्यच् । कुटा-

दित्वान्न गुणः । अतिवीथ्य अत इव सनिद्रम् उदवसिताना गृहाणा सम्बन्धि । 'गृह गेहोदवसित वेश्म सद्म निकेतनम्' इत्यमर । नयनमिवेत्युत्प्रेक्षा । घूर्णते भ्रमति ॥ १८ ॥

**विकचकमलगन्धैरन्धयन्भृङ्गमालाः सुरभितमकरन्दं मन्द-मावाति वातः । प्रमदमदनमाद्यद्यौवनोद्दामरामारमणरभस-खेदस्वेदविच्छेददक्षः ॥ १९ ॥**

**विकचेति** । प्रमदमदनाभ्या हर्षमन्मथाभ्या माद्यन्तीना यौवनेनोद्दामानां च रामाणा स्त्रीणा रमणरभसखेदेन सुरतसरम्भश्रमेण य. स्वेदः तस्य छेदे हरणे दक्षो वातः प्रभातमारुत विकचकमलगन्धैर्भृङ्गमाला अन्धयन्नन्धा कुर्वन्मोहयन् । अन्धयते "तत्करोति" इति ण्यन्ता-ल्लटः शत्रादेश । सुरभित सुरभीकृतो मकरन्दो यस्मिन् कर्म्मणि तद्यथा तथा मन्दमावाति प्रचलन्ति । अत्र वृत्त्यनुप्रासोऽलङ्कार । "श्लेष प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्ति-रुदारत्वमोजःकान्तिसमाधय" इति आचार्य्योक्ता दश गुणा प्रायेणात्र सम्भवन्तीति निपुणै-रुन्नया ॥ १९ ॥

**लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्का-न्तनीलोत्पलाक्ष्यः । तिमिरमिव दधानाः स्रंसिनः केशपाशा-नवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥ २० ॥**

**लुलितेति** । लुलितनयनतारा. निद्राकलुषिताक्षिकनीनिका अन्यत्राप्रसन्ननक्षत्राः 'ऋक्षा-क्षिमध्ययोस्तारा' इति विश्व । वक्त्राणीन्दुबिम्बानीत्युपमितसमास । तिमिरमिवेत्यादिलिङ्गात् । अन्यत्र वक्त्राणीवेन्दुबिम्बानि । तानि क्षामाणि सुरतप्रभाताभ्या म्लानानि यासां ता: निद्रया स्वप्नेन मुकुलीभावेन क्रान्तानि नीलोत्पलानि अक्षीणीव नीलोत्पलानीव वाक्षीणि यासा ताः स्रंसिन केशपाशान् तिमिरमिवान्यत्र तु तानिव तिमिरं दधानाः अत एव रजनय इव स्थिताः अमूर्वारवध्वो वेश्या । 'वारस्त्री गणिका वेश्या' इत्यमर । अवनिपतिगृहेभ्यो यान्ति निर्यान्ति । श्लिष्टविशेषणेयमुपमेत्येके । श्लेष एवायमुभयविषयः । उपमा तु प्रतिभामात्रसारा. इत्यन्ये ॥ २० ॥

**शिशिरकिरणकान्तं वासरान्तेऽभिसार्य्य श्वसनसुरभिगन्धिः साम्प्रतं सत्वरेव । व्रजति रजनिरेषा तन्मयूखाङ्गरागैः परि-मलितमनिन्द्यैरम्बरान्तं वहन्ती ॥ २१ ॥**

**शिशिरेति** । एषा रजनिर्वासरान्ते रात्रौ शिशिरकिरणश्चन्द्रस्तमेव कान्तमभिसार्या-भिसृत्य । स्वार्थे णिच् । साम्प्रत श्वसनै तत्कालवातै. निश्वासैश्च सुरभिगन्धि सुगन्धि. अनि-न्द्यै मनोहरैर्मयूखैरेवाङ्गरागैः परिमिलित व्याप्त वासितञ्चाम्बरान्त नभः प्रान्त वस्त्रान्तञ्च-

वहन्ती भजन्ती सत्वरेव व्रजति । अत्रेन्दुतन्मयूखादीना कान्तत्वांगरागत्वादिरूपणावगमादेकदेशविवर्ति रूपकम् ॥ २१ ॥

**नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामप्युषां जागरित्वा । अयमपरदिशोऽङ्के मुंचति स्रस्तहस्तः शिशयिषुरिव पाण्डुं म्लानमात्मानमिन्दुः ॥ २२ ॥**

**नवेति** । अधिकरुचिरयमिन्दुर्नवकुमुदवनश्रियो हासः विकासः परिहासश्च स एव केलिःस्तस्याम्प्रसङ्गादासगादशेषामप्युषां सकलामपि रात्रिम् । 'विभावरी नक्तमुषा शर्वरी' इति विश्व । "अत्यन्तसंयोगे द्वितीया" । जागरित्वा जागरणं कृत्वा शिशयिषुः शयितुमिच्छुरिव । शेते सन्नन्तादुप्रत्यय । स्रस्तो हस्तो नक्षत्रविशेषः करश्च यस्य स सन् अपरदिशः पश्चिमदिशोऽङ्के समीपे उत्संगे च पाण्डु पाण्डुवर्ण म्लानं क्लान्तमात्मान स्वशरीर मुञ्चति । दक्षिणनायकः कयाचित्सह विहृत्य श्रान्तः कस्याश्चिदङ्के शेते तद्वदिति भावः । अत्र प्रहासकेल्यङ्ककरस्रंसनादिव्यवहारादिन्दुकुमुदवनश्रीपश्चिमाना नायकत्वप्रतीतेः समासोक्तिरलङ्कारः । विशेषणसाम्य तूपलक्षणमित्यलङ्कारसर्वस्वकारः । सा चोत्प्रेक्षासकीर्णा ॥ २२ ॥

**सरभसपरिरम्भारम्भसंरम्भभाजा यदधिनिशमपास्तं बल्लभेनांगनायाः । वसनमपि निशान्ते नेष्यते तत्प्रदातुं रथचरणविशालश्रोणिलोलेक्षणेन ॥ २३ ॥**

**सरभसेति** । अधिनिश निशाया विभक्त्यर्थेऽव्ययीभाव. । सरभसः सत्वर परिरम्भ एवारम्भो व्यापारस्तत्र सरम्भस्तद्भाजा वल्लभेनागनाया सम्बन्धि वसनम अपास्त तद्वसनं निशान्ते प्रभातेऽपि रथचरण चक्र तद्वद्विशालाया श्रोणौ लोल सतृष्णमीक्षण यस्य तेन वल्लभेन प्रदातु नेष्यते अत्र वसनाप्रतिदानस्य श्रोणीक्षणलौल्यहेतुकत्वात्काव्यलिगम् ॥ २३ ॥

**सपदि कुमुदिनीभिर्मीलितं हा क्षपापि क्षयमगमदपेतास्तारकास्ताः समस्ताः । इति दयितकलत्रश्चिन्तयन्नंगमिन्दुर्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ २४ ॥**

**सपदीति** । सपदि सद्यः कुमुदिनीभिर्मीलितम् । भावे क्तः । हा हन्त क्षपा रात्रिरपि क्षयमगमत् ता समस्तास्तारका अपेता इति शुचा शोकेन चिन्तयन्निव दयितकलत्रः प्रियभार्य इन्दु· कृशमशेप निश्शेष यथा तथा भ्रष्टशोभ नष्टप्रभमग वहति । कलत्रप्रियस्य युगपत्सकलकलत्रनाशे महान् शोको भवतीति भाव । अत्रेन्दोः प्रभातप्रयुक्ताङ्गकार्श्यशोभाभ्रंशयोर्युगपत्कुमुदिन्यादिसकलकलत्रनाशनिमित्तहेतुकत्वमुत्प्रेक्ष्यते ॥ २४ ॥

**व्रजति विषयमक्ष्णामंशुमाली न यावत्तिमिरमखिलमस्तन्ता-वदेवारुणेन । परपरिभवि तेजस्तन्वतामाशु कर्तुं प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ २५ ॥**

**व्रजतीति ।** अंशुमाली सूर्यः व्रीह्यादित्वादिनिप्रत्ययः । यावदक्ष्णा विषय भूमिं न व्रजति न दृश्यत इत्यर्थः । तावदेवारुणेनानूरुणा अखिल तिमिरमस्तमपास्त परेषाम्परिभवि-तिरस्कारकम् । " जिदक्षि " इत्यादिना इनिप्रत्ययः । तेजः प्रताप तन्वता प्रथयताम् अग्रे सरतीत्यग्रेसर पुरस्सरोऽपि । " पुरोऽग्रतोऽग्रेषु सर्तेः " इति टप्रत्ययः । विपक्षस्य शत्रोरुच्छेद कर्तु-माशु प्रभवति शक्नोति हि । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २५ ॥

**विगततिमिरपङ्कं पश्यति व्योम यावद्धुवति विरहखिन्नः पक्षती यावदेव । रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना सरिदपरतटा-न्तादागता चक्रवाकी ॥ २६ ॥**

**विगतेति ।** विरहेण खिन्न. रथचरणेन चक्रेण समाह्वस्तुल्याख्य तस्यैव समाह्वा नमाख्या यस्येति वा रथचरणसमाह्वश्चक्रवाक इत्यर्थ । ' कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामक. ' इत्यमर' । तिमिर पङ्कमिवेत्युपमितसमास । तद्विगतं यस्मात्तद्व्योम यावत्पश्येति यावदेव पक्षती पक्षमूले । 'स्त्री पक्षति पक्षमूलम्' इत्यमरः । "पक्षात्ति." इति तिप्रत्ययः । धुवति उत्प-तितुन्धुनोति । 'धू विधूनने' इति धातोस्तौदादिकत्वादुवङादेशः, तावदेवोत्पतनात् प्रागेव चक्रवाकी चक्रवाकस्य स्त्री । " जातेरस्त्रीविषयादयोपधात्" इति ङीप् । औत्सुक्येनोत्कण्ठया नुन्ना प्रेरिता सती सरितोऽपरतटान्तात्परभूमे सकाशादागता । एतेनानयोरुन्मनस्कता समश्चानुराग इत्युक्तम् अत्र रागौत्सुक्ययोरसभावयोस्तिर्यग्गतत्वेनाभासयोर्निबन्धनादूर्जस्वी नामालङ्कारः । 'रसभावत-दाभास प्रशमाना निबन्धने । रसवत्प्रेय ऊर्ज्जस्विसमाहितानि' इति लक्षणात् ॥ २६ ॥

**मुदितयुवमनस्कास्तुल्यमेव प्रदोषे रुचमदधुरुभय्यः कल्पिता भूषिताश्च । परिमलरुचिराभिर्न्यक्कृतास्तु प्रभाते युव-तिभिरुपभोगान्नीरुचः पुष्पमालाः ॥ २७ ॥**

**मुदितेति ।** प्रदोषे रात्रौ मुदितानि यूना मनासि याभिस्ता' मुदितयुवमनस्काः । "उरः-प्रभृतिभ्यः कप्" इति कप् । कल्पिता. उपभोगाय सम्पादिता भूषिता वलयवसनादिभिरुपस्कृताश्च उभय्यः उभयविधा. युवतयः पुष्पमालाश्च । "उभादुदात्तो नित्यम्" इति उभस्य अयज्जादेशः, "टिड्ढाणञ्" इत्यादिना ङीप् । तुल्यमेवाविशेष यथा तथा रुच शोभामदधुर्धृतवत्य । धात्रो लङ् । प्रभाते तूपभोगान्नीरुचो निष्प्रभाः पुष्पमालाः परिमलेन विमर्दगन्धेन रुचिराभि-रुपभोगादधिसुरभिर्भिर्युवतिभिर्न्यक्कतास्त्यक्ताः अवधीरिताश्च । अत्र पुष्पमालाभ्यो युवतीना साम्यो-क्तिपूर्वकविमर्दसहत्वेनाधिक्योक्तेर्व्यतिरेकः ॥ २७ ॥

विलुलितकमलौघः कीर्णवल्लीवितानः प्रतिवनमवधूताशेषशाखिप्रसूनः। क्वचिदयमनवस्थः स्थास्नुतामेति वायुर्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २८ ॥

**विलुलितेति** । वनेवने प्रतिवनम् । याथार्थ्येऽव्ययीभावः । विलुलिताः व्यालोलिताः कमलौघा येन स कीर्णा विक्षिप्ता वल्लीना माधव्यादीना वितानाः विस्तारा येन स. अवधूतान्यशेषशाखिनां वकुलचम्पकादीनां प्रसूनानि येन स तथापि क्वचित्पूर्वोक्तकमलवनादौ, कुत्रापि नास्त्यवस्था स्थितिरस्येत्यनवस्थः स्थितिमप्राप्तोऽयं वायुर्वधूनां कुसुमानां च विमर्देन सवर्षेण उद्गन्धिषु उद्गतगन्धेषु । गन्धस्येत्वम् । वेश्मान्तरेषु गृहान्तरेषु स्थास्नुतां स्थायित्वमेति पूर्वोक्तसर्वोत्कृष्टसौरमलोभादिति भावः । "ग्लाजिस्थश्च" इति ग्स्नु प्रत्ययः । वधुशब्दो ह्रस्वोकारान्तोऽप्यस्ति । यद्वा मधुकुसुमेति पाठः मधुयुक्तानि कुसुमानि तेषां विमर्देनेत्यर्थः । अत्र वायोरस्थायित्वेऽपि स्थायित्वसम्बन्धोक्तेरतिशयोक्तिः । तथा विमर्दगन्धस्य कमलादिगन्धादाधिक्यरूपव्यतिरेकप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥ २८ ॥

नखपदवलिनाभीसन्धिभागेषु लक्ष्यः क्षतिषु च दशनानामङ्गनायाः सशेषः। अपि रहसि कृतानां वाग्विहीनोऽपि जातः सुरतविलसितानां वर्णको वर्णकोऽसौ ॥ २९ ॥

**नखपदेति** । नखपदेषु नखक्षतेषु वलिषु त्रिवलिषु नाभ्या सन्धिभागेषु, कूर्परादिदेहसन्धिस्थानेषु तथा दशनानां क्षतिषु दन्तव्रणेषु च सशेषः सावशेषः किञ्चिद्विद्यमानः अत एव लक्ष्यो दृश्यः अङ्गनायाः सम्बन्धी असौ वर्णयति वर्णङ्करोति रञ्जयतीति वर्णकोऽङ्गरागो वाग्विहीनो वागिन्द्रियरहितोऽपि सन् रहसि कृतानामपि सुरतविलसितानां सुरतचेष्टितानां वर्णयति वक्तीति वर्णको वक्ता व्यञ्जक इत्यर्थः । वर्णयतेर्ण्वुल्प्रत्ययः । 'वर्णक्रियाया विस्तारे गुणोक्तौ वर्णनेऽप्यदः' इति भट्टमल्लः । जात नखक्षतादिष्वेव लक्ष्यमाणोऽङ्गरागोऽन्यत्र स्वविलोपाच्चेष्टाविशेषानुमापको जात इत्यर्थः । अत्र वाग्विहीनोऽपि रहस्यकृतानामपि वर्णको वक्तेति विरोधस्य व्यञ्जकत्वलक्षणया परिहाराद्विरोधाभासोऽलङ्कारः ॥ २९ ॥

प्रकटमलिनलक्ष्मा मृष्टपत्रावलीकैरधिगतरतिशोभैः प्रत्युषःप्रोषितश्रीः। उपहसित इवासौ चन्द्रमाः कामिनीनाम्परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥ ३० ॥

**प्रकटेति** । उषसि प्रत्युषः । विभक्त्यर्थेऽव्ययीभावः । यद्वा प्रत्युषः प्रभातम् । 'उषः प्रत्युषसी अपि' इत्यमरः । तत्र प्रोषितश्रीर्भ्रष्टशोभः अत एव प्रकटमलिनलक्ष्मा स्पष्टदृष्टकलङ्कोऽसौ चन्द्रमाः मृष्टाः प्रमृष्टाः पत्रावल्यः पत्रभङ्गा येषां तैः । "नद्यृतश्च" इति कप् । तथाप्यधिगता

रतिशोभा सम्भोगश्रीर्येषां तैः परिणताः परिपक्वाः शरकाण्डा बाणाख्यतृणकाण्डकाः । 'शरो बाणे बाणतृणे' इति शब्दार्णवे । तद्वदापाण्डुभिः कामिनीनां गण्डभागैर्गण्डस्थलैरुपहसित इत्युत्प्रेक्षा । पाण्डिमगुणनिमित्ता निष्कलङ्काः सकलङ्कं समानमानिनमुपहसन्तीति भावः ॥ ३० ॥

अथ काचित्खण्डिता नायिका सागसं प्रयासं प्रातरागतं पञ्चभिरुपालभते—

**सकलमपि निकामं कामलोलान्यनारीरतिरभसविमर्दैर्भिन्नवत्यङ्गरागे । इदमतिमहदेवाश्चर्य्यमाश्चर्य्यधाम्नस्तव खलु मुखरागो यन्नभेदम्प्रयातः ॥ ३१ ॥**

**सकलमित्यादि** । कामेन लोलाया अन्यनार्याः सपत्न्याः रतिरभसेषु सुरतसम्भ्रमेषु विमर्दैः पीडनैः रज्यतेऽनेनेति रागः अङ्गस्य रागोऽङ्गरागः विलेपनम् अङ्गविकाशश्च तस्मिन्नङ्गरागे सकलमपि निश्शेषं यथा तथा निकामं भिन्नवति विश्लिष्टवति सति आश्चर्य्यधाम्नः सर्वाद्भुतनिधानस्य तव मुखरागो मुखविकासो भेदं विश्लेषं न प्रयातः इति यत् इदमेवातिमहदाश्चर्य्यं खलु । मुखस्याप्यङ्गत्वेन तद्रागस्याप्यङ्गरागत्वादिति भावः । अत्र विलेपनविकासाख्ययोरङ्गरागयोरेवात्राध्यवसायेन विरोधः भेदानुसन्धानत्वेनाविरोध इति श्लेषमूलातिशयोक्त्युत्थापितो विरोधाभासोऽलङ्कारः ॥ ३१ ॥

**प्रकटतरमिमं मा द्राक्षुरन्या रमण्यः स्फुटमिति सविशङ्कं कान्तया तुल्यवर्णः । चरणतलसरोजाक्रान्तिसंक्रान्तयासौ वपुषि नखविलेखो लाक्षया रक्षितस्ते ॥ ३२ ॥**

**प्रकटेति** । किञ्च प्रकटतरमतिस्फुटमिममेनं नखविलेखम् अन्याः रमण्यो निजसपत्न्यः स्फुटं मा द्राक्षुः न पश्यन्तु । दृशेर्लुङ् "न दृशः" इति क्साभावपक्षे सिचि वृद्धिः । इति बुद्धया कान्तया सविशङ्कं यथा तथा तुल्यवर्णो लाक्षासमानवर्णः । विवर्णस्य दुरुपह्नवत्वादिति भावः । असौ ते तव वपुषि नखविलेखो नखव्रणः चरणतलं सरोजमिवेत्युपमितसमासः । आक्रान्तिलिङ्गात्तस्याक्रान्त्या आघातेन सङ्क्रान्तया लाक्षया रक्षितो गुप्त आच्छादित इत्यर्थः । हन्त सा तु पापीयसी लाक्षा स्वयमेव सर्वदुर्वृत्तपिशुनेति भावः । अत्र नखविलेखस्य लाक्षासावर्ण्यात्तदेकतापत्तेः सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥ ३२ ॥

**तदवितथमवादीर्यन्मम त्वम्प्रियेति प्रियजनपरिभुक्तं यद्दुकूलन्दधानः । मदधिवसतिमागाः कामिनाम्मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ ३३ ॥**

**तदिति** । किञ्च मम त्वमेव प्रियेति यदवादी रवोच । वदेर्लुङि "वदव्रज" इत्यादिना वृद्धिः । तदवितथं सत्यम् । कुतः । यद्यस्मात् प्रियजनेन परिभुक्तं दुकूलं तदीयमित्यर्थः । दधान. धारयन्नित्यर्थः । दधान इत्यत्र वसान इति पाठे वसान आच्छादयन् । वस आच्छादनार्थाल्लिटः शानजादेशः । स त्वं मदधिवसतिं मम निवासमागाः प्राप्तः "इणो गा लुङि" । युक्तं चैतदित्याह । कामिना मण्डनश्रीर्वल्लभानां प्रेयसीनामालोकनेन सफलत्वं व्रजति हि । अप्रिया चेत्कथमीदृशी मे सम्भावनेति भावः । अर्थान्तरन्यासः ॥ ३३ ॥

**नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् । प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ ३४ ॥**

**नवेति** । किञ्च नवानि नखपदानि यस्मिन् तदङ्गं वपुरंशुकेन गोपयसि छादयसि । गुपेश्चौरादिकात्स्वार्थे णिच् । दन्तेन दष्टमोष्ठं पुनरोष्ठं तु पाणिना स्थगयसि छादयसि । स्थगिरपि चौरादिकः । दिशि दिशि प्रतिदिशम् । विभक्त्यर्थेऽव्ययीभावः "अव्ययीभावे शरत्प्रभृतिभ्य." इति समासान्तः टच्प्रत्ययः । विसर्पन् प्रसर्पन् अपरस्त्रीसङ्गशंसी स्त्र्यन्तरसङ्गसूचकः । अन्यप्रभवत्वात्तस्येति भावः । नवः परिमलाख्यो गन्धः परिमलगन्धः । 'विमर्दोत्थे परिमलः' इत्यमरः । केन केनोपायेन वरीतुमाच्छादयितुम् । "वृतो वा" इति इटो दीर्घः । शक्यः न केनापि शक्य इत्यर्थः । अत्र नखदन्तक्षतयोरङ्गोष्ठाच्छादने विसर्पणस्य गन्धानाच्छाद्यत्वे च विशेषणमत्या हेतुत्वात्काव्यलिङ्गद्वये सजातीयसङ्करः ॥ ३४ ॥

**इति कृतवचनायाः कश्चिदभ्येत्य बिभ्यद्गलितनयनवारेर्याति पादावनामम् । करुणमपि समर्थं मानिनां मानभेदे रुदितमुदितमस्त्रं योषितां विग्रहेषु ॥ ३५ ॥**

**इतीति** । इति पूर्वोक्तश्लोकचतुष्टयरीत्या कृतवचनायाः कृतोपालम्भायाः गलितनयनवारेः धैर्यान्मुक्ताश्रोः । प्रेयस्या इति शेषः । कश्चिन्नायको बिभ्यत् त्रस्यन् 'नाभ्यस्ताच्छतुः" इति नुमभावः । अभ्येत्यागत्य पादयोरवनाममवनतिं याति प्रणामेन प्रसादयतीत्यर्थः । ननु कथमीदृङ्मार्दवं तथाहङ्कारिणस्तस्य रोदनमात्रेण तत्राह करुणमिति । तथाहि विग्रहेषु प्रणयकलहेषु योषितां करुणं दीनमपि रुदितमश्रुमोचनं मानिनामहङ्कारिणां पुंसां मानभेदे अहङ्कारनिरासे समर्थं शक्तमस्त्रं साधनमुदितमुक्तम् । वदेः कर्मणि क्तः "वचिस्वपि" इत्यादिना सम्प्रसारणम् । दीने प्रणयिजने पुंसां कोऽहङ्कार इति भावः । अर्थान्तरन्यासः । एषा च खण्डिता नायिका । 'नीत्वान्यत्र निशां प्रातरागते प्राणवल्लभे । अन्यासम्भोगचिह्नैस्तु खण्डितेर्ष्याकषायिता' इति लक्षणात् । नायकस्तु धृष्टः । "व्यक्तागो निर्भयो धृष्टः" इति लक्षणात् । नचेह

विभ्यद्विगपणविरोध' । आगमनकालेऽतिनिर्भीकताया एव लक्षणोपयोगात् अन्यथा वैर स्यादिति भावः । अय च सहृदयाः अन्यथा रसाभास इत्याहु. । कुलकम् ॥ ३९ ॥

**मदमदनविकासस्पष्टधाष्टर्योदयानां रतिकलहविकीर्णैर्भूषणै-र्चितेषु । विदधति न गृहेपूत्फुल्लपुष्पोपहारं विफलविनयय-त्नाः कामिनीनां वयस्याः ॥ ३६ ॥**

**मदेति ।** मदमदनयोर्विकासेन विजृम्भणेन स्पष्टो धाष्टर्यस्योदय आविर्भावो यासा तासा कामिनीना रतिरेव कलहस्तस्मिन् विकीर्णैरितस्ततो विक्षिप्तैर्भूषणैरर्चितेषु गृहेषु वयस्या स्निग्धपरि-चारिकाः विनीयन्तेऽस्मिन्निति विनयोऽधिकार. यत्र यत्नो विफलो यासान्ताः विफलविनय-यत्ना निष्फलस्वाधिकारोद्योगा सत्यः उत्फुल्लैः पुष्पैरुहार पूजा न विदधति न कुर्वन्ति । अत्र समृद्धवस्तुवर्णनादुदात्तालकार । 'तदुदात्तम्भवेद्यत्र समृद्ध वस्तु वर्ण्यते' इति लक्षणात् । तेन तासा तेपु आभरणेपु भुक्तवस्त्रमाल्यादिवन्निर्माल्यबुद्धिर्ध्वन्यते ॥ ३६ ॥

**करजदशनचिह्नं नैशमङ्केऽन्यनारीजनितमिति सरोषामीर्ष्य-या शङ्कमानाम् । स्मरसि न खलु दत्तं मत्तयैतत्तयैव स्त्रि-यमनुनयतीत्थं व्रीडमानां विलासी ॥ ३७ ॥**

**करजेति ।** विलसनशीलो विलासी । "वौ कपलस" इत्यादिना विनुण् प्रत्ययः । अङ्के निजाङ्के निशायाम्भव नैशम् । "निशाप्रदोपाभ्या च" इत्यण् प्रत्यय । करजदशनचिह्न नख-दन्तक्षतम् अन्यनारीजनित सपत्नीकृतमिति शङ्कमाना विश्वसतीमत एवेर्ष्यया अक्षमया सरोषा स्त्रिय निजमधु मत्तया मदमूढया त्वयैवैतद्दत्तमेव कृत खलु न स्मरसि नाभिजानासि किमिति काकुः इत्थमनेन प्रकारेण व्रीडमाना स्वकृतत्वप्रत्यभिज्ञानाल्लज्जिता सतीमनुनयति अङ्गीकारयति । स्वमौग्ध्यव्याघातो निर्वेदश्च लज्जया व्यज्यते ॥ ३७ ॥

**कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ परिशिथिलितगात्रे गन्तुमापृच्छमाने । विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दु-स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ ३८ ॥**

**कृतेति ।** कृतो गुरुतरस्य हारस्य छेदो यस्मिम् तत्तथा आलिङ्ग्य परिशिथिलि-तगात्रे शिथिलीकृताङ्गे पत्यौ भर्त्तरि गन्तुमापृच्छमान आमन्त्रयमाणे सति आङि नुपृच्छ्योरुपसख्यानादात्मनेपदम् , क र्त्तरि ल्ट शानजादेशः । तत्क्षण तस्मिन् क्षणे । अत्यन्तस-योगे द्वितीया । अवलाया स्तनयुगम् । कर्तृ । विगलिता निरसृता नवमुक्ता नूतनमौक्ति कान्येव स्थूलबाष्पाम्बुविन्दवो यस्मिन् कर्म्मणि तत्तथा रोदितीव विरहासहिष्णुतया रोदन करोतीवेत्युत्प्रेक्षा रूपकसङ्कीर्णा । "रुदादिभ्य' सावर्धातुके" इतीडागमः ॥ ३८ ॥

बहु जगद पुरस्तात्तस्य मत्ता किलाहं चकर च किल चाटु
प्रौढयोषिद्वदस्य। विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य
व्यपगतमदयाह्नि व्रीडितं मुग्धवध्वा ॥ ३९ ॥

बह्वीति। अह्नि दिवसे व्यपगतमदया मुग्धवध्वा सखीभ्यो विदितं रात्रौ त्वयेत्थं कृतमिति सखीभिराख्यातमित्यर्थः। रात्रिवृत्तं रात्रौ कृतं स्वचेष्टितमित्यर्थः। मत्ता मदमूढा अहं तस्य प्रियस्य पुरस्तादग्रे बहु अनेकं जगद किल गदानि स्म किलेति ऐतिह्ये। अत एव परोक्षे लिट् "णलुत्तमो वा" इति पक्षे णित्वाभावाद्वृद्ध्यभावः। च पुनः प्रौढयोषिता तुल्यं प्रौढयोषिद्वदित्युपमा "तेन तुल्यम्" इति वतिप्रत्ययः। अस्य प्रियस्य चाटु प्रियवचनं चकर किल अकार्षं किल। लिडादि पूर्ववत् गुणो विशेषः। इति विचिन्त्य विमृश्य व्रीडितं लज्जितम्। भावे क्तः। निजकार्य्यप्रकाशेन लज्जात्र सञ्चारी भावः। भावनिबन्धनात्प्रेयोऽलङ्कारः ॥ ३९ ॥

अरुणजलजराजीमुग्धहस्ताग्रपादा बहुलमधुपमालाकज्जले-
न्दीवराक्षी। अनुपतति विरावैः पत्रिणां व्याहरन्ती रजनिम-
चिरजाता पूर्वसन्ध्या सुतेव ॥ ४० ॥

अरुणेति। अरुणजलजराज्येव रक्तकमलश्रेण्येव मुग्धं सुन्दरं हस्ताग्रपादं हस्तौ च अग्रपादौ च यस्याः सा। बहुलं मधुपमालाकज्जलं कज्जलमिव मधुमाला ययोस्ते अक्षिणी इन्दीवरे इव यस्याः सा। बहुलमधुपमालाकज्जलेन्दीवराक्षी पत्रिणां पक्षिणां विरावैर्व्याहरन्ती आलपन्ती। 'व्याहार उक्तिर्लपितम्' इत्यमरः। अचिरजाता सद्योभवा बाला च पूर्वसन्ध्या प्रातःसन्ध्या सुतेव पुत्रीव रजनिमनुपतति अनुधावति जननीमिवेत्यर्थः। इह विरावैर्व्याहरन्तीति व्यधिकरणपरिणामः। तत्सङ्कीर्णेयमुपमा ॥ ४० ॥

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरिब्धैः
सामिधेनीरधीत्य। कृतगुरुदुरितौघध्वंसमध्वर्युवर्य्यैर्हुतमय-
मुपलीढे साधु सान्नाय्यमग्निः ॥ ४१ ॥

प्रतीति। अग्निराहितो यैस्तेषामग्न्याहितानाम्। "वाहिताग्न्यादिषु" इति निष्ठायाः परनिपातः। प्रतिशरणं प्रतिगृहम्। 'शरणं गृहरक्षित्रोः' इत्यमरः। अशीर्णज्योतिरक्षतार्चिरयमग्निराहवनीयः विधिना यज्ञकर्म्मण्यजपन्यूङ्खसामस्वित्यादिना त्रैस्वर्येण विहिता यथायोगमुच्चारिता विरिब्धाः स्वरा एकश्रुत्यादयश्चत्वारो यैस्तैः। 'श्रुत्वस्वान्त' इत्यादिना "रेभृ शब्दे" इति धातोः स्वरे विरिब्धशब्दो निष्ठान्तो [illegible] निपातितः। [illegible] ऋत्विक् श्रेष्ठैः ऋत्विग्विशेषवाचिना अध्वर्युशब्देन ऋत्विङ्मात्रलक्षणात्' [illegible] मुख्यो येषां तैः

अध्वर्युप्रमुखैश्चतुर्भिर्ऋत्विग्भिरित्यर्थः । "तस्माद्दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विजः" इति श्रवणात् । दर्शश्चाय सर्वत्रैव सान्नाय्यविधानादिति सामिधेनीः 'प्रवोवाजा' इत्यादिका अग्निसमिन्धनीर्ऋचोऽधीत्य पठित्वा । 'ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः । सामिधेनीग्रहण याज्यापुरोनुवाक्यादिमन्त्रान्तराणामप्युपलक्षणम् । हुतो दुरितानामोघस्य ध्वंसो यस्मिन् कर्मणि तद्यथा तथा साधु सम्यक् हुतं देवतोद्देशेन त्यक्त सन्नियत इति सान्नाय्य हविर्विशेष ऐन्द्रम् "दध्यमावास्यायामैन्द्र पयोऽमावास्यायाम्" इति विहिते दधिपयसी इत्यर्थः । "पाय्यसान्नाय्यनिकाय्य" इत्यादिना हविर्विशेषे सम्पूर्वान्नयतेर्ण्यन्तादायादेशोपसर्गदीर्घयोर्निपातः । उपलीढे आस्वादयति । "लिह आस्वादने" इति धातो स्वरितेत्त्वात्कर्तरि तङि टेरेत्व ढत्वधत्वष्टुत्वढलोपदीर्घाः । अत्राग्नेः सान्नाय्योपलेहनस्योत्तरकालभावित्वेऽपि तदुपलक्षितस्य कर्मण उदिते आदित्ये पौर्णमास्यास्तन्त्र प्रयुक्तम् "प्रागुदयादमावास्याया वा" इति शास्त्रात्तत्कालप्रक्रान्तस्य वर्तमानत्वात्तस्यापि वर्तमानताव्यपदेश एतद्धारिताग्नित्वमात्रेण कालविशेषानादरेणोक्तमिति पूर्वोक्तचन्द्रोदयाद्यविरोधः । अथ वा उदिते जुहोत्यनुदिते जुहोति प्रातर्जुहोत्यग्निहोत्र तत्कालत्वात्सामिधेनीसान्नाय्यशब्दयोर्मन्त्रहविर्मात्रपरत्वमाश्रित्याग्निहोत्रपरत्वेन व्याख्येयम् । तस्मादग्निहोत्रस्य यज्ञक्रत्वोः एकऋत्विगित्येकाध्वर्युकत्वे अध्वर्युवर्यैरिति बहुवचन यजमानबहुत्वादुपपद्यत इत्याहुरित्यलं छान्दसगोष्ठीव्यसनेन । वृत्त्यनुप्रासोऽलङ्कारः स्पष्ट एव ॥ ४१ ॥

प्रकृतजपविधीनामास्यमुद्भिन्नदन्तं मुहुरपिहितमोष्ठ्यैरक्षरै-
र्लक्ष्यमन्यैः । अनुकृतिमनुवेलं घट्टितोद्घट्टितस्य व्रजति
नियमभाजां मुग्धमुक्तापुटस्य ॥ ४२ ॥

प्रकृतेति । प्रकृतजपविधीना प्रक्रान्तजपकर्मणा नियमभाजा तपस्विना सम्बन्धे ओष्ठे भवैरोष्ठ्यैः । "शरीरावयवाच्च" इति यत्प्रत्ययः । अक्षरैर्वर्णैः उपूपध्मानीयैरित्यर्थ । उपूपध्मानीयानामोष्ठाविति अनुशासनात् । मुहुरपिहितमावृतमन्यैरनोष्ठ्यैरक्षरैर्लक्ष्य दर्शनीयम अत एवोद्भिन्ना उद्गताग्रा दन्ता यस्य तदास्य मुखम् अनुवेल प्रतिक्षण घट्टितोद्घट्टितस्य । प्राणित्वान्मुहुर्घटितविघटितस्य विशेषणसमास । मुग्ध सुन्दर यन्मुक्ताना मुक्ताफलानां पुट कोटिः शुक्तिरिति यावत् । तस्यानुकृतिं साम्य व्रजति । उपमालङ्कार । एतेन श्लोकद्वयेन बहवः कर्मनिष्ठास्तपोनिष्ठाश्च ब्राह्मणा भगवन्तमनुयान्तीति कथितम् ॥ ४२ ॥

नवकनकपिशङ्गं वासराणां विधातुः ककुभि कुलिशपाणे-
र्भाति भासां वितानम् । जनितभुवनदाहारम्भमम्भांसि
दग्ध्वा ज्वलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः ॥ ४३ ॥

त्वेति । कुलिश पाणौ यस्य स कुलिशपाणिरिन्द्रः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति पाणेः परनिपातः । एतदेवात्र व्यधिकरणबहुव्रीहेश्च ज्ञापकम् । तस्य ककुभि प्राच्या दिशि नवकनकवत्पिशङ्ग वासराणा विधातुर्दिनकरस्य भासा वितानं करजाल महाब्धेरम्भासि दग्ध्वा जनितभुवनदाहारम्भं कृतजगद्दाहोद्योग सदूर्ध्वमब्धेरुपरि ज्वलितमौर्वानलार्चिर्वडवानलज्योतिरिव भातीत्युत्प्रेक्षा ॥ ४३ ॥

विततपृथुवरत्रातुल्यरूपैर्मयूखैः कलश इव गरीयान् दिग्भिराकृष्यमाणः । कृतचपलविहङ्गालापकोलाहलाभिर्जलनिधिजलमध्यादेष उत्तार्य्यतेऽर्कः ॥ ४४ ॥

विततेति । वितताभि. प्रसारिताभिः पृथुवरत्राभिर्महारज्जुभिस्तुल्यरूपैस्तुल्याकारैर्मयूखैः किरणैर्गरीयान् कलश इवाकृष्यमाणः सन्नेषोऽर्कः कृतश्चपलः सत्वरो विहङ्गलाप एव कोलाहलः कलकलो याभिस्ताभिः दिग्भिर्जलनिधेः जलमध्यादुत्तार्यते । उद्ध्रियते । तरतेर्ण्यन्तात्कर्मणि लट् । यथा कुतश्चित्कूपात् कुम्भः पाशैराकृष्य सकलकल बहुभिस्त्रीभिरुद्ध्रियते तद्वदिति भावः । अत्र वरत्रातुल्यरूपैः कलश इवेति चोपमाभ्या विहङ्गालापकोलाहलेति रूपकेण चोज्जीवितार्कस्य दिक्कर्तृकोत्तारणोत्प्रेक्षा व्यञ्जकाप्रयोगात् प्रतीयमानेति सङ्करः ॥ ४४ ॥

पयसि सलिलराशेर्नक्तमन्तर्निमग्नः स्फुटमनिशमतापि ज्वालया वाडवाग्नेः।यदयमिदमिदानीमङ्गमुद्यन्दधाति ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ ४५ ॥

पयसीति । अय च विवस्वान् नक्त सलिलराशेः पयसि निमग्नोऽन्तर्वाडवाग्नेर्ज्वालया अनिशमतापि तप्तः स्फुटमित्युत्प्रेक्षा । कुतः । यदिदानीमुद्यन् इदं ज्वलित. प्रज्वलन् यः खदिरकाष्ठस्याङ्गारस्तद्वद्गौरमरुणमङ्ग दधाति । 'गौरोऽरुणे सिते पीते' इति विश्वः ॥ ४५ ॥

अतुहिनरुचिनासौ केवलं नोदयाद्रिः क्षणमुपरिगतेन क्ष्माभृतः सर्व एव । नवकरनिकरेण स्पष्टबन्धूकसूनस्तबकरचितमेत शेखरम्बिभ्रतीव ॥ ४६ ॥

अतुहिनेति । क्षणमुपरिगतेन स्थितेनातुहिनरुचिनार्केण केवलमसावुदयाद्रिः पूर्वाद्रिर्न । 'उदयः पूर्वपर्वतः' इत्यमरः । किन्त्वेते सर्व एव क्ष्माभृत. सर्वेऽपि शैला क्षणमुपरिगतेनात्रस्थितेन नवकरनिकरेण स्पष्टैर्विकसितैर्बन्धूकसूनस्तबकैर्बन्धुजीवककुसुमगुच्छैर्विरचितम् । 'बन्धूको बन्धुजीवकः' इत्यमरः । शेखर शिखामाल्यम् । 'शिखास्वापीडशेखरौ' इत्यमरः । बिभ्रतीवेत्युत्प्रेक्षा न केवलमर्केणोदयाद्रिरेव बन्धूकशेखर बिभर्ति किन्तु तत्करजालेन सर्वेऽपि पर्वतास्तथेत्यर्थः ॥ ४६ ॥

उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्गन्सकमलमुखहासं वीक्षितः पद्मिनीभिः । विततमृदुकराग्रः शब्दयन्त्या वयोभिः परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥ ४७ ॥

**उदयेति** । एष बाल उदिमात्र. बालश्चासौ सूर्यश्च बालसूर्यः उदयशिखरिशृङ्गस्य उदयाद्रिशिखरस्य प्राङ्गणेषु रिंगन् सञ्चरन् पद्मिनीभिर्नलिनीभि. स्त्रीविशेषैश्च 'पद्मिनी स्त्रीविशेषेऽपि' इति विश्व. । कमलान्येव मुखानि तेषा हासेन विकासेन हास्येन च सह यस्मिन् कर्मणि तद्यथा तथा वीक्षित. सन् वयोभि. पक्षिभिः । 'वयः पक्षिणि बाल्यादौ' इति विश्व । शब्दयन्त्याः शब्द कुर्वत्या । आगच्छागच्छ वत्सेति व्याहरन्त्या इत्यर्थः । शब्दशब्दात् "तत्करोति" इति ण्यन्ताल्लट' शतरि ङीप् । दिवोऽन्तरिक्षस्य मातुश्चाङ्के समीपे उत्सगे च विततानि प्रसृतानि मृदूनि कराग्राणि किरणाग्राणि हस्ताग्रे च यस्य स सन् हेलया लीलया परिपतति । श्लेषमूलातिशयोक्त्यनुगृहीतरूपकम् ॥ ४७ ॥

क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् । भुवनतलमशेषम्प्रत्यवेक्षिष्यमाणः क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥ ४८ ॥

**क्षणमिति** । अयं सप्तसप्तिरर्कः क्षणमुपविष्ट । क्षितिधरपीठमध्यासीन क्ष्मातलन्यस्तपाद. प्रणामस्वीकाराय भूतलप्रसारिताङ्घ्रिरित्यर्थ । प्रणतिपर नमस्कार कुर्वाणं प्रीत प्रणामस्वीकारात्सन्तुष्ट लोक जनमह्नाय झटिति अवेक्ष्य । 'स्राक्झटित्यञ्जसाह्नाय' इत्यमरः । रूपावलोकेन सम्भाव्याशेष भुवनतल लोकस्वरूप प्रत्यवेक्षिष्माण. अनुसन्धास्यमान क्षितिधरस्य तट पीठमिव सिंहासनमिव अन्यत्र तटमिव पीठ तस्मादुत्थितः उदयाद्रिमतिक्रान्त इत्यर्थ' । यथा कश्चिन्महाराजः सिंहासनोपविष्ट. क्षण प्रणतजनमादृत्य अथ सकलस्वराष्ट्रप्रत्यवेक्षणाय सहसोत्थाय गच्छति तद्वदित्यर्थ. । अत्र प्रकृतार्कविशेषणवैभवादप्रकृतमहाराजप्रतीते' समासोक्ति' ॥ ४८ ॥

परिणतमदिराभम्भास्करेणांशुबाणैस्तिमिरकरिघटायाः सर्वदिक्षु क्षतायाः । रुधिरमिव वहन्त्यो भान्ति बालातपेनच्छुरितमुभयरोधोवारितं वारि नद्यः ॥ ४९ ॥

**परिणतेति** । नद्य बालातपेन छुरितं रूषितम् अत एव परिणतमदिराभ सुपक्वसुरासन्निभम् उभाभ्यां रोधोभ्या वारितमवरुद्धम् उभयरोधोवारितम् "उभादुदात्तो नित्यम्" इत्यत्र नित्यग्रहणसामर्थ्याद्वृत्तिविषये उभशब्दस्य स्थाने उभयशब्दप्रयोग इत्युक्त प्राक् वारि जल भास्करेण । कस्कादित्वात्सत्वम् । अंशुभिरेव बाणैः सर्वदिक्षु क्षतायाः प्रहृतायाः । तिमिरमेव करिघटा गजसंघः तस्या रुधिरमेवेत्युत्प्रेक्षा । वहन्त्यो भान्ति ॥ ४९ ॥

दधति परिपतन्त्यो जालवातायनेभ्यस्तरुणतपनभासो मन्दिराभ्यन्तरेषु। प्रणयिषु वनितानां प्रातरिच्छत्सु गन्तुं कुपितमदनमुक्तोत्तप्तनाराचलीलाम् ॥ ९० ॥

दधतीति। जालवातायनेभ्यः गवाक्षविवरेभ्यः मन्दिराणामभ्यन्तरेषु परिपतन्त्यस्तरुणतपनभासो बालार्ककिरणाः वनितानां प्रणयिषु प्रातर्गन्तुमिच्छत्सु कुपितेन मदनेन मुक्तानामुत्तप्तानामग्निज्वलिततेजसा नाराचानां बाणविशेषाणां लीला शोभा दधति। अत्र लीलेव लीलेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धान्निदर्शनालङ्कारः ॥ ९० ॥

अधिरजनि वधूभिः पीतमैरेयरिक्तं कनकचषकमेतद्रोचनालोहितेन। उदयदहिमरोचिर्ज्योतिषाक्रान्तमन्तर्मधुन इव तथैवापूर्णमद्यापि भाति ॥ ९१ ॥

अधीति। अधिरजनि रजन्याम्। विभक्त्यर्थेऽव्ययीभावः। वधूभिः पीतं मैरेयं मद्यं यस्य तत् अत एव रिक्तं पीतमैरेयरिक्तम् एतत् कनकचषकं स्वर्णस्य पानपात्रम्। अवयववषष्ठ्य-विकारार्थता। 'चषकोऽस्त्री पानपात्रम्' इत्यमरः। रोचनालोहितेन गोरोचनारुणेन उदयत उद्यमानस्याहिमरोचिषोऽर्कस्य ज्योतिषा तेजसा अन्तरभ्यन्तरे आक्रान्तं व्याप्तं सत् अद्यापीदानीमपि तथैव पूर्ववदेव मधुन आपूर्णं आपूर्णमिव। सामान्यषष्ठ्या योग्यविशेषपर्यवसाननियमात् "षष्ठी शेषे" इति सम्बन्धसामान्ये षष्ठी करणस्यापि कारणत्वादिति भाति शोभते अत्रातपाक्राते मधुपूर्णत्वोत्प्रेक्षया आतपे मधुभ्रमात् भ्रान्तिमान् व्यज्यते ॥ ९१ ॥

सितरुचि शयनीये नक्तमेकान्तमुक्तं दिनकरकरसङ्गव्यक्तकौसुम्भकान्ति। निजमिति रतिबन्धोर्जानतीमुत्तरीयं परिहसति सखी स्त्रीमाददानां दिनादौ ॥ ९२ ॥

सितेति। नक्तं रात्रौ शयनीये तल्पे। एकान्तमुक्तमत्यन्तत्यक्तं सितरुचि शुभ्रवर्णम्। किन्तु दिनादौ प्रभाते दिनकरकरसङ्गेनार्कांशुव्यतिकरेण व्यक्ता कौसुम्भी कुसुम्भस्य रागद्रव्यस्य सम्बन्धिनी कान्तिर्यस्य तत्तथा भासमानं रतिबन्धोः प्रियस्योत्तरीयं निजमात्मीयमिति जानतीम् अत एवाददाना स्त्री नायिकाम्। "वाम्शसोः" इतीयङभावपक्षे "अमि पूर्वः" इति पूर्वरूपम्। सखी परिहसति। अत्राकौसुम्भे कौसुम्भभ्रमात्सादृश्यनिबन्धनाद्भ्रान्तिमदलङ्कारः ॥ ९२ ॥

प्लुतमिव शिशिरांशोरंशुभिर्यन्निशासु स्फटिकमयमराजद्राजताद्रिस्थलाभम्। अरुणितमकठोरैर्वेश्म काश्मीरजाम्भस्स्नपितमिव तदेतद्भानुभिर्भाति भानोः ॥ ९३ ॥

प्लुतमिति । राजताद्रिस्थलाभं सुधाधवलितत्वात्कैलासतटसन्निभं यद्वेश्म निशासु शिशिरांशोरिन्दोरंशुभिश्चन्द्रिकाभिः प्लुतं धौतं सत् स्फाटिकमयं स्फटिकविकारं इवाराजत् । रेजे तदेतद्वेश्म भानोः सूर्यस्याकठोरैः कोमलैः भानुभिररुणितमरुणीकृतं सत् काश्मीरदेशे जातं काश्मीरजं कुङ्कुमं तस्याम्भसा स्नपितं सिक्तमिव भाति । उत्प्रेक्षयोः संसृष्टिः ॥ ९३ ॥

सरसनखपदान्तर्दष्टकेशप्रमोकं प्रणयिनि विदधाने योषितामुल्लसन्त्यः । विदधति दशनानां सीत्कृताविष्कृतानामभिनवरविभासः पद्मरागानुकारम् ॥ ९४ ॥

सरसेति । प्रणयिनि योषितां सरसनखपदानामार्द्रनखक्षतानामन्तर्मध्ये दष्टानां लग्नानां केशानां शिरोरुहाणां प्रमोकं प्रमोचनं विदधाने सति सीत्कृतैर्व्यथाविर्भूतसीत्कारैराविष्कृतानां दशनानामुल्लसन्त्यः वैमल्याद्दन्तेषु प्रतिफलन्त्यः अभिनवरविभासः पद्मरागाणामनुकारमनुकरणं विदधति । उपमालङ्कारः रविभासामारुण्यप्रतिपादकाभिनवविशेषणप्रसादलब्ध इति काव्यलिङ्गेन सङ्करः ॥ ९४ ॥

अविरतदयिताङ्गासङ्गसञ्चारितेनच्छुरितमभिनवासृक्कान्तिना कुंकुमेन । कनकनिकषरेखाकोमलं कामिनीनां भवति वपुरवाप्तच्छायमेवातपेऽपि ॥ ९५ ॥

अविरतेति । अविरतेनाविच्छिन्नेन दयितानां प्रेयसामङ्गस्य आसङ्गेन शरीरसम्पर्केण सञ्चारितेन सङ्क्रामितेनाभिनवस्यासृजो रक्तस्येव कान्तिर्यस्य तेन कुङ्कुमेन छुरितं कनकस्य यः निकषे निकषोपले रेखा राजिस्तद्वत्कोमलं मनोहरमित्युपमा कामिनीनां वपुरातपेऽपि अवाप्तच्छायं लब्धवर्णोत्कर्षमेव भवति स्वतः सुवर्णवर्णस्य ततः कुङ्कुमाङ्कितस्य कामिनीगात्रस्य पुनर्बालातपव्याप्तिरिति महती वर्णोत्कर्षसामग्रीति भावः । आतपे छाया नातप इति विरोधाभासे अपिशब्दः । 'छाया त्वनातपे कान्तौ' इत्यमरः । अत्रसङ्क्रान्तकुङ्कुमच्छुरितत्वकनकनिकषरेखाकोमलत्वयोरुपमापेक्षया छायावाप्तिहेतुत्वादुपमासङ्कीर्णं काव्यलिङ्गं तदातपेऽप्यवाप्तच्छायमित्यत्र विरोधेन एकवाचकानुप्रवेशेन सङ्कीर्यते ॥ ९५ ॥

सरसिजवनकान्तं बिभ्रदभ्रान्तवृत्तिः करनयनसहस्रं हेतुमालोकशक्तेः । अखिलमतिमहिम्ना लोकमाक्रान्तवन्तं हरिरिव हरिदश्वः साधु वृत्रं हिनस्ति ॥ ९६ ॥

सरसीति । सरसि जातानि सरसिजानि । "सप्तम्यां जनेर्डः" "तत्पुरुषे कृति बहुलम्" इत्यलुक् । तद्वनस्य कान्तं प्रियम् । अन्यत्र तद्वत्कान्तं रम्यं आलोकशक्तेर्लोकलोचनानां विषयग्रहणशक्तेर्हेतुं आलोकान्तरसहकृतानामेव तेषां तत्सामर्थ्यात् । अन्यत्र आलोकशक्ते

दर्शनव्यापारस्य हेतु दर्शनसाधनमित्यर्थः । करा नयनानीव अन्यत्र करा इव नयनानि तेषां सहस्रं करनयनसहस्रं बिभ्रत् । अभ्रान्ते नभोमध्ये वृत्तिर्यस्य सोऽभ्रान्तवृत्तिः । अन्यत्राभ्रान्ते मेघे वृत्तिर्यस्य सः मेघवाहन इत्यर्थः । 'अभ्रं नभस्स्वर्गबलाहकेषु' इति विश्वः । हरितोऽश्वा यस्य स हरिदश्वोऽर्कः हरिरिन्द्र इवातिमहिम्ना अतिमहत्तया स्ववृद्ध्येत्यर्थः । लोकमाक्रान्तवन्त व्याप्तवन्तम् एकत्र प्रत्यक्षादन्यत्र 'स इषुमात्रमिषुमात्रं विश्वग्वर्द्धत । स इमान् लोकानावृणोत्' इत्यागमादिति भावः । वृत्रं ध्वान्तं दानवं च त्वाष्ट्रं साधु हिनस्ति हन्ति । 'ध्वान्तारिदानवा वृत्रा' इत्यमरः । उपमा श्लेषो वा मतभेदात् ॥ ९६ ॥

**अवतमसभिदायै भास्वताभ्युद्गतेन प्रसभमुडुगणोऽसौ दर्शनीयोऽप्यपास्तः । निरसितुमरिमिच्छोर्ये तदीयाश्रयेण श्रियमविगतवन्तस्तेऽपि हन्तव्यपक्षे ॥ ९७ ॥**

अवतमसेति । अवतमसं तिमिरम् । "अवसमन्धेभ्यस्तमसः" इति समासान्तः । यद्यपि 'क्षीणेऽवतमसन्तमः' इत्युक्तं तथापीह विरोधाद्विशेषानादरेण सामान्यमेव ग्राह्यम् । तस्य भिदायै भेदाय । 'षिद्भिदादिभ्योऽङ्' इत्यङ् । अभ्युद्गतेनाभ्युदितेनोद्यतेन च भास्वता सूर्येण दर्शनीयोऽप्युडुगणोऽसौ प्रसभं बलात् अपास्तः तथाहि अरिं निरसितुमिच्छोर्ये तदीयेनाश्रयेणाश्रयणेन श्रियं सम्पदं शोभां च । 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यते' इति विश्वः । अविगतवन्तः प्राप्तवन्तस्तेऽपि हन्तव्यपक्षे वध्यकोटावेव अरिवदरिपक्षा अपि वध्या एवेत्यर्थः । उडुगणोऽपि तमसि शोभते अतस्तत्पक्ष इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास. ॥ ९७ ॥

**प्रतिफलति करौघे सम्मुखावस्थितायां रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्याम् । बहिरभिहतमद्रेः संहतं कन्दरान्तर्गतमपि तिमिरौघं घर्मभानुर्भिनत्ति ॥ ९८ ॥**

प्रतीति । घर्मभानुरुष्णांशुः सम्मुखावस्थितायां सान्द्रचन्द्रांशुवद्गौर्यां धवलायामित्युपमा । "षिद्गौरादिभ्यश्च" इति ङीष् । रजतकटकमेव भित्तिस्तस्यां करौघे स्वकिरणजाले प्रतिफलति सति अद्रेर्बहिरभिहतं कन्दराणां दरीणामन्तर्गतं संहतं तिमिरौघमपि भिनत्ति । पुरोगतरजतभित्तिप्रतिहतस्य निजतेजसः कन्दरांतः प्रवेशादिति भावः । अत्र करौघस्यान्तस्सम्बन्धाभावेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ९८ ॥

**बहिरपि विलसन्त्यः काममानिन्यिरे यद्दिवसकररुचोऽन्तं ध्वान्तमन्तर्गृहेषु । नियतविषयवृत्तेरप्यनल्पप्रतापक्षतसकलविपक्षस्तेजसः स स्वभावः ॥ ९९ ॥**

**बहिरिति** । बहिर्विलसन्त्योऽपि दिवसकररुचोऽर्कभासः अन्तर्गृहेषु गर्भागारेषु क्व। यथेष्ट ध्वान्तमन्तं नाशमानिन्यिरे प्रापयामासुरिति यत् । नयतेर्द्विकर्मकात्कर्तरि लिट् । सोऽन्तर्गृहध्वान्तनिरासो नियतविषये नियतस्थाने वृत्तिर्यस्य तस्य नियतदेशवर्त्तिनोऽपीत्यर्थः । "तृतीयादिषु" इत्यादिना पुंवद्भावः । तेजसोऽनल्पेन प्रतापेन स्वप्रकाशेन स्वप्रभावेणैवेत्यर्थः । 'प्रतापौ पौरुषातपौ' इति वैजयन्ती । क्षतसकलविपक्षः निरस्तसमस्तप्रतिपक्षः स्वभावः तेजस्विनामेष स्वभावो यत्प्रतापेनैव परोच्छेदनमतो युक्तमर्कभासामप्यन्तर्ध्वान्तहरणमित्यर्थः । अत्र समर्थ्यसमर्थकयोः सामान्यविशेषभावादर्थान्तरन्यासः ॥ ५९ ॥

**चिरमतिरसलौल्याद्बन्धनं लम्भितानां पुनरयमुदयाय प्राप्य धाम स्वमेव । दलितदलकपाटः षट्पदानां सरोजे सरभस इव गुप्तिस्फोटमर्कः करोति ॥ ६० ॥**

**चिरमिति** । अयमर्कः पुनर्भूयोऽपि उदयाय स्ववृद्धये स्वं स्वकीयमेव धाम स्थानं तेजो वा प्राप्य अतिरसलौल्यादतिमात्राद्रसेषु मकरन्देषु विषयेषु च लौल्यादासक्त्या सरोजे चिरं बन्धनं लम्भितानां प्रापितानां षट्पदानां सरभसः सत्वरो दलितं विघट्टितं दलमेव कपाटं येन स सन् गुप्तिस्फोटं बन्धनमोक्षं करोतीवेत्युत्प्रेक्षा । यथा कश्चित्पदभ्रष्टः पुनर्लब्धपदः पूर्ववदात्मबन्धूनागत्य स्वयमेव काराकपाटमुद्घाट्य मोचयति तद्वदिति भावः ॥ ६० ॥

**युगपदयुगसप्तिस्तुल्यसंख्यैर्मयूखैर्दशशतदलभेदं कौतुकेनाशु कृत्वा । श्रियमलिकुलगीतैर्लालिताम्पङ्कजान्तर्भवनमधिशयानामादरात्पश्यतीव ॥ ६१ ॥**

**युगपदिति** । अयुगा विषमाः सप्तयोऽश्वा यस्य सः अयुगसप्तिः सप्ताश्वोऽर्कः । युगशब्दस्य युग्मशब्दस्य च विशेष्यलिङ्गतावगन्तव्या । युगपदेकदैव तुल्यसङ्ख्यैः सहस्रसङ्ख्यैरित्यर्थः, मयूखैः करैः दश शतानि येषां तानि दशशतानि सहस्रमित्यर्थः । तेषां दलानां भेदं विघट्टनं कौतुकेनाशु कृत्वा अलिकुलस्य गीतैर्लालितां सत्कृतां पङ्कजमेवान्तर्भवनं गर्भगृहम् अधिशयानाम् । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् । श्रियमादरात्पश्यतीवेत्युत्प्रेक्षा । कश्चित्कान्तः कान्तामिवैकान्तगतामिति भावः ॥ ६१ ॥

**अदयमिव कराग्रैरेष निष्पीड्य सद्यः शशधरमहरादौ रागवानुष्णरश्मिः । अवकिरति नितान्तं कान्तिनिर्यासमब्दश्रुतनवजलपाण्डुम्पुण्डरीकोदरेषु ॥ ६२ ॥**

**अदयमिति** । अहरादौ प्रभाते रागवानुदयरागवान् पुण्डरीकस्नेहवांश्चैष उष्णरश्मिरर्कः शशधरं चन्द्रं कराग्रैः रश्म्यग्रैः हस्ताग्रैश्च अदयं निर्दयं सद्यो निष्पीड्य अब्दात्

मेघात् सुत स्रस्तं नवजलमिव पाण्डु शुभ्रं कान्तिनिर्यासं लावण्यसारं पुण्डरीकाणां सिताब्जानामुदरेष्वभ्यन्तरेषु नितान्तमवकिरतीव विक्षिपतीव । अत्र सूर्योदये चन्द्रस्य कान्तिक्षयात् पुण्डरीकाणां तत्प्रादुर्भावाच्च सूर्यश्चान्द्रीमेव कान्तिं पुण्डरीकस्नेहात्परेषु सिञ्चतीत्युत्प्रेक्षा । यथा द्विषन्त प्रणीय तदीयं वसुसारं सुहृदे प्रयच्छति तद्वदिति भावः ॥ ६२ ॥

**प्रविकसति चिराय द्योतिताशेषलोके दशशतकरमूर्त्तावक्षिणीव द्वितीये । सितकरवपुषासौ लक्ष्यते संप्रति द्यौर्विगलितकिरणेन व्यङ्गितैकेक्षणेव ॥ ६३ ॥**

प्रविकसतीति । द्योतितः प्रकाशितोऽशेषलोको येन तस्मिन् दश शतानि येषां ते दशशतास्ते करा यस्याः सा दशशतकरा सहस्रकरा मूर्त्तिर्यस्य तस्मिन्दशशतकरमूर्तौ सूर्ये द्वितीयेऽक्षिणि चक्षुर्षीव चिराय प्रविकसति सति सम्प्रत्यसौ द्यौराकाश स्त्री च गम्यते विगलितकिरणेन निष्प्रकाशेन सितकरः शुभ्रकिरणं वपुर्यस्य तेन सितकरवपुषा चन्द्रेण व्यङ्गितं विकलीकृतमेकेक्षणमेकनेत्रं यस्याः सा व्यङ्गितैकेक्षणा काणेव लक्ष्यते । अत्र दिवःकाणत्वमुत्प्रेक्ष्यते । तत्र काणत्वमक्षिन्वेनाध्यवसितेन निष्प्रभासितेन चन्द्रेणेति । तत्र "येनाङ्गविकारः" इति तृतीया ६३

**कुमुदवनमपश्रि श्रीमदम्भोजषण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः । उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिलसितानां ही विचित्रो विपाकः ॥ ६४ ॥**

कुमुदेति । कुमुदवनम् अपगता श्रीर्यस्य तदपश्रि विगतशोभम् । "गोऽस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वम् । अम्भोजषण्डं श्रीमत् शोभायुक्तम् । उलूकः पेचको मुदं त्यजति । तस्य दिवाभीतत्वादिति भावः । चक्रवाकः प्रीतिमान् । रजनीविरहाभावत्वात्तस्येति भावः । अहिमरश्मिरुष्णांशुरुदयं याति हिमांशुरिन्दुरस्तमदर्शनं याति । अस्तमित्यव्ययम् । कथमेतद्वैषम्यं तत्राह । हतेति । हतविधिलसितानां दुष्टदैवचेष्टितानां विपाकः परिपाकः तत्तत्प्राणिकर्मानुरूपफलदानप्रकार इति यावत् । विचित्रो विविधः न त्वेकविध इत्यर्थः । हीति विस्मये 'अहो ही च विस्मये' इत्यमरः । विधिविपाकवैचित्र्याज्जगद्वैचित्र्यं युज्यते इति कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥

**क्षणमतुहिनधाम्नि प्रोष्य भूयः पुरस्तादुपगतवति पाणिग्राहवद्दिग्वधूनाम् । द्रुततरमुपयाति स्रंसमानांशुकोऽसावुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥ ६५ ॥**

क्षणमिति । अतुहिनधाम्नि उष्णांशौ दिशो वध्व इवेत्युपमितसमासः । तासां दिग्वधूनां पाणिं गृह्णातीति पाणिग्राहो निजभर्ता तस्मिन्निव पाणिग्राहवत् । "तत्र तस्येव" इति तत्रार्थे

यतिः । क्षण मोध्य प्रवासं कृत्वा । प्रपूर्वाद्वसधातोः क्त्वा, तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यपि "वचिस्वपि" इत्यादिना सम्प्रसारणम् । यः भूयः पुनरपि पुरस्तात्पूर्वस्या दिशि मार्गे चोपगतवत्यागतवति सति असौ चन्द्र उपपतिर्जार इव । 'जारस्तूपपतिः समौ' इत्यमरः । स्रंसमानांशुको गलद्रश्मिक । शैषिकः कप्प्रत्ययः । स्रस्तवस्त्रश्च नीचैर्नम्रः सन्पश्चिमान्तेन पश्चिमदिक्कोणेन केनचिदपरद्वारेण द्रुततरमपयात्यपसरति यथापूर्वद्वारेण निजपतावागते पश्चान्मार्गेणोपपतिरपसरति तद्वदित्यर्थः । उपमालङ्कारः ॥ ६५ ॥

**प्रलयमखिलतारालोकमह्नाय नीत्वा श्रियमनतिशयश्रीस्सानुरागां दधानः । गगनसलिलराशिं रात्रिकल्पावसाने मधुरिपुरिवभास्वानेप एकोऽधिशते ॥ ६६ ॥**

प्रलयमिति । अखिलस्तारालोको लोक इव तारा नक्षत्र तमखिलं तारालोकमहाय द्राक् प्रलय क्षय नीत्वा अत एव यतो नास्त्यतिशयं सानतिशया सर्वातिशायिनी श्रीर्महिमा यस्य सोऽनतिशयश्रीः सानुरागामुदयरागवतीं श्रिय शोभामन्यत्र सानुरागामनुरागवतीं श्रियं रमा च दधानः एव भास्वानेको मधुरिपुर्विष्णुरिव रात्रिः कल्पावसानं कल्पान्त इव तस्मिन् रात्रिकल्पावसाने गगन सलिलराशिरिव त गगनसलिलराशिमधिशेतेऽधितिष्ठति अत्र मधुरिपुरिवेति वाक्यगतोपमैव समासगतोपमाना प्रसाविकेति सर्वत्रोपमितसमासाश्रयणमेवोचितम् ॥ ६६ ॥

**कृतसकलजगद्विबोधोऽवधूतान्धकारोदयः क्षयितकुमुदतारकश्रीर्वियोग नयन् कामिनः । बहुतरगुणदर्शनादभ्युदितात्पदोषः कृती तव वरद करोतु सुप्रातमह्नामय नायकः ॥ ६७ ॥**

**इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये प्रत्यूषवर्णनं नामैकादशः सर्गः ॥ ११ ॥**

कृतेति । कृतसकलजगद्विबोधः कृताखिलजगत्प्रबोधः अवधूतो विक्षिप्तोऽन्धकारस्योदयः उज्जृम्भण येन सोऽवधूतान्धकारोदय इति महागुणोक्तिः । दोषमाह । क्षयिता नाशिता कुमुदानां तारकाणा च श्रीर्येन सः । कामिनः स्त्रीपुंसां वियोग नयन्प्रापयन् तथापि बहुतरगुणस्य पूर्वोक्तमहागुणस्य दर्शनादभ्युपेतो लोकैरङ्गीकृतोऽल्पदोषः पूर्वोक्त एव यस्य सः । 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति न्यायादिति भावः । अत एव कृती कृतार्थोऽयमह्ना नायकः प्रभुः सूर्यः हे वरद कामद ! तव सुप्रात सुप्रभात करोतु । आशिषि लिङ्लोटौ" इत्याशीरर्थे लोट् । शोभनं प्रातर्यस्येति सुप्रातः शोभनप्रातर्वोनुच्यते । "सुप्रातसुश्व" इत्यादिना बहुव्रीहावच्प्रत्ययान्तो निपातितः । अत्र भावप्रधानो निर्देशः । तव सुप्रातं सुप्रभातत्व करोत्वित्यर्थः । महामालिनी वृत्तमेतत् । "यदिह नयुगल ततो वेदरेफैर्महामालिनी" इति लक्षणात् ॥ ६७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये एकादशः सर्गः ॥ ११ ॥

# द्वादशः सर्गः ।



एवं प्रभात वर्णयित्वा भगवतः प्राभातिकप्रस्थानवर्णनाय प्रक्रमते—

**इत्थं रथाश्वेभनिषादिनां प्रगे गणो नृपाणामथ तोरणाद्बहिः ।**
**प्रस्थानकालक्षमवेषकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम् ॥ १ ॥**

**इत्थमिति** । इत्थम्भूते पूर्वसर्गोक्तविधे इत्यर्थः । प्रगे प्रातःकाले । 'साय सायं प्रगे प्रातः' इत्यव्ययेष्वमरः । अथ सूर्योदयानन्तर रथाश्वेभे निषीदन्तीति रथाश्वेभनिषादिना रथेषु अश्वेषु इभेषु च स्थितानामित्यर्थः । नृपाणा गणः तोरणाद्भगवतः बाह्यद्वाराद्बहिः । "अपपरिबहिरञ्चवः पञ्चम्या" इति पञ्चमीसमासविधानात् ज्ञापकात्पञ्चमी । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । प्रस्थानकाले प्रयाणकाले क्षम उचितो वेषः आकल्पः 'अकाल्पवेषौ नेपथ्यम्' इत्यमरः । तस्य कल्पनया सम्पादनेन कृतः क्षणक्षेपः क्षणविलम्बो येन तमच्युत हरिमुदैक्षत प्रतीक्षितवानित्यर्थः । अत्राच्युतविलम्बस्य विशेषणगत्या प्रतीक्षणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । अस्मिन्सर्गे विषमपादयोर्जागतमिन्द्रवंशावृत्तम् । 'स्यादिन्द्रवंशा ततजैरसंयुतैः' इति लक्षणात् । समपादयोस्तु जागतमेव वंशस्थ वृत्तम् । 'जतौ तु वंशस्थमुदीरित जरौ' इति लक्षणात् । तदेवमुभयमेलनादुपजातिभेदोऽयम् । अत एव त्रिष्टुबिन्द्रवज्रोपेन्द्रवज्रालक्षणानन्तरम् 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इत्युक्त्वोक्तम् 'इत्थ किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम' इति ॥ १ ॥

**स्वक्षं सुपत्रं कनकोज्ज्वलद्युतिं जवेन नागाञ्जितवन्तमुच्चकैः ।**
**आरुह्य तार्क्ष्यं नभसीव भूतले ययावनुद्घातसुखेन सोऽध्वना ॥ २ ॥**

**स्वक्षमिति** । स हरिः शोभनोऽक्षश्चक्रधारणदारुभेदो यस्य त स्वक्षम् । 'स्यादक्षश्चक्रवारणे' इति वैजयन्ती । अन्यत्र शोभनेन्द्रियम् । 'अथाक्षमिन्द्रियम्' इत्यमरः । सुपत्र वाहन यस्य त स्वश्वमित्यर्थः । अन्यत्र सुपक्षम् 'पत्र वाहनपक्षयोः' इत्यमरः । कनकोज्ज्वलद्युतिं कनकरचनावन्त अन्यत्र कनकवदुज्ज्वलद्युतिं कनकवर्णम् । जवेन नागान् गजान् उरगांश्च जितवन्त ततोऽधिकवेगमित्यर्थः । अन्यत्र नागान्तकमित्यर्थः । उच्चकैरुन्नत तार्क्ष्य रथ गरुडं च । 'तार्क्ष्य स्यादश्वकर्णाख्यवृक्षे रथतुरङ्गयोः । तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुडे गरुडाग्रजे' इति विश्वः । आरुह्य नभसीव भूतले अनुद्घातेनाप्रतिघातेन सुखः सुगमः तेनाध्वना ययौ गरुडमारुह्य नभसीव रथमारुह्य भूतलेऽप्यप्रतिहत ययौ गरुडवदेव तद्रथस्यापि सर्वत्राप्रतिहतगतित्वादित्यर्थः । नाय श्लेषः प्रकृताप्रकृतवादेऽपि तार्क्ष्यमिति विशेष्यश्लेषायोगादन्यत्राप्रसङ्गाच्च श्लेषसङ्कीर्णेयमुपमा ॥ २ ॥

ममवशे आयत्ततायां वर्तत इति यावत् । 'वश आयत्ततायाश्च' इति विश्वः । सा मद्वशव-र्तिन विधेयप्राधान्यात् स्त्रीलिङ्गता । तवानुभावसम्पदा सामर्थ्यातिशयाना भूयसी महती विभू-तिर्महिमा । कार्यमिति यावत् । त्वत्प्रसादलब्धमिदमैश्वर्यमित्यर्थः । अत्र निजैश्वर्यस्य भगवदनु-भावसम्पद विना सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ५ ॥

तदेव स्तुत्या हरिमभिमुखीकृत्य कृत्यांशमावेदयति—

**सततन्तुमधिगन्तुमिच्छतः कुर्वनुग्रहमनुज्ञया मम ।**
**मूलतामुपगते खलु त्वयि प्रापि धर्ममयवृक्षता मया ॥ ६ ॥**

**सप्तेति** । सप्त तन्तवः सस्था यस्य त सप्ततन्तु क्रतुम् । 'सप्ततन्तुर्मख क्रतुः ' इत्यमर । अधिगन्तु प्राप्तुमिच्छतो ममानुज्ञयानुज्ञादानेनानुग्रह प्रसाद कुरु साहाय्य कुर्वित्यर्थः । स्वतः समर्थस्य किं मदनुग्रहणेत्याह । हे प्रभो त्वयिमूलता मुख्यकारणतामत्रिन्य चोपगते सति-मया धर्ममयवृक्षता धर्मात्मकवृक्षता प्रापि प्राप्ता । प्राप्नोतेः कर्मणि लुङ् । प्रागपि त्वदनुग्रहादेव धर्ममर्जयन् धर्मराजोऽहमस्मीति भावः । अत्र नृपस्य धर्मवृक्षत्वेन हरेस्तन्मूलत्वेन रूपणात्सा-वयवरूपकम् । तेन त्वदनुग्रहः सर्वथा प्रार्थनीयो मया धर्मार्थिनेति तात्पर्यं व्यजते ॥ ६ ॥

**सम्भृतोपकरणन निर्मलां कर्तुमिष्टिमभिवाञ्छता मया ।**
**त्वं समीरण इव प्रतीक्षितः कर्षकेण वलजान्पुपूषता॥ ७ ॥**

**सम्भृतेति** । निर्मला निर्दोषाम् इष्टिं यागम् । यजे' स्त्रियां क्तिन्, "वचिस्वपि" इत्यादिना सम्प्रसारणम् । कर्तुमभिवाञ्छता अत एव सम्भृतोपकरणेन सम्पादितसाधनेन मया वलजान् धान्यराशीन् । 'वलजो धान्यराशिः स्यात्' इति वैजयन्ती । पुपूषता पवितु साधयितु निस्तुषीं कर्तुम् इच्छता । पुनातेः सन्नन्ताल्लट' शत्रादेश "सनि ग्रहगुहोश्च" इति चकारादिटः प्रति-षेधः । कर्षकेण कृषीवलेन समीरणो वायुरिव प्रतीक्षित. प्रवाते शूर्पादिना धान्यस्योत्क्षेपः पवनं तद्वात विनेव त्वा विना समाहृतसम्भारेणापि मया यागो दुष्कर इति भाव. ॥ ७ ॥

**वीतविघ्नमनघेन भाविता सन्निधेस्तव मखेन मेऽधुना ।**
**को विहन्तुमलमास्थितोदये वासरश्रियमशीतदीधितौ ॥ ८ ॥**

**वीतविघ्नमिति** । अधुना तव सन्निधेर्हेतोर्मे मखेन क्रतुना कर्त्रा । वीतविघ्नमविघ्नम् अन-घेन निर्दोषेण भाविता । भविष्यत इत्यर्थः । भावे लुट्, "स्यसिच्सीयुट्" इत्यादिना लुटि चि-ण्वद्भावात् वृद्धिः । तथा हि । अशीतदीधितावुष्णांशावास्थितोदये प्राप्तोदये सति को वासरश्रियं दिनशोभा विहन्तुमल शक्त । न कोऽपीत्यर्थः । अत्र हरिमरीचिमालिनोर्वाक्यभेदात् बिम्बप्रति-बिम्बतया सन्निहितद्योतितया समानधर्मतया निर्दोषो दृष्टान्तालङ्कारः । 'यत्र वाक्यद्वये बिम्ब-प्रतिबिम्बतयोच्यते । 'सामान्यधर्मवाक्योक्तेः स दृष्टान्तो निगद्यते' इति लक्षणात् ॥ ८ ॥

स्वापतेयमधिगम्य धर्मतः पर्यपालयमवीवृधं च यत् ।
तीर्थगामि करवै विधानतस्तज्जुषस्व जुहवानि चानले ॥ ९ ॥

स्वापतेयमिति । यत् स्वपतौ स्वामिनि साधु स्वापतेयं वित्तम् । "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ्प्रत्ययः 'द्रव्य वित्त स्वापतेयम्' इत्यमर. । धर्मतः क्षत्रियस्य विजितमिति शास्त्रोक्तप्रकारादित्यर्थ. । अधिगम्य लब्ध्वा । यत्नेन पर्य्यपालय पालितवान् अवीवृध वृद्धिं च प्रापितवान् । तत्तीर्थगामि विप्राधीनं करवै करिष्यामि विधानत. ' पालित वर्द्धयेन्नीत्या वृद्ध पात्रेषु निक्षिपेत्' इति स्मरणात् । तच्च पात्र त्वमेवेत्याह । तत्सर्व जुषस्व सेवस्व सदैव भुङ्क्ष्वेत्यर्थः । 'जुषी प्रीतिसेवनयोः' इति धातोर्लोट् । अनले जुहवानि च जुहुयाम् । तन्मुखेनापि तवैव भोक्तृत्वादिति भाव' । जुहोतेः सम्प्रश्ने लोटि मेर्निरादेश. ॥ ९ ॥

पूर्वमङ्ग जुहुधि त्वमेव वा स्नातवत्यवभृथे ततस्त्वयि ।
सोमपायिनि भविष्यते मया वाञ्छितोत्तमवितानयाजिना॥ १०

पूर्वमिति । वेति पक्षान्तरे अथवेत्यर्थः । अङ्ग हे कृष्ण ! 'अथ सम्बोधनार्थकाः । स्युः याट्पाडङ्ग हे है भो. ।' इत्यमरः । पूर्व त्वमेव जुहुधि यजस्वेत्यर्थ. । "हुझल्भ्यो हेर्धिः" इति होर्धिरादेश । सोमपायिनि त्वयि अवभृथे यज्ञे । 'दीक्षान्तोऽवभृथो यज्ञः' इत्यमरः । स्नातवति सति ततोऽनन्तर मया वाञ्छितः उत्तमो वितान राजसूयाख्यः । 'क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके' इत्यमर' । तेन तथा याजिना भविष्यते । भावे लृट् । त्वयि इष्टवति पश्चादह यक्ष्ये इत्यर्थः । अत्र श्लोकद्वयेन हरेर्य्यागासम्बन्धे तत्सम्बन्धोक्तेरतिशयोक्ति' ॥ १० ॥

किं विधेयमनया विधीयतां त्वत्प्रसादजितयार्थसम्पदा ।
शाधि शासक जगत्त्रयस्यमामा श्रवोऽस्मि भवतः सहानुजः ११

किमिति । अथवा त्वत्प्रसादेन त्वदनुग्रहेण जितया जयलब्धया अनयार्थसम्पदा धनसम्पदा किं विधेयं किमनुष्ठेय विधीयता त्वयैव क्रियताम् । अह तु अस्वतन्त्र इत्याह हेजगत्त्रयस्य शासक ! न तु ममैवेति भावः । मा शाधि शिक्षयेत्यर्थ' । शासेलोटि "हुझल्भ्यो हेर्धिः"इति धिरादेशः, "झलो झलि" इति सकारलोप. । सहानुज' । सानुजः सन् "वोपसर्जनस्य" इति सहशब्दस्य सभावविकल्प. । भवत. तवाश्रवो विधेयोऽस्मि । 'विधेयो विनयग्राही वचनेस्थित आश्रव' इत्यमरः । अत्रानाश्रवस्याश्रवत्वसम्बन्धोक्तेरतिशयोक्तिरिति दशश्लोक्यामाचार्यमतेऽतिप्रियतराख्यानात्प्रेयोऽलङ्कारः । 'प्रेय' प्रियतराख्यानात्' इति लक्षणात् । आधुनिकास्तु भावनिबन्धने प्रेयोऽलङ्कार इति लक्षयन्ति । स चोक्तीतस्तत्र तत्रोन्नेष्यते च ॥ ११ ॥

तं वदन्तमिति विष्टरश्रवाः श्रावयन्नथ समस्तभूभृतः ।
व्याजहार दशनांशुमण्डलव्याजहारशबलं दधद्वपुः ॥ १२ ॥

**तमिति**। अथानन्तर विष्णुरिव श्रवसी यस्य स विष्टरश्रवा । 'विष्णुर्नारायण कृष्णो वैकुण्ठो विष्टरश्रवा' इत्यमरः। इति एतदर्थं त वदन्त नृप समस्तभूभृत सर्वान् नृपान् श्रावयन् दशनांशुमण्डलमिति व्याजोऽपदेशो यस्य तेन हारेण मुक्ताहारेण शबल सार वपुर्दधत् व्याजहार व्याहृतवान् । अत्र दशनांशुमण्डलस्य व्याजशब्देनासत्यत्वप्रतिपादनाद्पह्नवभेद ॥ १२ ॥

यदुक्त 'सा विभूति' इत्यादि तत्रोऽत्तरमाह--

**सादिताखिलनृपं महन्महः सम्प्रति स्वनयसम्पदेव ते ।**
**किं परस्य स गुणः समश्नुते पथ्यवृत्तिरपि यदरोगिताम्॥१३॥**

**सादितेति**। सम्प्रति ते तव महन्महत्तेज स्वनयसम्पदैव निजनीतिमहिम्नैव सादिताखिलनृप विजितसमस्तराजक न तु मदनुभावादिति भाव । तथा हि पथ्या हिता वृत्तिरन्नपानादि यस्य क्रिया सोऽपि अरोगितामारोग्यं समश्नुते यदि प्राप्नोतीति चेत्सोऽपि तदारोग्यमित्यर्थ । विधेयप्राधान्यात्पुंल्लिङ्गता। परस्य भिषजः सगुण किं नेत्यर्थ. । पथ्यवृत्तरारोग्यमौषधनाश्यत्वाद्भिषजो गुणोऽस्तु हितमेध्याशिनो न तथेत्यर्थ । स्वयमसमर्थ पराधीनमिद्धिरित्युपचार इति भाव । दृष्टान्तालङ्कार सुगम. ॥ १३ ॥

यदुक्त 'पूर्वमङ्ग जुहुधि त्वमेव' इति तत्राप्याह--

**तद्गुराज्ञि भवति स्थिते पुरः कः क्रतुं यजतु राजलक्षणम् ।**
**उद्धृतौ भवति कस्य वा भुवः श्रीवराहमपहाय योग्यता ॥१४॥**

**तदिति**। तत्तस्माद्गुरुतरीया तवैवाधिकारित्वादित्यर्थ । गुराज्ञि विजयप्रजारक्षणादिगुणयोगात् शुद्धक्षत्रिये । 'न पूजनात्'' इति समासान्तप्रतिषेध । भवति त्वयि पुर स्थिते सति कस्त्वदन्य क इत्यर्थः। राज्ञः क्षत्रियस्य लक्षण चिह्नमसाधारण यस्य त क्रतु राजसूयमित्यर्थ । यजतु न कोऽपीत्यर्थ । 'राजा राजसूयेन यजेत' इति राजाधिकारताश्रवणाद्राजा त्वमेवेति भाव । सभावनाया लोट् । अत्र दृष्टान्तमाह । भुव उद्धृतौ भुव उद्धरणे श्रीवराहम् आदिवराहम् अपहाय कस्य पुनर्योग्यता सामर्थ्य भवति न कस्यापीत्यर्थ । योगाय प्रभवतीति योग्य । "योगाद्यच्च'' इति यत्प्रत्यय । अत्र राजवराहयो वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कार. ॥ १४ ॥

यच्चोक्त 'सम्भृतोपकरणेन' इत्यादिना तत्राह--

**शासनेऽपि गुरुणि व्यवस्थितं कृत्यवस्तुषु नियुङ्क्ष्व कामतः ।**
**त्वत्प्रयोजनधनं धनञ्जयादन्य एष इति मां च मावगाः ॥१५॥**

**शासन इति**। गुरुण्यतिदुष्करेऽपि शासने नियोगे व्यवस्थित तदाज्ञाकरमित्यर्थः। मा कृत्यवस्तुषु कर्तव्यार्थेषु कामतो यथेच्छ नियुङ्क्ष्व प्रेषय। अनुचितमेतन्नियन्तरीति सङ्कोचं

चारयन्नाह । त्वदिति । त्वत्प्रयोजनमेव धन यस्य त त्वदर्थैकनिष्ठमित्यर्थः । मा धनानि जय॰ तीति धनञ्जयोऽर्जुन । "सञ्ज्ञाया भृतृवृजिधारिसहितपिदमः" इति खश्प्रत्यये मुमागम. । तस्मादेपोऽन्यः कृष्ण इति मा मावगाः - मावेहि च । नियोगसमुच्चयार्थश्चकारः । अवपूर्वादिणो माङि लुङ् 'इणो गा लुङि' इति गादेशः, "न माङ्योगे" इत्यट्प्रतिषेधः । उभयोस्तत्कार्यनिबन्धनान्नरनारायणात्मत्वाच्च नावयोर्भेदप्रतिपत्तिः कार्येत्यर्थः । तथा च तद्वदेव नियोगेऽप्यसकोचे उचित इति भावः । अत एवानयोर्वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुक काव्यलिङ्गमलङ्कारः । स च कृष्णयोर्भेदाभेदरूपातिशयोक्तिमूल इति अनयोरङ्गाङ्गिभावेन सङ्कर' ॥ १५ ॥

यच्चोक्त 'वीतविघ्नम्' इत्यादि तत्राभयदान प्रतिजानीते—

**यस्तवेह सवने न भूपतिः कर्म कर्मकरवत्करिष्यति ।**
**तस्य नेष्यति वपुः कबन्धतां बन्धुरेष जगतां सुदर्शनः ॥ १६ ॥**

**य इति** । यो भूपतिः तवेहास्मिन् सवने यज्ञे । 'सवन यजने स्नाने सोमे निर्दलनेऽपि च' इति विश्वः । कर्मकरवद्भृत्यवत् कर्म न करिष्यति तस्य भूपतेर्वपुः जगता बन्धुः । क्षेमङ्करत्वादिति भावः । एप सुदर्शनो मच्चक्रम् । 'शंखो लक्ष्मीपते. पाञ्चजन्यश्चक्र सुदर्शनम्' इत्यमरः । कबन्धता शिरःशून्यता नेष्यति प्रापयिष्यति छेत्स्यामि चक्रेणास्य शिर इत्यर्थः । 'कबन्ध सलिले प्रोक्तमपमूर्द्धकलेवरे' इति विश्व । अतो विघ्नशका न कार्य्येति भावः । अत्र सुदर्शने बन्धुत्वरूपणाद्रूपकालङ्कार' ॥ १६ ॥

**इत्युदीरितगिरं नृपस्त्वयि श्रेयसि स्थितवति स्थिरा मम ।**
**सर्वसम्पदिति शौरिमुक्तवानुद्वहन्मुदमुदस्थितक्रतौ ॥ १७ ॥**

**इतीति** । इतीत्थम् उदीरितगिरमुपन्यस्तवाच शौरिं नृपो युधिष्ठिरः त्वयि श्रेयस्यभ्युदये विपये स्थितवति त्वयि क्षेमङ्करे सतीत्यर्थ' । मम सर्वसम्पत् स्थिरेत्युक्तवान् । मुदम् उद्वहन् सहायसम्पत्त्या सन्तुष्यन् सन् क्रतावुदस्थित क्रतु कर्त्तुम् उद्युक्तवानित्यर्थः । तिष्ठतेर्लुङि "उदोऽनूर्ध्वकर्मणि" इत्यादिनात्मनेपदम् "स्थाघ्वोरिच्च" इति सिच कित्वादिकारः "ह्रस्वादङ्गात्" इति सकारलोप ॥ १७ ॥

अथ पञ्चत्रिंशता श्लोकैरनेकधा क्रतु वर्णयति—

**आननेन शशिनः कलां दधद्दर्शनक्षयितकामविग्रहः ।**
**आप्लुतः स विमलैर्जलैरभूदष्टमूर्तिधरमूर्तिरष्टमी ॥ १८ ॥**

**आननेत्यादि** । आननेन शशिनः कलामिव कला कान्ति दधत निदर्शनालङ्कारः । शशिमुख इत्यर्थः । अन्यत्र शशिखण्डधरेत्यर्थः । दर्शनेन क्षयितौ नाशितौ कामविग्रहौ कामक्रोधौ

येन सः । अन्यत्र दृष्टिदग्धस्मरशरीरो विमलैर्जलैराप्लुतः स्नातः । 'नद्यां स्नातीति' दीक्षाङ्ग स्नानविधानादिति भावः । अन्यत्र गङ्गोदकसिक्ता गङ्गाधरीत्यर्थः । स नृपः अष्टानां पूरणी अष्टमी । "तस्य पूरणे डट्" इति डट् प्रत्ययः "नान्तादसङ्ख्यादेर्मट्" इति मडागमः, 'टिड्ढाणञ्' इत्यादिना ङीप् । अष्टानां मूर्तीनां समाहारोऽष्टमूर्ति । "तद्धितार्थ" इत्यादिना समाहारे द्विगुरेकवचनं नपुंसकं च । तस्य धरो धारयिताऽष्टमूर्तिधरः शिवः तस्य अष्टमी मूर्तिरभूत् सोमदीक्षितोऽभूदित्यर्थः । तस्याप्यागमे शिवमूर्तित्वप्रसिद्धेः । अत्र प्रकृताप्रकृतयोः नृपशिवयोः शिवशब्दमात्रसाधर्म्यात् श्लेषालङ्कारः ॥ १८ ॥

**तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः ।**
**कर्तृता तदुपलम्भतोऽभवद्वृत्तिभाजि करणे यथर्त्विजि ॥ १९ ॥**

**तस्येति** । क्रियाः कर्माणि होमादीनि । अन्यत्र पुण्यपापकर्माणि । स्वयमकुर्वतोऽननुतिष्ठतः । अन्यत्र उदासीनस्य । अत एव सांख्यपुरुषेण सांख्यशास्त्रोक्तेनात्मना तुल्यतां बिभ्रतस्तस्य राज्ञः करणे अन्तःकरणे यथा बुद्धाविवेत्यर्थः । ऋतौ यजतीति ऋत्विक् याजकः । 'ऋत्विजो याजकाश्च ते' इत्यमरः । 'ऋत्विग्दधृग' इति निपातः । तस्मिन्वृत्तिभाजि होमादिव्यापारं कुर्वतीत्यर्थः । अन्यत्र पुण्यपापकारिणि सति तदुपलम्भतः तस्य ऋत्विग्वृत्तेरुपलम्भान्ममेदमित्यनुसन्धानादेव कर्तृता क्रियानुष्ठातृत्वमभवत् । तथैव विधिसामर्थ्यादिति भावः । अत एवाह भगवान् जैमिनिः । 'अन्या या स्यात्परिक्रिया स्नानात्सत्यप्यात्मनेपदे' इति । अन्यत्र 'तदुपलम्भतस्तस्याः बुद्धिवृत्तेरुपलम्भात्साक्षित्वेनानुसन्धानादेव कर्तृत्वमभवत्' स्वयं क्रियाभोगरहितोऽपि आत्मा बुद्धेः सन्निधानाद्रक्तस्फटिकवत्तथा भवतीत्यर्थः । उपमालङ्कारः ॥ १९ ॥

**शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।**
**याज्यया यजनकर्मिणोऽत्यजन्द्रव्यजातमपदिश्य देवताम् ॥ २० ॥**

**शब्दितामिति** । वाक्यलक्षणविदो मीमांसाशास्त्रज्ञाः यजनकर्म्मिणो यजनव्यापारवन्तः ऋत्विजः । व्रीह्यादित्वादिनिप्रत्ययः । अनुच्यत इति अनुवाक्या तया अनुवाक्यया । 'अनूच्यया याज्यया जुहोति' इति श्रुतेः । सा च प्रशास्तृपाठ्या तदभावे होतृपाठ्या देवताह्वानी ऋक् । वचेः "ऋहलोर्ण्यत्" 'चजोः कु घिण्यतोः" इति कुत्वम्, शब्दसंज्ञात्वात् "वचोऽशब्दसंज्ञायाम्" इति न प्रतिषेधः । उच्चकैः अनुपशब्दं यथा तथा शब्दितां मन्त्रवर्णेनोच्चैः प्रकाशितामित्यर्थः । 'उच्चैः ऋचा क्रियते' इति विधानात् । 'शब्द सशब्दने' इति धातोश्चौरादिकात्कर्मणि क्तः । देवतामिन्द्रादिकमुद्दिश्य द्रव्यजातं पशुपुरोडाशादि हविस्समूहं इज्यतेऽनयेति याज्या सा च होतृपाठ्या यागाङ्गसाधनमृक् 'याज्यया जुहोति' इति श्रुतेः । पूर्ववत् "ऋहलोर्ण्यत्" इति करणे ण्यत्, "यजयाचरुचप्रवचर्चश्च" इति कुत्वप्रतिषेधः । तया अत्यजन् अयजन्नित्यर्थः । देवतोद्देशेन द्रव्यत्यागो यागः इति लक्षणात् । स च त्यागः समान्यतः 'आहवनीये जुहोति' इति

तदाहवनीय इति 'सामान्यन्यायात्' विधानादन्यत्रेति ध्येयम् । द्रव्यत्यागस्याध्वर्युमात्रकर्तृत्वेऽपि याज्यापुरोऽनुवाक्यद्वारा होतृप्रशास्त्रोरपि साहित्यादत्यजन्निति बहुत्वव्यपदेशः। तथा च मैत्रावरुणेन परोऽनुवाक्यायामनुक्ताया तत्प्रकाशितदेवतोद्देशेनाध्वर्युर्होतृपठितयाज्यान्ते वषट्कारेण सोमादिकं हविस्त्यावत्याक्षीदित्यर्थः । स्वभावोक्तिरलङ्कारः ॥ २० ॥

**सप्तभेदकरकल्पितस्वरं साम सामविदसङ्गमुज्जगौ ।**
**तत्र सूनृतगिरश्च सूरयः पुण्यमृग्यजुषमध्यगीषत ॥ २१ ॥**

**सप्तेति** । तत्र क्रतौ सामानि वेत्तीति सामविदुद्गाता सप्तभेदं सप्तप्रकारं तथा तथा करेण हस्तेन कल्पिता सम्पादिता स्वरा निषादाद्यो यस्य तत् करविन्यासभेदादिभिर्व्यञ्जितसप्तस्वरमित्यर्थः । 'निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त' इत्यमरः । यद्वा स्वराः क्रुष्टाद्यः 'क्रुष्टः प्रथमो द्वितीयो मन्दो नीच' इत्याद्यः साम बृहद्रथन्तरादिकमसङ्गमस्खलितमुज्जगौ उदगायत् । किञ्च सूनृतगिरिः प्रियसत्यवाचः । 'प्रियं सत्यञ्च सूनृतम्' इत्यमरः । सूरयो विद्वांसो होत्रध्वर्य्वादयः पुण्यं श्रेयस्करम् । ऋचश्च यजूंषि च तत् ऋग्यजुषम् 'अग्निमीळे, इष इत्यादिकम्। द्वन्द्वैकवद्भाव "अचतुर" इत्यादिना द्वन्द्वे समासान्तनिपातः । अध्यगीषत । इङो लुङि ' विभाषा लुङ्लृङोः " इति गाङादेशपक्षे कुटादित्वात् सिचः ङित्वे " घुमा " इत्यादिना ईत्वम्। अत्र साममामेत्यादौ वृत्त्यनुप्रासभेदो द्रष्टव्य ॥ २१ ॥

**बद्धदर्भमयकाञ्चिदामया वीक्षितानि यजमानजायया ।**
**शुष्मणि प्रणयनादिसंस्कृते तैर्हवींषि जुहवाम्बभूविरे ॥ २२ ॥**

**बद्धेति** । बद्ध दर्भमयं दर्भविकारं काञ्चिदाम रशनागुणो यस्यास्तया । दामेति "डाबुभाभ्यामन्यतरस्याम्" इति डाप्रत्यय. । यजमानो यष्टा । "पूङ्यजोः शानन्" इति यजे. शानन्प्रत्यय । तस्य याजया पत्न्या वीक्षितानि दृष्टानि हवींषि आज्यादीनि 'पत्न्यवेक्षेत' इत्याज्यस्य प्रत्यवेक्षणसंस्कारविधानात् अर्थप्रधानत्वात् सर्वेषामाज्यादीना प्राणभृन्न्यायेन वीक्षितत्वव्यपदेश. । प्रणयनं नाम गार्हपत्यादुद्धृत्य मन्त्रेणायतने सादनम् । आदिशब्दात्परिस्तरणपरिधानसंमार्गादिसंस्कारसंग्रह । तै प्रणयनादिभि संस्कृते आहितातिशये शुष्मणि अग्नौ । 'बर्हिः शुष्मा कृष्णवर्त्मा ' इत्यमर' । अत्रापि 'आहवनीये जुहोति' इति हूयमाने अध्वर्यु कर्ता जुहूपात्रव्यापृतया तुवाहवनीयं प्रधानमिति न्यायवचनात् । तैः ऋत्विग्भिः जुहवाम्बभूविरे । जुहोतेः कर्मणि लिट्. "भीह्रीभृहुवाम्" इत्यादिना विकल्पादाम्प्रत्ययः । अत्र विषयस्य योक्त्रस्यानुपादानेन विषयिणः काञ्चीगुणस्यैव तदभेदेन निर्देशाद्भेदे अभेदरूपातिशयोक्तेरनुप्रासेन सङ्करः ॥ २२ ॥

**नाञ्जसा निगदितुं विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे ॥**
**तत्र कर्मणि विपर्ययणीनमन्त्रमूहकुशलाः प्रयोगिणः ॥२३॥**

**नेति** । तत्र तस्मिन् कर्मणि यज्ञकर्मणि अन्यथाश्रुतस्य शब्दस्यान्यथालिङ्गवचनादिभेदेन विपरिणमनमूहः तत्र कुशला प्रयोग एषामस्तीति प्रयोगिणः प्रयोक्तार ऋत्विजः आगमे आम्नाये निखिलाभिर्विभक्तिभि प्रथमादिभि. सुब्विभक्तिभिस्तिङ्विभक्तिभिश्च । विभक्तिग्रहण वच-नोपलक्षणम् । व्यक्तिभि. लिङ्गैश्चाञ्जसा सुखेन निगदितु पठितुं न भवत्यशक्यत्वादिति नाञ्जसा निगदितुम् । "अञ्जस उपसङ्ख्यानम्" इति अलुक्, नञर्थस्य नशब्दस्य "सुप्सुपा" इति समास । अथवा अञ्जकेति तृतीयान्तप्रतिरूपकमव्यय तत्त्वार्थे 'अञ्जसा तत्त्वतूर्णयो.' इति विश्व । अञ्जसा तत्त्वत इत्यर्थ । अस्मिन् पक्षे नैकपद्यनियम. त मन्त्र कर्मान्तरेनतात्पर्यवाक्य विपर्यणीनमन् विपरिणमन्ति स्म विपरिणमितवन्त इत्यर्थः । विपरिपूर्वकात् नमतात् णमश्चातो लुङ् सन्वद्भावे 'सन्यत ' इत्यभ्यासस्येत्वम् "दीर्घो लघो." इति दीर्घे "उपसर्गादसमासे ऽपि णोपदेशस्य" इति णत्वम् । अत्र नाञ्जसेति पाठविशेषणगत्या मन्त्रविपरिणमनहेतुत्वात्पदार्थ-हेतुक काव्यलिङ्गम् ॥ २३ ॥

**संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति ।**
**शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥ २४ ॥**

**संशयायेति** । संशयाय सन्देहोत्पादनाय सरूपता सादृश्य दधतोरुभयत्र रूपसाम्यादयं समासोऽय वेति संशय कुर्वतोरित्यर्थ । यथेन्द्रशत्रुरित्यत्रेन्द्रस्य शत्रुः शातयिता हन्तेति षष्ठी-तत्पुरुष । उतेन्द्र शत्रुर्यस्येति बहुव्रीहिरिति सारूप्यसंशय तत्रानियमे दोषमाह । क्रिया प्रकृत कर्म ता प्रति तामुद्दिश्येत्यर्थ । दूरभिन्नमत्यन्तविलक्षण फल ययोर्दूरभिन्नफलयोस्तयोरर्थभेदा-त्कर्मणः फलभेद प्रतिपादयतोरित्यर्थः । यथेन्द्रशत्रुरित्यत्रैव षष्ठीसमासस्येष्टत्वे वृत्रस्येन्द्रहन्तृत्व बहुव्रीहौ तु तस्येन्द्रेण वध्यत्वमिति फलभेद इति भाव । समासयोरेवविग्रहो प्रसक्तयोः सतोरित्यर्थ । भावलक्षणे सप्तमी । शब्दशासनविद शब्दशास्त्रज्ञा अन्येषामनधिकारा-दिति भाव । ते प्रकृता ऋत्विज स्वरेण तत्तत्समासविहितस्वरवशेन विग्रह वाक्येन समर्थाभिधान व्यवससु निश्चिक्यु । अस्मिन् स्वरेऽय समास तत्राय विग्रह इति अन्य-तरपक्षावधारण चक्रु । यथेन्द्रशत्रुरित्यत्रैव पूर्वपदे उदात्तत्वेन बहुव्रीहिस्वरेण बहुव्रीहिसमास-निश्चयः इन्द्र शत्रुर्यस्येति विग्रहावधारणमित्यर्थः । व्यवपूर्वस्य स्यतेर्लिटि "आदेच" इत्यात्वे द्विर्वचनादिकार्ये उसादेश. । अत्र संशयजनकत्वफलभेदप्रतिपादकपदार्थयोर्विशेषणगत्या 'सन्दि-ग्धे न्यायः प्रवर्तते' इति न्यायेन विग्रहस्य व्यवसायहेतुत्वात्पदार्थहेतुक काव्यलिङ्गमलङ्कार. ॥२४॥

**लोलहेतिरसनाशतप्रभामण्डलेन लसता हसन्निव ।**
**प्राज्यमाज्यमसकृद्वषट्कृतं निर्मलीमसमलीढ पावकः ॥२५॥**

**लोलेति** । लसता प्रकाशमानेन लोलाश्चला हेतयो ज्वाला एव रसना रसज्ञाः । 'वह्ने-र्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' इति ' रसज्ञा रसना जिह्वा' इति चामरः । तासां

शतानि तेषां प्रभामण्डलेन हसान्निवेति रूपकसङ्कीर्णोत्प्रेक्षा । पावको वह्निः वषट्कृत वषट्कारे त्यक्तं हुतमित्यर्थ. । 'हुत त्रिषु वषट्कृतम्' इत्यमरः । निर्मलीमसममलिन शुद्धमित्यर्थः । 'मलीमस तु मलिनम्' इत्यमर. । "ज्योत्स्नातमिस्रा" 'इत्यादिना मलिनशब्दान्मत्वर्थे ईमसच्प्रत्ययान्तो निपातः । प्राज्यं प्रभूतमाज्यमसकृदलीढ आस्वादयत् । लिहेः स्वरितेत्त्वाल्लुङि "हो ढ" इति ढत्वम् "झषस्तथोर्धोऽधः" इति धत्वष्टुत्वे ढलोपदीर्घौ ॥ २५ ॥

तत्र मन्त्रपवितं हविः क्रतावश्नतो न वपुरेव केवलम् ।
वर्णसम्पदमतिस्फुटां दधन्नाम चोज्ज्वलमभूद्धविर्भुजः ॥२६॥

**तत्रेति** । तत्र क्रतौ । मन्त्रैरुत्पवनादिमन्त्रै. पावित पवित्रित शोधितमित्यर्थ । "पूङश्च" इति विकल्पादिडागमः हविराज्यादिकमश्नतो भुञ्जानस्य । अशेर्भोजनार्थाल्लटः शत्रादेश. । हवींषि भुङ्क्त इति हविर्भुजोऽग्नेः सम्बन्धि अतिस्फुटाम् अतिविकासिता वर्णसम्पदं रूपसमृद्धिं दधत् केवलमेकम् । 'केवलं त्वेककृत्स्नयोः' इति शाश्वत. । वपुरेवोज्ज्वलमोजिष्ठं नाभूत् । किन्तु अतिस्फुटामतिव्यक्ता वर्णसम्पदमक्षरसमुदायं दधत 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे' इत्यमरः । नाम हविर्भुगिति नामधेय चोज्ज्वल रूढम् अभूत् निरन्तर हविर्भोजनाद्वपुः पुष्टिमाप । नाम चार्थवदासीदित्यर्थः । अत्र भोजनस्याश्नत इतिविशेषणगत्या हेतुत्वात्पदार्थहेतुक काव्यलिङ्गम् ॥ २६ ॥

स्पर्शमुष्णमुचितं दधच्छिखी यद्ददाह हविरद्भुतं न तत् ।
गन्धतोऽपि हुतहव्यसंभवाद्देहिनामदहदोघमंहसाम् ॥ २७ ॥

**स्पर्शमिति** । उचितं स्वाभाविकम् उष्णमुष्णाख्य स्पर्श स्पर्शनेन्द्रियमात्रग्राह्य गुणविशेष दधत् दधान शिखी शिखावानग्नि. । व्रीह्यादित्वादिनि । हविराज्यादिक ददाह भस्मीचकारेति यत तदद्भुत न उष्णस्पर्शसहकृतस्याग्ने. पार्थिवद्रव्यदहनशक्ते स्वाभाविकत्वादिति भाव. । कुत. हुतहव्यसम्भवात् हुतहवनीयहविर्जन्यात् गन्धतो गन्धादपि । सङ्क्रामिकगुणादपीत्यर्थः । देहिना गन्ध जिघ्रता प्राणिनामित्यर्थः । अंहसा पापानामोघमपीति भावः । अदहत् भस्मीकृतवान् नाशितवानित्यर्थ. । अदाह्यदहनं त्वाश्चर्यमिति भाव । अत्रोष्णस्पर्शधारणस्य शिखिविशेषणभावेनास्य हविर्दाहहेतुत्वात् पदार्थहेतुक तावदेक काव्यलिङ्गम् । उत्तरार्द्धे त्वहसा भस्मीकरणाभावलक्षणदाहविरोधस्य नाशलक्षणया समाधानाद्विरोधाभासे लक्ष्यस्य वाच्याभेदाध्यवसायमूलातिशयोक्तिप्रतिभोत्थापितः स एवादाह्यदाहकत्वरूपो वाक्यार्थभूतपूर्वोक्तपदार्थहेतुककाव्यलिंगसहकृतो हविर्दहनाद्भुतत्वहेतुरिति वाक्यार्थहेतुक काव्यलिंगमन्यैः प्राधान्येन सङ्कीर्य्यते ॥ २७ ॥

उन्नमन्सपदि धूम्रयन्दिशः सान्द्रतां दधदधःकृताम्बुदः ।
व्यामियाय दहनस्य केतनः कीर्त्तयन्निव दिवौकसां श्रियम् ॥२८॥

**उन्नमन्निति** । सपदि होमक्षणमेवोन्नमन्नुद्गच्छन् दिशो धूम्रयन् धूम्रवर्णाः कुर्वन् सान्द्रां नीरन्ध्रतां दधत् अत एवाधः कृताम्बुदः गोभयावधीरितमेघो मेघोपरिगतश्च दहनस्याग्नेः केतनं केतुर्धूम इत्यर्थः । द्यौरोको येषां तेषां दिवौकसां देवानाम् । पृषोदरादित्वात्साधुः । अथवा दिवमोको येषामिति विग्रहः । 'दिव स्वर्गान्तरिक्षयोः' इति विश्वः । तेषां प्रियमिष्टं कीर्तयन् कथयन्निव कीर्तनहेतोरिव कीर्त्तनार्थमित्यर्थः । अत एव फलोत्प्रेक्षा । कीर्तयन्निति "लक्षण-हेत्वोः क्रियायाः" इति हेत्वर्थे लटः शत्रादेशः । द्यामन्तरिक्षमियाय प्राप । इणो लिट् ॥ २८ ॥

**निर्जिताखिलमहार्णवौषधिस्यन्दसारममृतं ववल्गिरे ।**
**नाकिनः कथमपि प्रतीक्षितुं हूयमानमनले विषेहिरे ॥ २९ ॥**

**निर्जितेति** । नाकः स्वर्ग एषामस्तीति नाकिनो देवाः अखिलानां महार्णवौषधीनां महा-र्णवमन्थनसमये उत्थितानां दिव्यौषधिलतानां स्यन्दो मन्थनान्निःसृतो रसस्तस्य सारो मूर्धां-शोऽमृतमिति यावत् । स निर्जितो येन तत् अमृतादपि स्वाद्वित्यर्थः । अमृतं हविरास्यामृतम् । 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते' इति मेदिनी । ववल्गिरे अभ्यवजह्रुः । 'वल्ग भोजने' कर्त्तरि लिट् । 'वल्ग चाभ्यवहारः प्रत्यवसानं च जेमनं जग्धिः' इति हलायुधः । तस्यामृता-धिक्यं व्यनक्ति । अनले हूयमानदीयमानममृतमिति भावः । प्रतीक्षितुं कथमपि विषेहिरे सोढवन्तः होमविलम्बं कथञ्चिदसहन्तेत्यर्थः । तृष्णा तु प्रागेव जिघ्रतीति रसातिशयोक्तिः । अत्र हविषोऽ-मृतमित्यभेदोक्त्याभेदरूपातिशयोक्तिस्तद्विशेषणपदार्थस्य वल्गनहेतुत्वात्काव्यलिङ्गभेदः । तथा सङ्कीर्यते । "परिनिषिच्य नेवसितसयसिवुसह" इत्यादिना सहेः षत्वम् ॥ २९ ॥

**तत्र नित्यविहितोपहूतिषु प्रोषितेषु पतिषु द्युयोषिताम् ।**
**गुम्फिताः शिरसि वेणयोऽभवन्न प्रफुल्लसुरपादपस्रजः ॥ ३० ॥**

**तत्रेति** । तत्र क्रतौ नित्यं विहितोपहूतिषु कृताह्वानेषु पतिषु भर्तृषु इन्द्रादिषु प्रोषितेषु प्रवासं गतेषु । वसेः कर्त्तरि क्तः "वसतिक्षुधोः" इतीडागमः । द्युयोषितां स्वर्गस्त्रीणाम् इन्द्राण्या-दीनां शिरसि वेणयो जटा एव गुम्फिता ग्रथिता अभवन् । प्रफुल्ला विकसिताः सुरपादपस्रजो मन्दारमालाः न गुम्फिता अभवन् । अत्र सुरयोषितां वेण्यसम्बन्धेऽपि सम्बन्धोक्तेः स्रक्सम्बन्धे-ऽप्यसम्बन्धोक्तेश्च सम्बन्धेऽसम्बन्धरूपा असम्बन्धे सम्बन्धरूपा चातिशयोक्तिः । ताभ्यां च क्रतोः-रञ्जकत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ३० ॥

**प्राशुराशु हवनीयमत्र यत्तेन दीर्घममरत्वमध्यगुः ।**
**उद्धतानधिकमेधितौजसो दानवांश्च विबुधा विजिग्यिरे ॥ ३१ ॥**

**प्राशुरिति** । विबुधाः सुराः अत्र क्रतौ आशु क्षिप्रं हूयत इति हवनीयं हविः यत् प्राशुः प्राशितवन्तः । 'अश भोजने' लिट्, द्विर्वचनादिकार्ये "अत आदेः" इत्यभ्यासदीर्घः । तेन हवि-प्राशनेन दीर्घं चिरभोग्यममरत्वं देवत्वमध्यगुः प्रापुः । "इणो गा लुङि" इति गादेशः । किं-

अधिकमत्यन्तमेधितौजसो वर्द्धितबलाः सन्तः उद्धतानुद्धतान् दानवान् असुरांश्च विजिग्यिरे जित वन्तः । विपूर्वाज्जयतेः कर्त्तरि लिट् "विपराभ्यां जेः" इत्यात्मनेपदम् । अत्र विबुधाना दीर्घामरत्वासुरविजयित्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः, एधितौजस्त्वस्य विशेषणमत्या विजयहेतुत्वात्काव्यलिङ्गम्, तदुत्थापितश्चामरत्वासुरविजयक्रियासमुच्चय इति सङ्करः । 'गुणक्रियायौगपद्य समुच्चयः' इति लक्षणात् ॥ ३१ ॥

**नापचारमगमन्क्वचित्क्रियाः सर्वमत्र समपादि साधनम् ।**
**अत्यशेरत परस्परं धियः सत्रिणां नरपतेश्च सम्पदः ॥३२॥**

**नापचारमिति** । अत्र क्रतौ कचित् कुत्रापि क्रियाः कर्म्माणि अपचारं लोपविषयविपर्य्यासादिदोषं नागमन् । गमेर्लुङि "पुषादि" इत्यादिना च्लेरङादेशः । अनपचारे हेतुमाह । अत्र सर्वं साधन समपादि सम्पन्नम् । पद्यतेः कर्त्तरि लुङ्, "चिण् ते पदः" इति चिण् प्रत्ययः । कर्मणि वा । सम्पादितमित्यर्थः । " चिण् भावकर्मणोः " इति चिण्प्रत्ययः । साधनसम्पत्तिमेव व्यनक्ति । अतीति । सत्रं यज्ञतन्त्र येषामस्तीति सत्रिणाम् ऋत्विजाम् । 'सत्रमच्छादन यज्ञम्' इत्यमरः । धिय उत्तरोत्तरप्रयोगविज्ञानानि । तदुक्तम् 'ओच ुर्थात्कर्मणोऽन्ते समीक्षेतेदङ्कीरष्यामि' इति । तथा नरपतेः राज्ञः सम्पदः पदार्थसमृद्धयश्च परस्परम् अत्यशेरत अतिशयितवत्यः उभयेऽप्यतिसमग्रा इत्यर्थः । ज्ञानद्रव्ये हि क्रियासाधने । तत्सम्पन्नस्य कुतः क्रियापचार इति भावः । अत्रानपचारवाक्यार्थस्य साधनसम्पत्तिवाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्, तस्य परस्पराविशयक्रियारूपधर्मसाम्यगम्यौपम्यकेवलप्रकृतधीसम्पद्गोचरया तुल्ययोगितयोज्जीवितत्वेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३२ ॥

**दक्षिणीयमवगम्य पंक्तिशः पंक्तिपावनमथ द्विजव्रजम् ।**
**दक्षिणः क्षितिपतिर्व्यशिश्रणद्दक्षिणाः सदसि राजसूयिकीः ३३॥**

**दक्षिणीयमिति** । अथानन्तर दक्षिण औदार्यवान् । 'दक्षिणः सरलोदारौ' इत्यमरः । क्षितिपतिः राजा । दक्षिणामर्हतीति दक्षिणीयः 'दाक्षीणीयो दाक्षिणार्हस्तत्र दाक्षिण्य इत्यपि' इत्यमरः । "कडङ्करदक्षिणाच्छ च" इति छप्रत्ययः । त पक्तेः स्वाधिष्ठितायाः पावन पावयितार पंक्तिपावनम् । पावयतेः कर्त्तरि ल्युट् । द्विजव्रज ऋत्विग्वर्गमित्यर्थः । पंक्तिशः पंक्त्यनुसारेण अधिगम्य प्राप्य सदसि राजसूयिकीः राजसूयकाण्डोक्ता इत्यर्थः । दक्षिणाशब्दः स्फुटार्थः । राजसूयिकीरित्यत्र दक्षिणार्थे एव ठको विधानात् । व्यशिश्रणत् विश्राणयति स्म वितीर्णवानित्यर्थः । 'विश्राणन वितरणम्' इत्यमरः । 'श्रण दाने ' इति धातोर्लुङ् " णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वः । वृत्त्यनुप्रासोऽलङ्कारः ॥ ३३ ॥

**वारिपूर्वमखिलासु सत्क्रियालब्धशुद्धिषु धनानि बीजवत् ।**
**आवि बिभ्रति फलं महद्द्विजक्षेत्रभूमिषु नराधिपोऽवपत् ॥३४॥**

वारीति । नराधिपो राजा सत्क्रियाभिषेकसंस्कारैर्लब्धा शुद्धिर्निर्दोषता याभिस्तासु अक्लिष्टासु । द्विजा एव क्षेत्रभूमयः केदारभूमयः तासु । 'क्षेत्रं गेहे पुरे देहे केदारे योनिभार्य्ययोः' इति वैजयन्ती । भावि भविष्यत् महत्फलं स्वर्गादिकं धान्यादिकं च बिभ्राति बिभ्राणानीत्यर्थः । "वा नपुंसकस्य" इति विकल्पान्नुमागमप्रतिषेधः । धनानि बीजवत् बीजैस्तुल्यं वारिपूर्वमुदकदानपूर्वकमवपत् उप्तवान् दत्तवानित्यर्थः । अत्र बीजवत् इत्युपमानम् ' तेन तुल्यम् " इति तुल्यार्थे वतेर्विधानात् । तथापि वापक्रियायोगात् द्विजक्षेत्रेति रूपकसमासो न नोपमितसमासः किन्तु रूपकस्याङ्गमुपमा तदुत्थापितत्वादिति सङ्करः ॥ ३४ ॥

**किं नु चित्रमधिवेदि भूपतिर्दक्षयन्द्विजगणानपूयत ।**
**राजतः पुपुविरे निरेनसः प्राप्य तेऽपि विमलं प्रतिग्रहम् ॥३५॥**

किमिति । भूपतिरधिवेदि वेद्यां मखवेद्यामित्यर्थः । अत्र विभक्त्यर्थेऽव्ययीभावः । द्विजगणानृत्विग्गणान् दक्षयन् हर्षयन् दक्षिणाप्रतिग्रहेण सदक्षिणान् कुर्वन् प्रतिग्राहयन्नित्यर्थः । 'तत्क्षणे दक्षिणा प्रतिगृह्य' इति श्रुतिदर्शनात् । 'दक्ष नैपुण्ये' इति धातोर्ण्यन्ताल्लटः शत्रादेशः अत एव 'निष्णाते दक्षिणे वापि नैपुण्ये निपुणेऽपि च' इति भट्टः । अपूयत पूतोऽभवदिति । कर्म्मकर्त्तरि लङ् । किं चित्रं दाता पूत इति न चित्रमित्यर्थः । किन्तु प्रतिग्रहीतापि पूत इति चित्रमाह । ते द्विजगणा अपि निरेनसो निष्पापाः राजतो राज्ञः पञ्चम्यास्तसिल् । विमलं शुद्धं प्रतिग्रहं प्राप्य पुपुविरे पूता बभूवुः । 'विशुद्धाच्च प्रतिग्रहः' इत्यभिज्ञानादिति भावः । अत्रापि पूञः कर्मकर्त्तरि लिट् । प्रतिग्रहीतापि शुद्ध इति विरोधः । स एव वाक्यार्थभूतश्चित्रत्वनिषेधहेतुरिति विरोधवाक्यार्थहेतुककाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः ॥ ३५ ॥

**स स्वहस्तकृतचिह्नशासनः पाकशासनसमानशासनः ।**
**आशशाङ्कतपनार्णवस्थितेर्विप्रसादकृत भूयसीर्भुवः ॥३६॥**

स इति । पाको नाम कोऽपि राक्षसस्तस्य शासनः शासको हन्ता पाकशासन इन्द्रस्तेन समानं शासनं तुल्या आज्ञा यस्य स इत्यर्थः । स राजा स्वहस्तेन कृतं लिखितं चिह्नं स्वनाम लेखनादिलाञ्छनं येषु तानि शासनानि नियमपत्राणि यस्य सः दत्तस्वहस्तलेखाङ्कितशासनः सन्नित्यर्थः । आशशाङ्कतपनार्णवस्थितेः शशाङ्कतपनार्णवानभिव्याप्य आकल्पमित्यर्थः । अभिविधावाङ् । 'आङ्मर्यादाभिविध्योः" इति विकल्पादसमासः । भूयसीर्भुवो देयभूमीः विप्रसात् विप्राधीनाः । 'देये त्रा च" इति चकारात्सातिप्रत्ययः । अकृत कृतवान् दत्तवानित्यर्थः । कृञो लुङि तङ "उश्च" इति सिचः कित्वात् "ह्रस्वादङ्गात्" इति सकारलोपो गुणाभावश्च पाकशासनसमानशासन इत्युपमानुप्रासयोः संसृष्टिः ॥ ३६ ॥

**शुद्धमश्रुतिविरोधि बिभ्रतं शास्त्रमुज्ज्वलमवर्णसङ्करैः ।**
**पुस्तकैः सममसौ गणं मुहुर्वाच्यमानमशृणोद्द्विजन्मनाम् ॥३७॥**

**शुद्धमिति** । असौ नृप शुद्धमाचारपूतम् अन्यत्र विभक्तिविपरिणामेन शुद्धैरकलङ्कैः । श्रुतिविरोधि वेदविरुद्ध न भवतीत्यश्रुतिविरोधि शास्त्र विश्रुतम् आत्मनि धारयन्त सकलवेदशास्त्राभिज्ञमित्यर्थ । "नाभ्यस्ताच्छतुः" इति नुम्प्रतिषेधः । अन्यत्र श्रुत्यविरोधिभि. पुराणादिभिः वाच्यमानम् अन्वयगुणादिक्रमेण प्रस्तूयमानमन्यत्र वाच्यमान द्विजगणेन व्याख्यायमानमित्यर्थ. । वचेश्चौरादिकात्कर्मणि लट. शानजादेश' । द्विजन्मनां ब्राह्मणानां गणम् अवर्णसङ्करैरसङ्कीर्णाक्षरैः अन्यत्र जातिसङ्कररहितमिति विपरिणामः । पुस्तकै' सम पुस्तकाक्षरैर्वाक्यैः सह अश्रृणोत् । दानकाले प्रत्येकं ब्राह्मणाना गुणान् गोष्ठीश्च श्रुतवानित्यर्थः । मुखस्थविद्यानामपि पुस्तकधारणाद्विलक्षणत्वेनोक्तमित्यदोषः । अन्यत्र पुस्तकैः सम द्विजगुणम् अश्रृणोदिति । सम्बन्धिभेदे भिन्नयो श्रवणयोरभेदाध्यवसायभेदे अभेदरूपातिशयोक्तिचमत्कारिणी द्विजानां प्रकृतत्वात् पुस्तकानीव द्विजानिति वैवक्षिकोपमानोपमेयभावपर्यवसायिनी श्लेषसङ्कीर्णा सहोक्तिरलङ्कार । 'सहार्थेनान्वयो यत्र भवेदतिशयोक्तित' । कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यते' इति लक्षणात् । कश्चित् पुस्तकैः सम वाच्यमानमिति योजयित्वा पुस्तकेषु द्विजगणान् । लेखेषु पठ्यमानानिति व्याचक्षते । तै' पुस्तकेषु शास्त्रभरणासम्भवादवर्णसङ्करेति श्लिष्टविशेषणावगतप्रकृतश्लेषभङ्ग पुस्तकाना वाचनकरणत्वात्समादिशब्दवैयर्थ्यमुक्तसहोक्त्यलङ्कारभ्रंशश्चेति एवमादयो दोषा दुस्तरा इत्यलं विस्तरेण ॥ ३७ ॥

**तत्प्रणीतमनसामुपेयुषां द्रष्टुमाहवनमग्रजन्मनाम् ।**
**आतिथेयमनिवारितातिथिः कर्तुमाश्रमगुरुः स नाश्रमत् ॥३८॥**

**तदिति** । अनिवारिताः अप्रत्याख्याता अतिथयो येन सः आश्रमाणा ब्रह्मचर्यादीनां गुरुर्नियन्ता न राजा आ समन्ताज्जुहोत्यस्मिन्नित्याहवन यागम् जुहोतेर्ल्युट् द्रष्टुमुपेयुषामागतानाम् । अत एव प्रणीतमनसां सत्कर्मदर्शनात् हृष्टचित्तानाम् अग्रजन्मनाम् अतिथिषु साध्वातिथेयमतिथिसत्कारम् । "पथ्यतिथि" इत्यादिना ढञ्प्रत्ययः । कर्तुं नाश्रमत् न श्रान्तः । श्रम्यतेः पुषादित्वाल्लुङि च्लेरङादेश । अत्रानिवारितातिथित्वस्य विशेषणगत्या श्रमनिषेधहेतुत्वात्काव्यलिङ्ग तदनुप्रासेन संसृज्यते ॥ ३८ ॥

**मृग्यमाणमपि यद्दुरासदं भूरिसारमुपनीय तत्स्वयम् ।**
**आसतावसरकांक्षिणो बहिस्तस्य रत्नमुपदीकृतं नृपाः॥ ३९ ॥**

**मृग्यमाणमिति** । यत् रत्नं मृग्यमाणम् अन्विष्यमाणमपि दुरासद दुर्लभं भूरिसारं महासारम् उपदीकृतमुपायनीकृत मनसा यथा सङ्कल्पितमित्यर्थ. । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । तद्रत्न श्रेष्ठवस्तु । 'रत्न श्रेष्ठे मणावपि' इति विश्व. । नृपाः स्वयमुपनीय तस्य राज्ञोऽवसरकाङ्क्षिणः सेवावसर प्रतीक्षमाणाः बहिरासत स्थिता इत्यैश्वर्यातिशयोक्तिः । अत्र रत्ने उपदात्वस्यारोप्यमाणस्य प्रकृतोपयोगात्परिणामालङ्कार. ॥ ३९ ॥

**एक एव वसु यद्ददौ नृपस्तत्समापकमतर्क्यत क्रतोः ।**
**त्यागशालिनि तपःसुते ययुः सर्वपार्थिवधनान्यपि क्षयम् ॥ ४० ॥**

**एक इति** । एक एव नृपो यद्वसु धन ददौ उपायनमिति भावः । तद्धनमेव क्रतोः समापक सम्पूरकम् अतर्क्यत दक्षिणादानादिसर्वक्रतुव्ययपर्य्याप्ततया तार्कितमित्यर्थः । तपःसुते धर्मपुत्रे त्यागशालिनि सति सर्वपार्थिवधनान्यपि क्षय व्यय ययुः । अत्रैकपार्थिवधनस्य क्रतुसमापकत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तयोश्च सापेक्षत्वात्सजातीयसङ्कर. ॥ ४० ॥

**प्रीतिरस्य ददतोऽभवत्तथा येन तत्प्रियचिकीर्षवो नृपाः ।**
**स्पर्शितैरधिकमागमन्मुदं नाधिवेश्म निहितैरुपायनैः ॥ ४१ ॥**

**प्रीतिरिति** । ददतो दान कुर्वतोऽस्य राज्ञस्तथा तेनैव प्रकारेण राजोपायनानाम् आर्थिसात्करणेनैव प्रीतिरभवदासीत् न तु कोशगृहार्पणेनेत्यर्थ । कुतः । येन प्रकारेण तस्य राज्ञः प्रिय चिकीर्षव. प्रिय कर्त्तुमिच्छवः । मधुपिपासुप्रभृतित्वात् द्वितीयासमास । नृपा' स्पर्शितैः प्रतिपादितैः । 'स्पर्शन प्रतिपादनम्' इत्यमर' । उपायनैरुपहारैरधिक यथा तथा मुदमागमन्प्रापाः । तथैव प्रभुप्रीतिसिद्धेः सोपायनाना सिद्धिनियोगलाभाच्चेति भाव. । अधिवेश्म वेश्मनि निहितैरुपायनैर्मुदं नागमन् । तथोक्तप्रयोजनासिद्धेरिति भावः । येनैव राज्ञां मोदः स्वस्य च महान् धर्म्मलाभ तेनोपायनानामर्थिसात्करणादेव राज्ञः प्रीतिरासीत् न कोशगृहार्पणादित्यर्थः । अत एव दानसग्रहयोः प्रकृतयोः प्रीतेः सग्रहपरिहारेण दान एव नियमनात्परिसंख्यालङ्कारः । 'एकस्यानेकत्र प्राप्तावेकत्र नियमन परिसंख्या' इति लक्षणात् । एतेन सर्वस्वदान व्यज्यते इत्यालङ्कारेण वस्तुध्वनि ॥ ४१ ॥

**यं लघुन्यपि लघूकृताहितः शिष्यभूतमशिषत्स कर्मणि ।**
**सस्पृहं नृपतिभिर्नृपोऽपरैर्गौरवेण ददृशतरामसौ ॥ ४२ ॥**

**यमिति** । लघूकृता अल्पीकृता अहिताः शत्रवो येन सः । स राजा शिष्येण तुल्य शिष्यभूतम् । 'भूतं क्ष्मादौ पिशाचादौ न्याजसत्योरमानयो.' इति विश्वः । "सुप्सुपा" इति नित्यसमासः । यं नृपं लघुन्यप्यल्पेऽपि यज्ञीयपशुरक्षणादिकर्म्मणि अशिषत् आज्ञापितवान् । "सर्तिशास्त्यर्त्तिभ्यश्च" इति लुङि च्लेरङादेशः "शास इदङ्हलोः" इतीकारः । असौ कर्म्मकरो नृपः अपरैस्ततोऽन्यैर्नृपतिभिः सस्पृह अहो समान इति साभिलाषं गौरवेण ददृशेतराम् अतिशयेन दृष्टः । दृशो. कर्म्मणि लिट् "तिङश्च" इति तरप्प्रत्यये "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यमुप्रत्यय. "तद्धितश्चासर्वविभक्तिः" इत्यव्ययसंज्ञा । अत्र कर्म्मकरनृपस्येतरनृपकर्तृक विशिष्टदर्शनकर्म्मत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । तथा राज्ञो निरंकुशाज्ञत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ४२ ॥

**आद्यकोलतुलितां प्रकम्पनैः कम्पितां मुहुरनीदृगात्मनि ।**
**वाचि रोपितवतामुना महीं राजकाय विषया विभेजिरे ॥ ४३ ॥**

**आद्येति** । आद्यकोलः आदिवराहः । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमर' । तेन तुलिता कल्पादौ उद्धृताम् । तथापि प्रकम्पनैः प्रक्षोभकैर्हिरण्याक्षप्रमुखैः कम्पिता क्षोभिता महीम् । अनीदृगात्मनि अनेवरूपाया केनाप्यकम्पितायामस्खलितायां वाचि रोपितवता स्थापितवता स्थिरेण रोपणेन स्थिरीकुर्वतेत्यर्थ. । अमुना राज्ञा राजकाय राज्ञां समूहाय । 'गोत्रोक्ष' इत्यादिना वुञ् प्रत्यय' । विषया देशाः । 'नीवृज्जनपदो देशविषयौ तूपवर्त्तनम्' इत्यमर. । विभेजिरे अस्यायमिति विभक्ताः । प्राक् विजयोद्धृतान् राज्ञः पुनः पदेषु स्थापयामासेत्यर्थ । अत्रादिवराहो महीमुद्धृतवानेव वाचैवासौ तु निरातङ्क स्थापितवाश्चेति उपमानादुपमेयस्याधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ४३ ॥

**आगताद्व्यवसितेन चेतसा सत्त्वसम्पदविकारिमानसः ।**
**तत्र नाभवदसौ महाहवे शात्रवादिव पराङ्मुखोऽर्थिनः ॥४४॥**

**आगतादिति** । सत्त्वसम्पदा गुणाधिक्येन अविकारिमानसो लोभाभिभवाभ्याम् अनुपप्लुतचित्त इत्यर्थ । 'सत्त्व गुणे पिशाचादौ बले द्रव्यस्वभावयो' इति विश्वः । असौ राजा तत्र तस्मिन् आ समन्तात् जुह्वति अस्मिन्नित्याहवो यागः । 'ऋदोरप्' इति जुहोतेरप्प्रत्यये गुणावादेशौ आहूयन्ते शत्रवो यस्मिन्नित्याहवो युद्धम् 'आङि युद्धे' इति ह्वयतेराङ्पूर्वादप्प्रत्ययः सम्प्रसारणम् । 'आहवो यागयुद्धयोः' इति विश्व. । महांश्चासौ स च महाहवस्तस्मिन्महाहवे व्यवसितेन निश्चितेन धनलाभ निश्चितवता । अन्यत्र शत्रोर्मृत्युरेवेति निश्चितवतेत्यर्थः । व्यवपूर्वात् स्यतेः सकर्म्मकत्वादप्यविवक्षिते कर्मकर्त्तरि क्तः । 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वचनात् । चेतसा आगतात् चेतसा स्वय निश्चित्यागतादित्यर्थ' । अर्थिनो याचकात् । शत्रुरेव शात्रव । स्वार्थेऽण् प्रत्ययो राक्षसवत् । तस्मादिव पराङ्मुखो नाभवत् । 'आहवेष्वनिवर्तित्व प्रजाना चैव पालनम् । शुश्रूषा ब्राह्मणाना च राज्ञा श्रेयस्कर परम्' इति मनुस्मरणात् इति भावः । श्लेषसङ्कीर्णेयमुपमा ॥ ४४ ॥

**नैक्षतार्थिनमवज्ञया मुहुर्याचितस्तु न च कालमाक्षिपत् ।**
**नादितात्पमथ न व्यकत्थयद्दत्तमिष्टमपि नान्वशेत सः ॥४५॥**

**नैक्षतेति** । स राजा अर्थिनं याचक मुहुरवज्ञया अनादरेण नैक्षत । तर्हि विलम्बित किं नेत्याह । याचितस्तु प्रार्थित एव काल नाक्षिपत् न यापयामास । याचकबहुत्वात्तर्ह्यल्पदाता नेत्याह । अल्पमपि नादित न ददौ किं तु यथार्थिकाममिति भावः । ददातेर्लुङि तङि "स्थाघ्वोरिच" इतीकारः, "ह्रस्वादङ्गात्" इति सलोपः । तर्हि विकत्थनः किं नेत्याह । न व्यकत्थयत् आत्मश्लाघा न चकार । 'कत्थ श्लाघायाम्' किंच इष्ट प्रियमपि दत्त वस्तु नान्वशेत

नानुतप्तवान् । दत्तानुतापस्यापि प्रत्यवायहेतुत्वादिति भाव. । अत्रार्थिसन्दोहयाच्ञादिना [illegible] कारणसामग्र्येऽपि विलम्बादिकार्य्यानुत्पत्तेर्विशेषोक्तिरलङ्कार । 'तत्सामग्र्यादनुत्पत्तिर्विशेषोक्ति-र्निगद्यते' इति लक्षणात् । तथा दातु सात्विक व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ४९ ॥

**निर्गुणोऽपि विमुखो न भूपतेर्दानशौण्डमनसः पुरोऽभवत् ।**
**वर्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्य्यमूषरम् ॥ ४६ ॥**

**निर्गुण इति** । दानशौण्डमनसो दानशूरचित्तस्य । वहुप्रदस्येत्यर्थ । 'स्युर्वदान्यस्थूल-लक्षदानशौण्डा बहुप्रदे । मत्ते शौण्डोत्कटक्षीवाः' इत्यमर । भूपतेः पुरोऽग्रे निर्गुणस्तपोवि-द्यादिगुणहीनोऽपि विमुखो निष्फलो नाभवत् किन्तु पूर्णकाम एवाभवत् । भूरिदाने सर्वस्यापि पात्रत्वादिति भावः । अत एव तेनापात्रवर्पदोषोऽपि न करुणवृत्तेरित्याशयेन दृष्टान्तमाह । वर्पुकस्येति । अपो जलानि । "न लोक" इत्यादिना षष्ठीप्रतिषेध । वर्पुकस्य वर्षणशीलस्य । "लषपत" इत्यादिना उकञ्प्रत्यये लघूपधगुणः । कृतोन्नतेः कृतोदयस्याम्बुदस्य अम्बुदेनेत्यर्थ । "कृत्याना कर्तरि वा" इति षष्ठी । 'स्यादूषः क्षारमृत्तिका' इत्यमरः । तद्वत्क्षेत्रमूषरम् । 'ऊष-वानूषरोद्वावप्यन्यलिङ्गौ स्थल स्थली' इत्यमरः , "ऊषशुषिमुष्कमधो र" इति रप्रत्ययः । परिहार्यं त्याज्य किं नेत्यर्थः । अत्र पर्जन्यभूपाल्योर्वाक्यभेदेन बिम्बप्रतिबिम्बतया समानधर्माभि-धानात् दृष्टान्तालङ्कार ॥ ४६ ॥

**प्रेम तस्य न गुणेषु नाधिकं न स्म वेद न गुणान्तरञ्च सः ।**
**दित्सया तदपि पार्थिवोऽर्थिनं गुण्यगुण्य इति न व्यजीगणत् ४७**

**प्रेमेति** । तस्य राज्ञो गुणेषु अधिक प्रेम नेति न । किन्तु अस्त्येवेत्यर्थ । राजा गुणान्तरं गुणविशेष न वेद न वेत्ति स्मेति न च किन्तु वेदैवेत्यर्थः । "लट् स्मे" इति भूतार्थे लट् "विदो लटो वा" इति णलादेश । 'सभाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ' इति वामनः । सभावितयोर-विमर्शादेवागुणप्रीतिज्ञानयोर्निषेध इति भाव । तदपि तथापि पृथिव्या ईश्वर. पार्थिव । "सर्व-भूमिपृथिवीभ्यामणञौ" इत्यञ् प्रत्यय । दित्सया दातुमिच्छया सर्वपात्रदानकौतुकेनेत्यर्थ. । "सनि मीमा" इत्यादिना इसादेश., 'अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोप. । अर्थिन याचक गुणी गुणवान् अगुण्यो नाय गुणवानिति न व्यजीगणत् न गणयति स्म । गुणप्रियोऽपि गुणज्ञोऽपि दानशौण्डोऽर्थितया गुण्यगुण्या न गणयामासेत्यर्थ. । गणेणौ चङि" "ई च गणः" इत्यभ्यासस्य विकल्पादीकारः । अत्र गुणप्रियत्वगुणज्ञत्वरूपकारणसामर्थ्येऽपि गुणागुणविमर्श-रूपकार्यानुत्पत्तेः दित्सयेत्युक्तनिमित्ता विशेषोक्तिरुक्तलक्षणात् ॥ ४७ ॥

**दर्शनानुपदमेव कामतः स्वं वनीयकजनेऽधिगच्छति ।**
**प्रार्थनार्थरहितं तदाभवदीयतामिति वचोऽतिसर्जने ॥४८॥**

**दर्शनेति** । वनीयकजने अर्थिजने । दर्शनानुपदं राजविलोकनानन्तरमेव प्रार्थनामकृत्वे-त्यर्थः । 'वनीयको याचनको मार्गणो याचकार्थिनौ' इत्यमरः । कामतो यथेच्छं स्व धनमधि-गच्छति लभमाने सति । तदा दीयतामिति वचो दीयतामित्येतत्पद प्रार्थना याच्ञा मह्य दीय-तामिति वाञ्छा सैवार्थस्तेन रहित शून्यं सत् तदा अतिसर्ज्जने त्यागेऽभवत् अवर्त्तत । मह्य दीय-तामिति अर्थिवाक्याभावादस्मै दीयतामिति दातृवाक्यमेवान्वर्थमभूदित्यर्थः । अर्थिनामागमनमेव याचनमिति विवेकिनां किं याच्ञादैन्यदर्शनचापलेनेति भावः । अत्र दीयतामिति वचः सप्रार्थ-नार्थवर्जनेन तेनातिसर्जनार्थताकथनादेकस्यानेकत्वप्रसक्तावेकत्र नियमनाख्या परिसख्या ॥ ४८ ॥

## नानवाप्तवसुनार्थकाम्यता नाचिकित्सितगदेन रोगिणा ।
## इच्छताशितुमनाशुषा न च प्रत्यगामि तदुपेयुषा सदः ॥ ४९ ॥

**नानेति** । अर्थकाम्यता अर्थमात्मन इच्छता धनार्थिना । "काम्यच्" इति काम्यच् । प्रत्यये सनाद्यन्तत्वेन धातुत्वाल्लटि शत्रादेशः । तत्सद उपेयुषा प्राप्तवता पुरुषेण अनवाप्तवसुन अलब्धधनेन न प्रत्यगामि । न प्रत्यावर्त्ति । रोगिणा उपेयुषा अचिकित्सितगदेन अशमितरोगेण । 'रोगव्याधिगदामयाः' इत्यमरः । न प्रत्यगामि । आशितुं भोक्तुम् इच्छता उपेयुषा अनाशुषा च अनशितेनाभुक्तवतेत्यर्थः । " उपेयिवाननाश्वाननूचानश्च " इति क्वसुप्रत्ययान्तो निपातः । न प्रत्यगामि । किन्तु सर्वेणापि पूर्णकामेनैव प्रत्यगामीत्यर्थः । गमेर्भावे लुङ् । अत्रार्थिरोगिक्षुधि-ताना प्रकृतानामेव पूर्णकामत्वसाम्याद्धर्म्यौपम्यत्वात्केवलप्रकृतविषया तुल्ययोगिता । तथा च यो यत्काम आगतः स तत्सर्वमेवास्मादलभतेति व्यज्यते ॥ ४९ ॥

## स्वादयन्नसमनेकसंस्कृतप्राकृतैरकृतपात्रसङ्करैः ।
## भावशुद्धिसहितैर्मुदं जनो नाटकैरिव बभार भोजनैः ॥५०॥

**स्वादयन्निति** । अनेकानि बहूनि संस्कृतानि हिंगुमरिचादिना कृतसंस्काराणि प्राकृतानि प्रकृतिसिद्धानि संस्कारं विना स्वादूनि कृतानि फलादीनि च येषु तैः । अन्यत्रानेकविचित्रसं-स्कृतप्राकृतौ भाषाविशेषौ येषु तैः अकृतः पात्राणां भाजनानाम् अन्यत्र भूमिकाना च सङ्करो व्यतिकरो येषु तैः । भावशुद्धिः पदार्थानां मृष्टता अथवा भावशुद्धिः गर्हाविरहः तत्सहितैः । अन्यत्र भावाः स्थायिनो रत्यादयः तेषां शुद्धिः सजातीयविजातीयातिरस्कृतरूपकम् । 'सजा-तीयैर्विजातीयैरतिरस्कृतमूर्तिमान् । यावद्रस वर्त्तमानः स्थायीभाव उदाहृतः । ' इति, लक्षणात् । तत्सहितैर्भोजनैरभ्यवहारैर्नाटकै रूपकविशेषैरिव रस मधुरादिकं शृङ्गारादिकं च स्वादयन्ननुभ-वन् जनो भोक्तृजन सामाजिकजनश्च मुदमानन्दं बभार । श्लेषसङ्कीर्णेयमुपमा ॥ ५० ॥

## रक्षितारमिति तत्र कर्मणि न्यस्य दुष्टदमनक्षमं हरिम् ।
## अक्षतानि निरवर्त्तयत्तदा दानहोमयजनानि भूपतिः ॥५१॥

**रक्षितारमिति ।** इतीत्थं भूपतिर्युधिष्ठिरः । तत्र कर्मणि राजसूयाध्वरे दुष्टानां दमे मर्दने क्षमं समर्थं हरिं रक्षितारं विघ्नेभ्यस्त्रातारं न्यस्य निधाय अक्षतानि अविहतानि दानहोमयजनानि निरवर्त्तयदन्वतिष्टत् । स्वकीयस्य द्रव्यस्य स्वस्वत्वनिवृत्तिपरस्वत्वोत्पादनं दानम्, देवतोद्देशेनाग्नौ हविःप्रक्षेपो होमः, हुतस्य देवतोद्देशेन वाङ्मनसाभ्यां न ममेति त्यागो यागः। अत्र दुष्टदमनक्षमत्वस्य विशेषणगत्या हरेः रक्षाधिकारहेतुन्यासहेतुत्वात्पदार्थहेतुक काव्यलिङ्गम् ॥ ९१ ॥

**एक एव सुसखैष सुन्वतां शौरिरित्यभिनयादिवोच्चकैः ।**
**यूपरूपकमनीनमद्भुजं भूश्चषालतुलिताङ्गुलीयकम् ॥ ९२ ॥**

**एक इति ।** सुन्वता सोमाभिषव कुर्वताम् । सोमयाजिनामित्यर्थः । सुनोतेर्लट' शत्रादेश' । सुसखा सत्सहायः । "न पूजनात्" इति समासान्तप्रतिषेध. । एष' शौरिरेक एवेत्यभिनयादिव तद्व्यञ्जकचेष्टा कृत्वेवेत्युत्प्रेक्षा । 'व्यञ्जकाभिनयौ समौ' इत्यमरः । भूर्देवयजनभूमि' । चषालेन यूपकटकेन । 'चषालो यूपकटकः' इत्यमरः । तेन तुलितं समीकृतमित्यर्थ. । तुलयतेस्तत्करोतेर्ण्यन्तात्कर्मणि क्तः । तदगुलीयकमूर्मिका यस्य तम् अगुलीयकोपमानचषालमित्यर्थः । अगुलीयकमूर्मिका इत्यमरः । "जिह्वामूलागुलेश्छः" इति भावे छप्रत्यय. । उच्चकैरुन्नत यूप पशुबन्धनदारुविशेषो रूपक स्वरूप यस्य त भुजम् अनीनमत् उन्नमितवती । नमेर्णौ चङि सन्वत्कार्यम् । अत्र सापेक्षत्वादुपमोत्प्रेक्षयोः सङ्कर' ॥ ९२ ॥

**इत्थमत्र विततक्रमे क्रतौ वीक्ष्य धर्ममथ धर्मजन्मना ।**
**अर्घदानमनु चोदितो वचः सभ्यमभ्यधित शन्तनोः सुतः ९३॥**

**इत्थमिति ।** इत्थमत्र क्रतौ विततक्रमे विस्तृतानुष्ठाने सति अथानन्तर धर्माज्जन्म यस्य तेन धर्मजन्मना धर्मात्मजेन । 'जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरणे' इति वामनः । धर्मं वीक्ष्य धर्मशास्त्रमनुस्मृत्येत्यर्थः । अर्घदान पूजादानमनु । सदस्यपूजामुद्दिश्येत्यर्थ' । 'मूल्ये पूजाविधावर्घः' इत्यमरः । चोदितः कस्मै देयमिदमिति पृष्टः शन्तनोः सुतो भीष्म' सभ्य सभाया साधु "सभाया यः" इति यप्रत्ययः । वचो वाक्यमभ्यधित अभिहितवान् । दधातेर्लुङि तङि "स्थाघ्वोरिच" इति इत्वे, "ह्रस्वादङ्गात्" इति सकारलोप । वृत्यनुप्रास' ॥ ९३ ॥

अथासर्गसमाप्तेः भीष्मवच.प्रपञ्चमेव सफल दर्शयति-

**आत्मनैव गुणदोषकोविदः किं न वेत्सि करणीयवस्तुषु ।**
**यत्तथापि न गुरून्न पृच्छसि त्वं क्रमोऽयमिति तत्र कारणम् ९४**

**आत्मनेति ।** तत्रात्मनो बहुमानकरणात् प्रीतस्तत्रभवान् भीष्मो राजान तावत् उत्साहार्थमेकेनोपश्लोकयति । वेत्तीति विदो ज्ञाता । इगुपधलक्षणः कप्रत्ययः । कसो विद्यास्थानस्य विदः कोविदः । गुणदोषयोः कोविदो विवेक्ता । करणीयवस्तुषु कर्तव्यार्थेषु आत्मनैव स्वय-

इव परोपदेशानपेक्षयैवेत्यर्थः । प्रकृत्यादित्वात् तृतीया । किं न वेत्सि सर्वं जानासीत्यर्थः । तथापि त्वं ज्ञातापि गुरून्न पृच्छसीति न, किन्तु पृच्छस्येवेति । यत् । ज्ञानप्रसक्तं न पृच्छसीति वारणाय नञ्द्वयम् । तत्र गुर्वनुयोगे अयं क्रम इति न्यायः । सदाचारपरिपाटीत्येतदेव कारणं तत्त्वज्ञानमित्यर्थः । अत्र कर्तव्यार्थप्रश्नस्याज्ञानहेतुकत्ववारणेनापरहेतुकत्वे नियमनात्पूर्वोक्तलक्षणपरिसङ्ख्यानम् ॥ ९४ ॥

एवं राजानमुपश्लोक्य प्रश्नस्योत्तरमाह—

**स्नातकं गुरुमभीष्टमृत्विजं संयुजा च सह मेदिनीपतिम् ।**
**अर्घभाज इति कीर्त्तयन्ति षट् ते च ते युगपदागताःसदः॥९५॥**

**स्नातकमिति** । स्नातको गृहस्थविशेषस्तं गुरुं पित्रादिकं अभीष्टमिष्टबन्धुमृत्विजं याजकं संयुज्यत इति संयुक् सम्बन्धी जामाता तेन सह मेदिनीपतिं राजानं च तं च मेदिनीपतिं चेत्यर्थः । षट् षडेतान् अर्घभाजः पूजार्हा इति । इतिशब्देनाभिहितत्वान्न कर्मणि द्वितीया । यथाह वामनः ' निपातेनाप्यभिहिते कर्मणि न कर्मणि विभक्तिः परिगणनस्य प्रायिकत्वात् ' इति । कीर्तयन्ति कथयन्ति वृद्धा इति शेषः । न च ते दूरा इत्याह । ते च षडपि ते तव सदः सभां युगपदागताः प्राप्ताः । अत्र स्नातकादीनां प्रकृतानामेवार्घभाक्त्वसाधर्म्यादौपम्यावगमात् तुल्ययोगिताभेदः ॥ ९५ ॥

**शोभयन्ति परितः प्रतापिनो मन्त्रशक्तिविनिवारितापदः ।**
**त्वन्मखं मुखभुवः स्वयंभुवो भूभुजश्च परलोकजिष्णवः ॥९६॥**

**शोभयन्तीति** । किञ्च प्रतापयितुं शीलं येषां ते प्रतापिनः शत्रुतापकाः । ताच्छील्ये णिनिः । अन्यत्र तेजस्विनः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ' इत्यमरः । " अत इनिठनौ " इति इनि प्रत्ययः । मन्त्रशक्त्या वेदमहिम्ना अन्यत्र विचारसामर्थ्येन विनिवारिताः आपदो दैवमानुषविपत्तयो यैस्ते । 'वेदवादे गुप्तमन्त्रे मन्त्रः' इत्यमरः । परलोकस्य लोकान्तरस्य शत्रुजनस्य च जिष्णवो जयशीलाः । स्वयम्भुवो ब्रह्मणो मुखभुवो मुखजाता ब्राह्मणाः । 'ब्राह्मणोऽस्य मुखमासीत् ' इति श्रुतेः । भूभुजो राजानश्च । त्वन्मखं तव क्रतुं परितः शोभयन्ति परिष्कुर्वन्ति सर्वेऽप्यागत्य वसन्तीत्यर्थः । अत्र राज्ञां ब्राह्मणानां च प्रकृतानामेव प्रतापादिसाधर्म्येणोपमानात्तुल्ययोगिताभेदः साधर्म्यं च श्लेषनिबन्धनमिति सङ्करः ॥ ९६ ॥

**आभजन्ति गुणिनः पृथक्पृथक्पार्थ सत्कृतिमकृत्रिमाममी ।**
**एक एव गुणवत्तमोऽथ वा पूज्य इत्ययमपीष्यते विधिः ॥९७॥**

**आभजन्तीति** । हे पार्थ पृथापुत्र । " तस्येदम् " इत्यण् । सामान्यस्य विशेषपर्यवसानानियमादपत्यार्थलाभः । अन्यथा " स्त्रीभ्यो ढक् " इति ढक् स्यात् । गुणिनो गुणाढ्या अमी पूर्वश्लोकद्वयोक्ताः स्नातकादयः पृथक् पृथक् प्रत्येकमकृत्रिमामकपटां सत्कृतिं सत्कारम् आभजन्ति

अर्हन्ति । सममेषां प्रत्येकं पूजा कार्य्येत्यर्थः । अथ स्वामिमतं पक्षान्तरमाह । अथेति । अथ वा गुणवत्तमोऽतिगुणवानेक एव पूज्य इत्ययमपि विधिः शास्त्रमनुष्ठानं वेष्यते । इत्यनुः शेषः । अत्र स्नातकादीनां पूज्यत्वे गुणो विशेषणतया हेतुरिति काव्यलिङ्गभेदः । तदपेक्षया गुणवत्तमत्वमेकस्यैवपूज्यत्वे तथैव हेतुरिति काव्यलिङ्गान्तरमिति सजातीयसङ्करः ॥ ९७ ॥

अथ कस्तथा सर्वोत्तरः पुमानस्तीत्याकाङ्क्षायां कोऽन्यो हरिं विनेत्याह-

**अत्र चैष सकलेऽपि भाति मां प्रत्यशेषगुणबन्धुरर्हति ।**
**भूमिदेवनरदेवसङ्गमे पूर्वदेवरिपुरर्हणां हरिः ॥ ९८ ॥**

**अत्रेति** । अत्रास्मिन् कालेऽपि भूमिदेवा ब्राह्मणा नरदेवा राजानस्तेषां सङ्गमे ब्राह्मणक्षत्रियसमवाये इत्यर्थः । अशेषगुणानां बन्धुः समस्तसर्वगुणाढ्य इत्यर्थः । असाधारणगुणानाह । पूर्वेति । पूर्वदेवाः सुरद्विषस्तेषां रिपुर्हन्ता एषः हरिः कृष्णः अर्हणां पूजाम् अर्हति प्राप्नोतीति मामधिकृत्य भाति मम प्रतिभातीत्यर्थः । अन्ये तु नार्हतीत्यपि सिद्धमिति भावः । अत्र तत्रान्येषु च प्रसक्ताया पूजाया हरावेव नियमात्परिसङ्ख्यालङ्कारः । ' एकस्य वस्तुनः प्राप्तावनेकत्रैकदा यदा । एकत्र नियमः सा हि परिसङ्ख्या निगद्यते ' इति लक्षणात् ॥ ९८ ॥

ननु तस्मिन् ब्राह्मणक्षत्रियसमूहे कथमस्यैव पूज्यत्वमित्याशंक्य सर्वोत्तमत्वादित्याशयेनासर्गसमाप्तेरेनं स्तौति-

**मर्त्यमात्रमवदीधरद्भवान्मैनमानमितदैत्यदानवम् ।**
**अंश एष जनतातिवर्त्तिनो वेधसः प्रतिजनं कृतस्थितेः ॥९९॥**

**मर्त्येत्यादि** । आनमिताः प्रह्वीकृताः दैत्याः दितिसुताः दानवाः दनुसुताश्च येन तमेनं हरिं भवान् मर्त्यमात्रं मनुष्यमात्रं माऽवदीधरत् न जानीयात् । " शेषे प्रथमः " इति प्रथमपुरुषः । कुतः । एषः कृष्णो जनतातिवर्त्तिनः सर्वलोकातीतस्य प्रतिजनं कृतस्थितेश्च सर्व्वभूतान्तर्य्यामिण इत्यर्थः । वेधसः परमात्मनोंऽशः कला । अतो न मर्त्यमात्रमित्यर्थः । अत एव वाक्यहेतुकं काव्यलिङ्गम् ॥ ९९ ॥

पुनरप्यमानुषत्वमेव व्यनक्ति-

**ध्येयमेकमपथे स्थितं धियः स्तुत्यमुत्तममतीतवाक्पथम् ।**
**आमनन्ति यमुपास्यमादरादूरवर्त्तिनमतीव योगिनः ॥ ६० ॥**

**ध्येयमिति** । योगिनो नारदादयः एकमद्वितीयम् उत्तमं सर्वोत्तमं यमेनं ध्येयं ध्यातव्यम् । एकार्थगोचरात्मधारणं ध्यानं तदर्हमित्यर्थः । तथापि धियो ज्ञानस्यापथेऽमार्गे स्थितं तदगोचरमित्यर्थः । " पथो विभाषा " इति समासान्तः "अपथं नपुंसकम्" इति नपुंसकम् । आमनन्ति कथयन्ति । " पाघ्रा " इत्यादिना म्नाधातोर्मनादेशः । स्तुत्यं स्तोतुमर्हं तथापि अतीतो वाक्पथो येन तम् अवाङ्मनसगोचरमित्यर्थः ' यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ' इति

श्रुतेः। आमनन्ति। आदरादास्थया उपास्य सेव्यम्। तथापि अतीवात्यन्तम्। अतीवेति निपातसमुदायोऽत्यन्तार्थेऽव्ययम्। दूरवर्तिनम् आमनन्ति। यमेनमचिन्त्यरूपमामनन्ति तमेन मर्त्यमात्रं मावदीधरदिति पूर्वेणान्वयः। अवाङ्मनसगोचरत्वदूरवर्त्तित्वाना ध्येयत्वस्तुत्यत्वोपास्यत्वैः सह विरोधस्य हरेरचिन्त्यमहिमत्वेन समाधानाद्विरोधाभासोऽलङ्कारः॥ ६०॥

ननु हरिहरहिरण्यगर्भास्त्रयो देवाः सर्वोत्तरमहिमानः सन्त्येन न जानीम इत्यत आह—

**पद्मभूरिति सृजञ्जगद्रजः सत्त्वमच्युत इति स्थितिं नयन्।**
**संहरन्हर इति श्रितस्तमस्त्रैधमेष भजति त्रिभिर्गुणैः॥६१॥**

**पद्मभूरिति**। एष हरिः रजः रजोगुणं श्रितः जगत् सृजन् पद्मभूर्ब्रह्मेति। सत्त्वं सत्त्वगुणं श्रितः जगत् स्थितिं नयन् स्थापयन् अच्युतो विष्णुरिति। तमस्तमोगुणं श्रितः जगत् संहरन् हर इति त्रिभिर्गुणैः सत्त्वरजस्तमोभिस्त्रैधं त्रैविध्यं भजति। "द्वित्र्योश्च धमुञ्" इति विधार्थे धमुञ्प्रत्ययः। अस्यैव गुणभिन्नास्तास्तिस्रोऽपि मूर्तयः इत्ययमेव सर्वोपास्य इति भावः। अत्र सत्त्वादिगुणयोगस्य सृष्ट्यादिगुणयोगस्य च विशेषणगत्या त्रैविध्यहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्॥ ६१॥

तर्हि कीदृशमस्य स्वरूपं कुतो वा मानुषविग्रह इत्यपेक्षायामुभयं निरूपयन्नाह—

**सर्ववेदिनमनादिमास्थितं देहिनामनुजिघृक्षया वपुः।**
**क्लेशकर्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः॥ ६२॥**

**सर्वेति**। अमुं कृष्णं सर्ववेदिनं सर्वज्ञमित्यर्थः। अत एवानादिमादिरहितम् अनादिनिधनमित्यर्थः। तथापि देहिनां प्राणिनाम् अनुजिघृक्षया अनुग्रहीतुमिच्छया। भूभारावतरणार्थमित्यर्थः। ग्रहेः सन्नन्तात् स्त्रियाम् "अप्रत्ययात्" इति अप्रत्यये टाप्। वपुरास्थितं मानुषविग्रहमास्थितं कर्मारब्धशरीरभाजमित्यर्थः। अत एव क्लेशकर्मफलभोगवर्जितम्। क्लेशाः पञ्च क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाख्याः। कर्माणि पुण्यपापानि तेषां फले सुखदुःखे तयोर्भोगोऽनुभवस्तेन क्लेशैश्च वर्जितं तैरसस्पृष्टमित्यर्थः। ईश्वरम् ईश्वरशब्दितम् पुंविशेषं क्षेत्रज्ञविलक्षणं पुरुषविशेषं परमपुरुषं वा विदुः विदन्ति सन्त इति शेषः। "विदो लटो वा" इति झेरुसादेशः। अत्राकर्मारब्धत्वान्नित्यज्ञानात्वादिविरोधसमर्थनाद्विरोधाभासोऽलङ्कारः। तेषामेव गुणानां विशेषणगत्या पुंविशेषहेतुत्वात्काव्यलिङ्गमिति सङ्करः॥ ६२॥

एवं हरेः स्वरूपं निरूप्य तदुपासनात्फलं युग्मेनाह—

**भक्तिमन्त इह भक्तवत्सले सन्ततस्मरणरीणकल्मषाः।**
**यान्ति निर्वहणमस्य संसृतिक्लेशनाटकविडम्बनाविधेः॥ ६३॥**

**भक्तिमन्त इति**। भक्तवत्सले भक्तप्रिये इहास्मिन् हरौ भक्तिमन्तोऽनुरागवन्तो जनाः। पूज्येषु अनुरागो भक्तिः। सन्ततं सततं तत्स्मरणेन निरन्तरध्यानेन रीणकल्मषाः क्षीणपापाः

सन्त' । 'रीङ् क्षये' "ल्वादिभ्यः" इति निष्ठानत्वम्। अस्य अनुभूयमानस्य कृष्णस्य संसृतिः संसारस्तस्य क्लेशः दुःखं तदेव नाकमिति रूपकम् । तस्य विडम्बनामिनयस्तस्य निर्वहणं समाप्तिं यान्ति । मुच्यते इत्यर्थः । 'तमेव विद्वानमृत इह भवति' इति श्रुतेरिति भावः ॥६३॥

**ग्राम्यभावमपहातुमिच्छवो योगमार्गपतितेन चेतसा ।**
**दुर्गमेकमपुनर्निवृत्तये यं विशन्ति वशिनं मुमुक्षवः ॥६४॥**

**ग्राम्येति** । ग्रामे भवाः ग्राम्याः प्राकृता मूढा इति यावत् । "ग्रामाद्यखञौ" इति यप्रत्ययः । तेषां भावस्तम् अपहातुं मोक्तुमिच्छवः मुमुक्षवो मोक्षार्थिनः अपुनर्निवृत्तयेऽपुनरावृत्तये पुनरावृत्त्यभावाय मोक्षाय इत्यर्थः । दुःखेन गम्यत इति दुर्गं दुष्प्रापम् एकमेवाद्वितीयं वशिनं स्वतन्त्रं यं हरिं योगमार्गनिपतितेन ध्यानमार्गनिष्ठेन । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । चेतसा विशन्ति । ध्यायन्तीत्यर्थः । यं विशन्ति इह भक्तिमन्त इति पूर्वेणान्वयः॥६४॥

अथ भक्त्युद्रेकान्नमस्करोति—

**आदितामजननाय देहिनामन्ततां च दधतेऽनपायिने ।**
**बिभ्रते भुवमधः सदाथ च ब्रह्मणोऽप्युपरि तिष्ठते नमः ॥६५॥**

**आदितामिति** । देहिनां प्राणिनाम् आदितां कारणताम् अन्तोऽन्तकरो नाशहेतुः । "तत्करोति" इति ण्यन्तादन्तयतेः पचाद्यच् । तस्य भावस्तत्तामन्ततां च दधते । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः । स्वयमजननाय जन्मरहिताय अपायोऽस्यास्तीत्यपायी स न भवतीत्यनपायी तस्मै अनपायिने नाशरहिताय च कालतोऽपरिच्छिन्नायेत्यर्थः । देशतोऽपि तथेत्याह । सदाऽधः पाताले भुवं बिभ्रते कूर्मरूपेण दधते अथ च तथैव ब्रह्मणो लोकस्याप्युपरि तिष्ठते सर्वव्यापिने इत्यर्थः । तस्मै हरये इति शेषः । नमः नमस्कारः । "नमः स्वस्ति" इत्यादिना चतुर्थी । अत्र हरेरनादिनिधनत्वेन तद्वतः पुरुषान्तरादाधिक्यवर्णनाद्व्यतिरेकालङ्कारः ॥ ६५ ॥

**केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि ।**
**धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः ॥ ६६ ॥**

**केवलमिति** । सृजतिश्च संहृश्च शास्तिश्च सृजतिसंहृशास्तयः । 'सृज विसर्गे' 'हृञ् हरणे' सम्पूर्वोऽयम् 'शासु अनुशिष्टौ' इत्येते त्रय इत्यर्थः। "इकश्तिपौ धातुनिर्देशे" इति वचनादेव निर्देशः । धातवो "भूवादयो धातवः" इत्युक्तलक्षणाः शब्दविशेषाः । इहास्मिन् भगवतिविषये केवलमनन्ययोगव्यवच्छिन्नं यथा तथा कर्तृवाचिनः कर्तृकारकवाचकान् दधति । तदन्ता एव भवन्तीत्यर्थः । जातु कदाचित्कर्मणि प्रत्ययान् कर्मार्थविहितान् यगादीन् न दधति न तदन्ता भवन्तीत्यर्थः । सर्वकर्तृत्वान्नियन्तृत्वाच्च सृजति स्रष्टा संहरति संहर्ता शास्तीति शासितेत्यादिभिः

कर्तृत्वेन निर्दिश्यते न कदाचित्सृज्यते साह्यते शिष्यते इत्यादिभिः कर्मत्वेन । अनादिनिधनत्वादनियम्यत्वाच्चेति भावः । किञ्च अत्र भगवति स्तौतिः ' ष्टुञ् स्तुतौ ' इति धातु. । विपरीतं कारक यस्य स' विपरीतकारक स्तूयते स्तुत्य इत्यादकर्मप्रत्ययान्त एव नतु कदाचित् स्तौति स्तोता इत्यादिकर्तृप्रत्ययान्त. । सकललोकस्तुत्यस्य तस्य स्तुत्यन्तराभावादित्यर्थः । अत्र शब्दानां कर्मकर्तृप्रत्ययविविनिषेधद्वारा विभक्त्यन्तरेण सर्वकर्तृत्वसर्वोपास्यत्वादिसूक्ष्मार्थबोधपरत्वात्सौक्ष्म्याख्यो गुणः । ' अन्तः सकल्परूपत्व शब्दाना सौक्ष्म्यमुच्यते ' इति लक्षणात् । अत्र भगवतः सृष्ट्यादिकर्तृकर्मत्वोभयप्राप्तावेकत्रैकनियमात्परिसख्या । तत्र जातु कर्मणीति शब्दादेव कर्मत्वनिषेधादितरनिवृत्तिः स्तौतिशब्दात् स्तुतौ कर्तृत्वनिवृत्तिरार्थीति भेदद्वयससर्गः । अनया च भगवत पुरुषान्तराधिक्यप्रतीतेर्व्यतिरेकश्च प्रतीयते इत्यलङ्कारेणालङ्कारध्वनि' ॥ ९६ ॥

**पूर्वमेष किल सृष्टवानपस्तासु वीर्यमनिवार्यमादधौ ।**
**तच्च कारणमभूद्धिरण्मयं ब्रह्मणोऽसृजदसाविदञ्जगत् ॥६७॥**

**पूर्वमिति** । एष हरिः पूर्वं प्रथममपः सृष्टवान् । किलेत्यैतिह्ये । तास्वप्सु अनिवार्य्यं वीर्य्यं रेतः । ' शुक्र तेजोरेतसी च बीजवीर्य्येन्द्रियाणि च' इत्यमरः । आदधावाहितवान् तद्वीर्य्यं तु हिरण्यस्य स्वर्णस्य विकारः हिरण्मयम् । "दाण्डिनायन " इत्यादिना निपातः । ब्रह्मणश्चतुर्मुखस्य कारणमभूत् । ब्रह्माण्ड जातमित्यर्थः । असौ तदुत्पन्नो ब्रह्मा ब्रह्माण्डमिद जगदसृजत् । सर्वस्यापि प्रपञ्चस्यायमेवमूलकारणमिति भावः । अत्र मनुः । 'अप एव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वय ब्रह्मा सर्वलोकपितामहः ' इति । अत्र वीर्य्यमनिवार्यमिति वृत्त्यनुप्रासः ॥ ९७ ॥

अथैनं त्रिभिर्विशिनष्टि—

**मत्कुणाविव पुरा परिप्लवौ सिन्धुनाथशयने निषेदुषः ।**
**गच्छतः स्म मधुकैटभौ विभोर्यस्य नैद्रसुखविघ्नतां क्षणम् ॥६८॥**

**मत्कुणाविवेत्यादिना** । पुरा पूर्वं परिप्लवौ चञ्चलौ मुहुरितस्ततश्चलन्तावित्यर्थ । 'चञ्चल चपल तूर्णं पारिप्लवपरिप्लवे ' इत्यमर । मधुकैटभावसुरविशेषौ मत्कुणौ सुप्तासृक्पायिनौमलोद्भवौ कीटविशेषौ ताविवेत्युपमा । सिन्धुनाथः सरित्पति स एव शयन तत्र निषेदुषो निषण्णस्य समुद्रशायिन इत्यर्थः । " भाषायां सदवसश्रुव. " इति लिटः क्वसुरादेशः । विभोः प्रभोः यस्य हरेः क्षणं निद्रायास्सम्बन्धिनः आगत या नैद्र यत्सुख तस्य विघ्नतां विघातु कर्तुं गच्छतः स्म गतौ । तादृशावपि महासुरौ मत्कुणाविव क्षणमात्रेण प्रनष्टाविति भगवतः प्रभावातिशयोक्तिः । एषां त्रयाणां पूर्वेणान्वयः ॥ ९८ ॥

**श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भमुज्ज्वलम् ।**
**श्रीमुखेन्दुसविधेऽपि शोभते यस्य नाभिसरसीसरोरुहम् ॥६९॥**

श्रौतीति। श्रौतमार्गस्य सुख सुखकर यद्गान तस्य कोविदोऽभिज्ञ । [illegible] व्याख्यात. । च चासौ अता च स एव पट्चरणः स गर्भे यस्य तत् उज्ज्वल निर्मल यस्य हरेर्नाभिरेव सरसी सर' कासार । 'कासारः सरसीसरः' इत्यमर । तस्या सरोरुह पङ्क श्रियो मुखमिवेन्दुस्तस्य सन्निधौ समीपेऽपि शोभत इति विरोध. । स च मुखस्येन्दुत्वरूपणायत्त इत्यनयोरङ्गाङ्गिभावेन सकर ॥ ६९ ॥

सत्यवृत्तमपि मायिनं जगद्वृद्धमप्युचितनिद्रमर्भकम् ।
जन्म बिभ्रतमजं नवं बुधा यं पुराणपुरुषं प्रचक्षते ॥ ७० ॥

सत्येति । य हरिं सत्यवृत्तम् अकपटचरितम् अपि मायिनं मायाविनं कपटवन्तमिति विरोध । माया नाम शक्ति तद्वन्तमित्यविरोध । व्रीह्यादित्वादिनिप्रत्यय । जगद्वृद्ध सर्वलोकपितामहत्वात् स्थविरमपि । 'प्रवया. स्थविरो वृद्धः' इत्यमर । उचितनिद्र परिचितयोगनिद्रम् अर्भक डिम्भम् । वटस्य पत्रस्य पुटे शयान बाल मुकुन्द मनसा स्मरामि ' इत्यागमवचनादिति भाव. । 'पोतः पाकोऽर्भको डिम्भ' ' इत्यमर. । न जायत इत्यजो जन्मरहित । " अन्येभ्योऽपि दृश्यते " इति जनेर्डप्रत्यय. । तमपि जन्म बिभ्रतम् । कामवशात् कृष्णादि जन्मभाजमित्यर्थ । नव रमणीयत्वादभिनव तथापि पुराणं प्राचीनमनादिं च पुरुष प्रचक्षते बुधा. । इति वाक्य सर्वत्र सम्बध्यते । सर्वेऽपि विरोधा हरेरचिन्त्यमहिमत्वेनाभास्या इति विरोधाभाससचतुष्टयसंसृष्टि ॥ ७० ॥

अथ षोडशभिरवतारान् वर्णयिष्यन् वराहावतार तावदेकेनाह—

स्कन्धधूननविसारिकेसरक्षिप्तसागरमहाप्लवामयम् ।
उद्धृतामिव मुहूर्त्तमैक्षत स्थूलनासिकवपुर्वसुन्धराम् ॥ ७१ ॥

स्कन्धेति । स्थूलनासिकवपुर्वराहमूर्तिरय हरिः स्कन्धस्य कन्धराया. धूननेन कम्पनेन विसारिभिर्विसर्पिभि केसरै सटाभिः क्षिप्तोऽवकीर्णः सागरस्य महाप्लवो महापूर. यस्यास्ता जलापसारेण प्रकाशितामित्यर्थ. । वसुन्धरा भुव मुहूर्त्त क्षणमात्रम् । 'मुहूर्त्तमल्पकालेऽपि' इति शब्दार्णवे । उद्धृताम् अनावृतत्वात्सागरादुत्क्षिप्तामिव ऐक्षत प्रेक्षितवान् इत्युत्प्रेक्षा । ईक्षतेर्लङि "आडजादीनाम्" इत्याट् " आटश्च " इति वृद्धिः ॥ ७१ ॥

द्वाभ्या नृसिंहावतारमाह—

दिव्यकेसरिवपुः सुरद्विषो नैव लब्धशममायुधैरपि ।
दुर्निवाररणकण्डुकोमलैर्वक्ष एष निरदारयन्नखैः ॥ ७२ ॥

दिव्येति । दिव्यकेसरिवपुर्दिव्यसिंहमूर्तिः । हरेरायुधैर्वज्रादिभिरपि नैव लब्धशमम-प्राप्तशान्ति दुर्निवार दुर्जया रणकण्डूर्यस्य तत् रणव्यसनीत्यर्थ. " गोस्त्रियोरुपसर्जनस्य "

इति ह्रस्वः । सुरद्विषो हिरण्यकशिपोर्वक्षः कोमलैर्नखैःनिरदारयत् अभिनत् । वज्राद्यभेद्यस्य कोमलनखविदार्यत्व भगवत्प्रभावादिति विरोधाभासोऽलङ्कार' ॥ ७२ ॥

**वारिधेरिव कराग्रवीचिभिर्दिङ्मतङ्गजमुखान्यभिघ्नतः ।**
**यस्य चारुनखशुक्तयः स्फुरन्मौक्तिकप्रकरगर्भतां दधुः ॥ ७३ ॥**

**वारिधेरिति** । कराग्राणि वीचय इवेत्युपमितसमास । वारिधेरिवेति लिङ्गात् । ताभिः कराग्रवीचिभिर्दिगन्तविततामिरिति भावः । अत एव दिङ्मतङ्गजानां मुखान्यभिघ्नतो रोषातिरेकात्प्रहरतो यस्य सिंहमूर्तेर्हरेर्वारिधेरिव चारुनखा. शुक्तय इव । पूर्ववदुपमितसमासः । स्फुरन्मौक्तिकप्रकरो दिग्गजकुम्भसम्भूतमुक्ताव्रातो गर्भेऽन्तरगतो यासा तासा भावस्तत्ता ता दधु । एष निरदारयदिति पूर्वेणान्वयः । एतेन नरहारक्रोधस्य महासुरेऽपि न पर्य्याप्तमिति व्यज्यत इति वस्तुना वस्तुध्वनिः । उपमालङ्कार' ॥ ७३ ॥

अथ चतुर्भिर्वामनावतारमाह-

**दीप्तिनिर्जितविरोचनादयं गां विरोचनसुतादभीप्सतः ।**
**आत्मभूरवरजाखिलप्रजः स्वर्पतेरवरजत्वमाययौ ॥ ७४ ॥**

**दीप्तीत्यादि** । आत्मना भवतीति आत्मभूः स्वयम्भूरपि । अवरजाश्चरमजा अखिलाः प्रजा जना यस्य सोऽपि सर्वज्येष्ठोऽपीत्यर्थ. । अय हरि दीप्तिनिर्जितविरोचनात् ज्योतिर्विजितमार्तण्डात् । विरोचन प्रह्लादपुत्रः । 'विरोचनोऽर्के दहने चन्द्रे प्रह्लादनन्दने' इत्युभयत्रापि विश्व । तस्य सुताद्बलेर्गां भुवम् अभीप्सतः । प्राप्तुमिच्छतोऽप्याहर्तुमिच्छत. । सन्नन्तादाप्नोतेर्लटः शत्रादेश. । स्वर्पतेरवरजत्वमिन्द्रानुजत्व ययौ । वलिध्वसनार्थमिति शेष । लोकानुग्रहार्थिनः किन्न कुर्वन्तीति भावः । अत्राजत्वावरजत्वसामानाधिकरण्यविरोधो भगवत्प्रभावादाभासीकृत इति विरोधाभासोऽलङ्कारः ॥ ७४ ॥

**किं क्रमिष्यति किलैष वामनो यावदित्थमहसन्न दानवाः ।**
**तावदस्य न ममौ नभस्तले लङ्घितार्कशशिमण्डलक्रमः ॥७५॥**

**किमिति** । एष वामनः खर्वः । 'खर्वो ह्रस्वश्च वामन.' इत्यमर । किं क्रमिष्यति इत्थम् अनेन प्रकारेण दानवा यावन्नाहसन् तावत् ततः प्रागेव लङ्घिते अतिक्रान्ते अर्कशशिमण्डले येन सोऽस्य हरेः क्रम. पादविक्षेपो नभस्तले न ममौ न परिमाण गतवान् यथा न माति तथा ववृधे इत्यर्थः । अत्राधारान्नभस्तलादाधेयस्य क्रमस्याधिक्यकथनादधिकालङ्कारभेद. । 'आश्रयाश्रयिणोराधिक्यमधिकम्' इति लक्षणात् ॥ ७५ ॥

**गच्छतापि गगनाग्रमुच्चकैर्यस्य भूधरगरीयसाङ्घ्रिणा ।**
**क्रान्तकन्धर इवाबलो बलिः स्वर्गभर्तुरगमत्सुबन्धताम् ॥ ७६॥**

**गच्छतेति** । गगनाग्रं गगनोपरिभागं गच्छतापीति विरोधः । भूधरवद्गरीयसं... यस्य वामनस्योच्चकैस्तनेनाङ्घ्रिणा क्रान्तकन्धरोऽवष्टब्धकण्ठ इवाबलो दुर्बलो बलि... स्वर्गभर्तुरिन्द्रस्य सुखेन बध्यते इति सुबन्धः । "ईषद्दुःसुषु" इत्यादिना खल्प्रत्ययः । तत्तादृग... गुरुद्रव्यावष्टब्धकण्ठो हि सुखेन बध्यते इति भावः "न लोका" इत्यादिना कृद्योगलक्षणाया ... षष्ठ्या निषेधात्स्वर्गभर्त्तुरिति शेषे षष्ठी । अत्र क्रान्तकन्धर इवेत्युत्प्रेक्षाया भूधरगरीयसेत्युपमा... सापेक्षत्वात्सङ्करः । विरोधेन त्वनपेक्षिता संसृष्टिः ॥ ७६ ॥

**क्रामतोऽस्य ददृशुर्दिवौकसो दूरमूरुमलिनीलमायतम् ।**
**व्योम्नि दिव्यसरिदम्बुपद्धतिस्पर्द्धयेव यमुनौघमुत्थितम् ॥ ७७ ॥**

**क्रामत इति** । क्रामतः पादं विक्षिपतोऽस्य सम्बन्धिनं दूरमायतम् अलिनीलम् भृङ्गश्यामं ऊरुं सक्थि दिवौकसो देवा व्योम्नि दिव्यसरितो मन्दाकिन्या अम्बुपद्धत्या जलप्रवाहेण स्पर्द्धया उत्थितमूर्ध्वतः प्रवृत्तं यमुनौघं यमुनाप्रवाहमिव ददृशुरित्युत्प्रेक्षेयमुपमा सङ्कीर्णा ॥ ७७ ॥

अवतारान्तरमाह–

**यस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।**
**कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥ ७८ ॥**

**यस्येति** । कायनिग्रहेणामृतविभागकाले देहच्छेदेन गृहीतविग्रहो बद्धवैरः कृती कुशलो राहुर्यस्य हरेः किञ्चिदकर्त्तुमक्षमः सन् कान्तं रम्यं यद्वक्त्रं हरिमुखं तेन सदृशी आकृतिर्यस्य तं तत्सुहृदमित्यर्थः । इन्दुम् अधुनापि बाधते पीडयति उपरागमिषेणेति भावः । अत्र साक्षात् प्रतिपक्षहरिनिग्रहाशक्त्या राहोस्तदीयेन्दुनिग्रहोक्त्या प्रत्यनीकालङ्कारः । तथा च सूत्रम् 'प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम्' इति ॥ ७८ ॥

दत्तात्रेयावतारमाह–

**सम्प्रदायविगमादुपेयुषीरेष नाशमविनाशिविग्रहः ।**
**स्मर्तुमप्रतिहतस्मृतिः श्रुतीर्दत्त इत्यभवदत्रिगोत्रजः ॥ ७९ ॥**

**सम्प्रदायेति** । अविनाशिविग्रहोऽनपायस्वरूपः अत एव अप्रतिहता स्मृतिः स्मरणशक्तिर्यस्य स एष हरिः सम्प्रदाय उपदेशपरम्परा तस्य विगमादपायान्नाशं कालदोषाध्ययनविच्छेदमुपेयुषीः प्राप्ताः । "उगितश्च" इति ङीप् । श्रुतीर्वेदान् । 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः । स्मर्तुं श्रुतिसम्प्रदायं प्रवर्त्तयितुमित्यर्थः । दत्त इति विख्यात इति शेषः । अत्रिगोत्रे जातोऽत्रिगोत्रजोऽभवत् । दत्तात्रेयोऽभूदित्यर्थः । अत्रानपायित्वस्मृत्यप्रतिघातयोर्विशेषणगत्या श्रुतिस्मृतिहेतुत्वोक्त्या काव्यलिङ्गम् ॥ ७९ ॥

परशुरामावतारमाह—

रेणुकातनयतामुपागतः शातितप्रचुरपत्रसंहतिः ।
लूनभूरिभुजशाखमुज्झितच्छायमर्जुनवनं व्यधादयम् ॥८०॥

रेणुकेति । अथ हरिः रेणुकातनयतां परशुरामत्वमुपागतः सन् । अर्जुनः कार्त्तवीर्यार्जुनः । 'अर्जुन ककुभे पार्थे कार्त्तवीर्यमयूरयोः' इत्यनेकार्थेऽपि रैणुकेयविरोधित्वान्निश्चयः । तदुक्तं हरिणा । 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः । सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥' इति । स एव वनं तत् शातिता छिन्ना प्रचुरा प्रभूता पत्रसंहतिर्वाहनसमूहः पर्णसंघातश्च यस्य तत् । 'पत्रं स्याद्वाहने पर्णे' इति विश्वः । लूनाश्छिन्ना भूरयः प्रचुरा भुजा एव शाखा यस्य तत् उज्झिता छाया कान्तिरनातपश्च यस्य तत्तथा व्यधात् विहितवान् । दधातेर्लुङि "गातिस्था" इत्यादिना सिचो लुक् । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । अत्र समस्तवस्तुविषयं सावयवं रूपकं व्यक्तं तच्च छायेति पत्रेति च श्लेषप्रतिभोत्थापिताभेदातिशयोक्त्यानुप्राणितमिति सङ्करः ॥ ८० ॥

रामावतारमाह—

एष दाशरथिभूयमेत्य च ध्वंसितोद्धतदशाननामपि ।
राक्षसीमकृत रक्षितप्रजस्तेजसाधिकविभीषणां पुरीम् ॥ ८१ ॥

एष इति । किञ्चेति चार्थः । रक्षितप्रजः एष हरिर्दशरथस्यापत्यं पुमान् दाशरथी रामः अत इञ् । तस्य भावः दाशरथिभूयं रामत्वम् । "भुवो भावे" इति क्यप् । एत्य प्राप्य । ध्वंसितो हत उद्धतो दृप्तो दशाननो रावणो यस्या तामपि राक्षसीं रक्षस्सम्बन्धिनीं पुरीं लङ्कां तेजसा स्ववीर्येण अधिकविभीषणामत्यन्तभीषणाम् अकृतेति विरोधः । भयहेतोरुद्धतस्य रावणस्य ध्वंसनात् अधिको महान् विभीषणो रावणानुजो यस्यां तामित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः ॥ ८१ ॥

अथ पञ्चभिः प्रस्तुतं कृष्णावतारमाह—

निष्प्रहन्तुममरेशविद्विषामर्थितः स्वयमथ स्वयम्भुवा ।
सम्प्रति श्रयति सूनुतामयं कश्यपस्य वसुदेवरूपिणः ॥ ८२ ॥

निष्प्रहन्तुमिति । अथ रामावतारानन्तरम् अयं हरिः अमरेशविद्विषां निष्प्रहन्तुं चैद्यादीन् इन्द्रशत्रून् हन्तुमित्यर्थः । "जासिनिप्रहण" इत्यादिना कर्म्मणि षष्ठी । स्वयम्भुवा ब्रह्मणा स्वयमात्मनैवार्थितः प्रार्थितः सन् सम्प्रतीदानीं वसुदेवरूपिणो वसुदेवमूर्तिधरस्य कश्यपस्य पुत्रतां श्रयति व्रजति कृष्णरूपेणेति भावः । अत्र स्वयम्भूप्रार्थनाया विशेषणगत्या वसुदेवपुत्रताप्राप्तिहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ८२ ॥

तात नोदधिविलोडनं प्रति त्वद्विनाथ वयमुत्सहामहे ॥
यः सुरैरिति सुरौघवल्लभो बल्लवैश्च जगदे जगत्पतिः ॥ ८३ ॥

**तातेति** । सुरौघवल्लभः सुरगणप्रियः जगत्पतिर्यो हरिः सुरैर्देवैर्बल्लवैर्गोपैश्च हे तात त्वद्विना नेति छेदे उदधिविलोडनं समुद्रमथनं प्रति नो इति छेदे दधिविलोडनं दधिमन्थनं च प्रति त्वद्विना त्वां विहायेत्यर्थः । "पृथग्विना" इत्यादिना विकल्पात्पञ्चमी । अथ वयं न नो वोत्सहामहे न क्षमामहे इति जगदे गदितम् । अत्र हरिवर्णनाङ्गत्वेन सुराणां वल्लवानां च प्रकृतानामेव नोदधिशब्दमूलाभेदाध्यवसायलब्धवदद्रयुदधिविलोडनक्षमत्वकर्मसाम्याद्गम्यौपम्यत्वात्तुल्ययोगिताभेदः, तेन च हरेर्दधिमन्थनकलावदुदधिमन्थनमपीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ८३ ॥

नात्तगन्धमवधूय शत्रुभिश्छायया च शमितामरश्रमम् ।
योऽभिमानमिव वृत्रविद्विषः पारिजातमुदमूलयद्दिवः ॥ ८४ ॥

**नात्तगन्धमिति** । किञ्चेति चार्थः । यो हरिः शत्रुभिरवधूयाभिभूय नात्तगन्धमनाघ्रातसौरभमनभिभूतं च । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । नञर्थस्य नशब्दस्य "सुप्सुपा" इति समासः । छायया अनातपेन पालनेन च । 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पाल्नोत्कर्षयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति विश्वः । शमितामरश्रमं निवारितसुरखेदं पारिजातं वृत्रद्विषः शक्रस्याभिमानमहङ्कारमिव दिवः स्वर्गादुदमूलयत् उन्मूलितवानिति पारिजातहरणोक्तिः । श्लेषसविशेषणेयमुपमेति केचित् श्लेषवचान्ये ॥ ८४ ॥

यं समेत्य च ललाटलेखया बिभ्रतः सपदि शम्भुविभ्रमम् ।
चण्डमारुतमिव प्रदीपवच्चेदिपस्य निरवाद्विलोचनम् ॥ ८५ ॥

**यमिति** । किञ्चेति चार्थः । ललाटमेव लेखा तया ललाटलेखया ललाटदेशेन शम्भोर्विभ्रमं सौन्दर्यं बिभ्रतः ललाटलोचनमित्यर्थः । चेदिपस्य शिशुपालस्य लोचनं तृतीयनेत्रं कर्तृ । यं हरिमेव चण्डमारुतं चण्डमारुतमिव समेत्य प्रदीपवत् प्रदीपेन तुल्यम् । 'तेन तुल्यम्' इति वतिप्रत्ययः । निरवात् निर्वाति स्म । नष्टमित्यर्थः । निर्पूर्वाद्वाधातोर्लङ् । निरवापेति काचित्कः पाठः स न सम्यक् । वातेः प्रक्रियाविरोधादाप्नोतेरसङ्गतार्थत्वादिति अनेकार्थेयमुपमा ॥८५॥

/ यः कोलतां बल्लवतां च बिभ्रद्दंष्ट्रामुदस्याशु भुजां च गुर्वीम् ।
मग्नस्य तोयापदि दुस्तरायां गोमण्डलस्योद्धरणं चकार ॥८६॥

**य इति** । यो हरिः कोलतां वराहत्वम् । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । बल्लवतां गोपालत्वं च बिभ्रत् । आशु गुर्वीं दंष्ट्रां भुजां च यथासंख्यमिति भावः । उदस्योद्यम्य दुस्तरायां तोयापदि जलसङ्कटे एकत्र समुद्रकृतायाम् अन्यत्र वर्षकृतायां च मग्नस्य गोमण्डलस्य भूगोलस्य धेनुवृन्दस्य चोद्धरणं चकार । अत्र कोलत्वबल्लवत्वयोः प्रकृतयोरेव श्लेषमूलाभेदाध्यवसायेन गोमण्डलोद्धरणस्य दंष्ट्राभुजोद्यमनस्य च साम्यादौपम्यगम्यतायां तुल्ययोगिता सती यथासंख्येन सङ्कीर्यते । इन्द्रवज्रा वृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणात् ८६

एवं देवं स्तुत्वानन्तरं कर्तव्यमुपदिशति—

**धन्योऽसि यस्य हरिरेष समक्ष एव दूरादपि क्रतुषु यज्वभिरिज्यते यः। दत्त्वार्घमत्रभवते भुवनेषु यावत्संसारमण्डलमवाप्नुहि साधुवादम् ॥ ८७ ॥**

**धन्योऽसीति।** धनलब्धा धन्यः पुण्यवानसि। 'सुकृती पुण्यवान् धन्यः' इत्यमरः। "धनगणं लब्धा" इति यत्प्रत्ययः। यस्य ते एष हरिः समक्ष एव अक्ष्णोः समीपे एव पुरत एवेत्यर्थः। स्थित इति शेषः। सामीप्येऽव्ययीभावः, "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तः। अत एव "तृतीयासप्तम्योर्बहुलम्" इति सप्तम्या अम्भावः। अन्यत्र को विशेषः तत्राह। यो हरिर्दूरादपि परोक्षेऽपि क्रतुषु योगेषु यज्वभिर्विधिवदिष्टवद्भिः। 'यज्वा तु विधिनेष्टवान्' इत्यमरः। "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः। इज्यते पूज्यते स ते प्रत्यक्ष इति धन्यस्त्वमित्यर्थः। फलितमाह। अत्रभवते पूज्यायेत्यर्थः। 'पूज्यस्तत्रभवान्' इति सज्जनः। "इतरेभ्योऽपि दृश्यन्ते" इति सार्वविभक्तिके त्रल्प्रत्यये "सुप्सुपा" इति समासः। अर्घं पूजां दत्त्वा यावत्संसारमण्डलं वर्तते तावदिति शेषः। भुवनेषु साधुर्वादः शब्दस्तं साधुवादं साधुसमाख्याम् अवाप्नुहि लभस्वेत्यर्थः। अत्र राज्ञो धन्योऽसीति विशेषणगत्या यस्येत्यादिवाक्यार्थहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। वसन्ततिलका वृत्तम् ॥ ८७ ॥

**भीष्मोक्तं तदिति वचो निशम्य सम्यक्साम्राज्यश्रियमधिगच्छता नृपेण। दत्तेऽर्घे महति महीभृतां पुरोऽपि त्रैलोक्ये मधुभिदभूदनर्घ एव ॥ ८८ ॥**

**इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये कृष्णार्घदानं नाम चतुर्दशः सर्गः ॥ १४ ॥**

**भीष्मेति।** 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः। सम्राजो भावः साम्राज्यं तदेव श्रीस्तां श्रियम् अधिगच्छता भजता नृपेण युधिष्ठिरेण इतीत्थं भीष्मोक्तं तद्वचः सम्यङ् निशम्य श्रुत्वा महीभृतां राज्ञां पुरोऽग्रे महति अर्घे पूजायां दत्तेऽपि मधुभिद्धरिः त्रयो लोकास्त्रैलोक्यम्। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः। तत्र त्रैलोक्ये कृष्णोऽनर्घः पूजारहित एव अभूदिति विरोधः। अमूल्य एवाभूदित्यविरोधः। 'मूल्ये पूजाविधावर्घः' इत्यमरः। अत्रार्घयोरभेदाध्यवसायाद्विरोधः, तदध्यवसायादविरोधः इति विरोधाभासोऽलङ्कारः। प्रहर्षिणी वृत्तम् ॥ ८८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये चतुर्दशः सर्गः ॥ १४ ॥

# पञ्चदशः सर्गः ।



अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥ १ ॥

**अथेति** । अथ हरिपूजानन्तर चेदिपति शिशुपालः तत्र सदसि सभाया पाण्डुसुतेन युधिष्ठिरेण विहित मधुद्विषो हरेर्मान पूजा नासहत । ईर्ष्या चकारेत्यर्थ । 'परोत्कर्षाक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि च' इति लक्षणात् । तथा हि मानिनामहङ्कारिणा मन परवृद्धौ मत्सरि हि परशुभद्वेषि खल्वित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास । अस्मिन् सर्गे उद्गता वृत्तम् । 'सजसादिमे सलघुके च नसजगुरुकेष्वथोद्गता । अङ्घ्रिगतभनजगा गयुता जसमाः जगौ चरणमेकत' पठेत्' इति लक्षणात् ॥ १ ॥

पुर एव शार्ङ्गिणि सवैरमथ पुनरमुं तदर्चया ।
मन्युरभजदवगाढतरः समदोषकाल इव देहिनं ज्वरः ॥ २ ॥

**पुरइति** । पुर पूर्वमेव शार्ङ्गिणि सवैर सक्रोधममु चैद्यम् अथ पुन अत' पर तदर्चया हरिपूजया अवगाढतरो निबिडतरो मन्यु क्रोधो रौद्ररसस्य स्थायीभाव इति भाव । देहिन शरीरिण समौ तुलितौ दोषोऽपथ्यसेवाकाल कर्म्मविपाकश्च यस्य स ज्वर इवाभजत् । उपमालङ्कार ॥ २ ॥

अथाष्टभिरस्य गात्रारब्धक्रोधचेष्टा प्रपञ्चयति-

अभितर्ज्जयन्निव समस्तनृपगणमसावकम्पयत् ।
लोलमुकुटमणिरश्मि शनैरशनैः प्रकम्पितजगत्त्रयं शिरः ॥ ३ ॥

**अभीत्यादि** । असौ चैद्य समस्तनृपगणमभितर्जयन्निवेत्युत्प्रेक्षा । 'तर्ज भर्त्सने' चौरादिकस्यानुदात्तत्वेन प्राप्तस्य आत्मनेपदस्य चक्षिङादेशस्य स्यात्र स्थानिवद्भावानादरेण पुनर्ङित्करणसामर्थ्यादनित्यत्वज्ञापनात्परस्मैपदम्, अत एव तर्जयतीत्यपि दृश्यते क्वचित्' इति भट्टमल्लः । अशनैरतिमात्र प्रकम्पित जगत्त्रय येन तत् त्रैलोक्यभीषण शिरः शनैर्लोलाश्चपला मुकुटमणिरश्मयो यस्मिन् कर्म्मणि तद्यथा तथा अकम्पयत् क्रोधातिरेकादिति भाव' ॥ ३ ॥

स वमन् रुषाश्रु घनघर्म्मविगलदुरुगण्डमण्डलः ।
स्वेदजलकणकरालकरो व्यरुचत्प्रभिन्न इव कुञ्जरस्त्रिधा ॥ ४ ॥

**स इति** । रुषा रोषेणाश्रु वमन् मुञ्चन् घनेन सान्द्रेण घर्म्मेण क्रोधोष्मणा विगलत् स्रवदुरु महत् गण्डमण्डल यस्य सः स्विन्नकपोल इत्यर्थ । स्वेदजलकणैः स्वेदबिन्दुभिः करालकरो दन्तु-

रुद्धस्तः स चैद्यः त्रिधा नेत्रकपोलहस्तदेशैः प्रभिन्नो मदस्रावी मत्तः । 'प्रभिन्नो मत्त. स्यात्' इति वैजयन्ती । कुञ्जर इव व्यरुचत् । रुचेः "द्युद्भ्यो लुङि" इति विकल्पात् परस्मैपदम् । एतेन स्वेदाख्य. सात्त्विकभाव. उक्तः । उपमालङ्कार. ॥ ४ ॥

स्रुतिकामवर्मितमभीक्ष्णमधुवदवधूतराजकः ।
क्षितबहुलजलबिन्दुवपुः प्रलयार्णवोत्थित इवादिसूकरः ॥ ५ ॥

स इति । राज्ञां समूहो राजकम् । "गोत्रोक्ष" इत्यादिना वुञ् प्रत्ययः । तदवधूतमभिभूतं येन स तथोक्त स चैद्यो निकाम घर्मित सञ्जातघर्म्ममुद्भवत्स्वेदमित्यर्थः । 'घर्म्मः स्यादातपे ग्रीष्म उष्णस्वेदाम्भसोरपि' इति विश्वः । तारकादित्वादितच्प्रत्यय । वपु. प्रलये अर्णवस्तस्मादुत्थित आदिसूकर इव क्षिप्ताः प्रेरिता. बहुला सान्द्रा जलबिन्दवो यस्मिन् कर्म्मणि तद्यथा तथा अभीक्ष्णमधुवन् कोपाकुलयति स्म । 'धूञ् विधूनने' इति धातोस्तौदादिकाल्लङ् । अत्रापि स्वेदः सात्त्विक एवोक्त । उपमालङ्कारः ॥ ५ ॥

क्षणमाश्लिषद्घटितशैलशिखरकठिनांसमण्डलः ।
स्तम्भमुपहितविधूतिमसावधिकावधूनितसमस्तसंसदम् ॥ ६ ॥

क्षणमिति । घटितं सुसहितं यच्छैलशिखरं तद्वत्कठिनमंसमण्डलं यस्य सोऽसौ चैद्यः उपहितावनाहिता आरोपितेत्यर्थ । विधूति कम्पो यस्मिंस्तम् अधिकमत्यन्तमवधूनिता कम्पिता समस्ता सकला समत् सभा येन त स्तम्भ क्षणम् आश्लिषत् श्लिष्टवान् । तेनासमण्डलेनाहतवानित्यर्थ. । अत एव कठिनासमण्डल इति विशेषण च । पुषादित्वात् च्लेरङादेशः । आलिङ्गनार्थत्वे तु "श्लिष आलिङ्गने" इति क्सादेशः स्यात् । क्रोधान्धा. किमु न कुर्वन्तीति भाव. । अत्रासकाठिन्यस्य विशेषणगत्या स्तम्भाश्लेषहेतुत्वात् काव्यलिङ्ग शैलशिखरोपमया संकीर्यते ॥ ६ ॥

कनकाङ्गदद्युतिभिरस्य गमितमरुचत्पिशङ्गताम् ।
क्रोधमयशिखिशिखापटलैः परीतः परीतमिव बाहुमण्डलम् ॥ ७ ॥

कनकेति । कनकस्याङ्गदयो' केयूरयोः द्युतिभिः पिशङ्गता पिङ्गलवर्णता गमित प्रापितमिति तद्गुणालङ्कारः । अस्य चैद्यस्य बाहुमण्डल क्रोधमयशिखिशिखापटलैः कोधाग्निज्वालाजालैः परितः परीत परिवृतमिवारुचत् इत्युत्प्रेक्षा । "द्युद्भ्यो लुङि" इति परस्मैपदम् ॥ ७ ॥

कृतसन्निधानमिव तस्य पुनरपि तृतीयचक्षुषा ।
क्रूरमजनि कुटिलभ्रु गुरुभ्रुकुटीकठोरितललाटमाननम् ॥ ८ ॥

कृतेति । कुटिले भ्रुवौ यस्य तत्कुटिलभ्रु । उपसर्जनस्य ह्रस्वः । गुर्व्या भ्रुकुटया भ्रूभङ्गेन कठोरित भीषणीकृत ललाट यस्य तत् तस्य चैद्यस्यानन पुनरपि तृतीयचक्षुषा कृतसन्निधानं कृतसंसर्गमिवेत्युत्प्रेक्षा । 'क्रूरमजनि भयङ्करमभूत् । जने. कर्त्तरि लुङ्, "दीपजन" इत्यादिना विकल्पाच्चिण्प्रत्ययः ॥ ८ ॥

अतिरक्तभावमुपगम्य कृतमतिरमुष्य साहसे ।
दृष्टिरगणितभयासिलतामवलम्बते स्म समया सखीमिव ॥ ९ ॥

अतिरक्तेति । अमुष्य चैद्यस्य दृष्टिः अतिरक्तस्य भावस्तमतिरक्तभावं रोषातिरेकादत्यरुणतामन्यत्र कर्मातिरेकादत्यनुरागितामुपगम्य प्राप्य साहसे कृष्णादिधूननरूपे अन्यत्र युद्धे कृतमतिः सर्वथा गमिष्यामि हनिष्यामि इति च कृतनिश्चया अर्थनिर्द्धारणं मतिरिति । अगणितमविचारितं भयं शत्रोर्गुरुजनाच्च यया सा सती समया समीपे असिलतां सखीमिवावलम्बते स्म साधनत्वेन स्वीचकार । क्रोधाग्निवशाद् खड्गमद्राक्षीदित्यर्थः । अत्र प्रस्तुतदृष्टिविशेषणसाम्यादप्रस्तुतनायिकाप्रतीतेः समासोक्तिरुपमासङ्कीर्णा ॥ ९ ॥

करकुड्मलेन निजमूरुमुरुतरनगाश्मकर्कशम् ।
त्रस्तचपलचलमानजनश्रुतभीमनादमयमाहतोच्चकैः ॥ १० ॥

करेति । अयं चैद्यः उरुतरो महत्तरो नगाश्मवत् शैलशिलेव कर्कशः इत्युपमा । तं निजमात्मीयमूरुं सक्थि । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । करः कुड्मलं इवेत्युपमितसमासः । तेन सहतप्रसारितागुलिना पाणितलेनेत्यर्थः । त्रस्तो भीतः अत एव चपलं चञ्चलं चलमानेन जनेन श्रुतो भीमनादो भयकरध्वनिर्यस्मिन् कर्मणि तद्यथा तथा उच्चकैराहत आहतवान् । अलब्धलक्ष्या क्रोधान्धा स्वात्मानमेव घ्नन्तीति भावः । आङ्पूर्वाद्धन्तेर्लङ् "आङो यमहनः" इति अकर्मकाधिकारेऽपि 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' इत्यात्मनेपदे "अनुदात्तोपदेश" इत्यादिनाऽनुनासिकलोपः ॥ १० ॥

इति चुक्रुधे भृशमनेन ननु महदवाप्य विप्रियम् ।
याति विकृतिमपि संवृतिमत्किमु यन्निसर्गनिरवग्रहं मनः ॥ ११ ॥

इतीति । इतीत्थमनेन प्रकारेण अनेन चैद्येन भृशं चुक्रुधे क्रुद्धम् । भावे लिट् । संवृतिमदपि संवृतिर्विकारगुप्तिः तद्वदपि धीरमपीत्यर्थः । मनो महद्विप्रियम् अप्रियमवाप्य विकृतिं विकारं याति ननु प्राप्नोति खलु । यन्मनो निसर्गात्स्वभावान्निरवग्रहं चपलमित्यर्थः । ग्रहे खलमत्यन्त । तदिति शेषः । किमु विकृतिं यातीति किमु वक्तव्यमित्यर्थः । चपलचित्तश्चायं चैद्य इति भावः । अत्र चैद्यक्रोधस्य नन्वित्यादिवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ११ ॥

एवं गात्रारब्धविकारानुक्त्वा वागारब्धान् वक्तुमुपोद्घातयति-

प्रथमं शरीरजविकारकृतमुकुलबन्धमव्यथी ।
भाविकलहफलयोगमसौ वचनेन कोपकुसुमं व्यचीकसत् ॥ १२ ॥

प्रथमामिति । न व्यथते बिभेतीति अव्यथी निर्भयः । 'जिदृक्षि' इत्यादिना नञ्पूर्वाद् व्यथतेरिनिः । असौ चैद्यः प्रथमं शरीरजैर्विकारैः पूर्वोक्तैः शिरःकम्पनादिभिः कृतो मुकुलबन्धो मुकुलप्रादुर्भावो यस्य तत् भाविकलहस्य रणस्यैव फलस्य योगो यस्य तत् । 'अक्रिया सम-

रनीकरणाः कलहविग्रहौ' इत्यमरः । कोप एव कुसुम तत् वचनेन ' यदपूपुजः ' इत्यादिवक्ष्यमाणवाक्येन व्यचीकसत् विकासयति स्म । कसेः "णौ चङ्युपधाया ह्रस्व" "दीर्घो लघोः" इत्यभ्यासदीर्घ. । अत्र विकारकलहवचनकोपेषु मुकुलफलविकासकुसुमत्वरूपणात्समस्तवस्तुवर्ति सावयवरूपकम् ॥ १२ ॥

**ध्वनयन्सभामथ सनीरघनरवगभीरवागभीः ।**
**वाचमवददतिरोषवशादतिनिष्ठुरस्फुटतराक्षरामसौ ॥ १३ ॥**

**ध्वनयन्निति** । अथ सनीरघनरवगभीरवाक् सजलमेघगार्जितगभीरस्वर इत्यर्थः । अभीः निर्भीकः असौ चैद्य. सभामास्थान ध्वनयन् अतिरोषवशात् अतिनिष्ठुराणि अतिपरुषाणि स्फुटतराणि चाक्षराणि यस्यास्ता वाचमवदत् । घनरवगभीरेत्युपमालङ्कारः ॥ १३ ॥

वाचमवददित्युक्तम् अथ तामेव प्रपञ्चयन् पञ्चभिः पाण्डवोपालम्भमाह—

**यदपूपुजस्त्वमिह पार्थ मुरजितमपूजितं सताम् ।**
**प्रेम विलसति महत्तदहो दयितं जनः खलु गुणीति मन्यते१४॥**

**यदित्यादि** । हे पार्थ पृथापुत्रेति मातृप्राधान्येनामन्त्रण मर्म्मोद्घाटनार्थम् । सतामपूजित सद्भिरपूज्यमानमित्यर्थ । " मतिबुद्धिपूजार्थेभ्यश्च " इति वर्तमाने क्तः । "क्तस्य च वर्त्तमाने" इति षष्ठी । मुरजित कृष्णम् इह सदसि यद्यस्मादपूपुजः पूजयसि स्म । "णौ चङ्युपधाया ह्रस्व." । तत्तस्मात् महत्प्रेम विलसति स्फुरति अन्यथा कथमपूज्ये पूज्यत्वाभिमान इत्यभिप्रेत्याह जनो लोकः दयित प्रिय जन गुणीति मन्यते खलु अगुणिनमपीत्यर्थः । अहो आश्चर्यम् । कृष्ण प्रेम्णा पूजितो न गुणादिति भावः । अत्र प्रेमविलसितस्योत्तरवाक्यार्थहेतुक काव्यलिङ्गम् ॥ १४ ॥

**यदराज्ञि राजवदिहार्घ्यमुपहितमिदं मुरद्विषि ।**
**ग्राम्यमृग इव हविस्तदयं भजते ज्वलत्सु न महीशवह्निषु १५॥**

**यदिति** । अराज्ञि अभिषेकादिराजगुणविरहिणीत्यर्थः । "नञस्तत्पुरुषात्" इति समासान्तप्रतिषेध' । इहास्मिन् मुरद्विषि कृष्णे । अपात्रद्योतनार्थमसम्प्रदानविभक्तिनिर्देश' । राजानमर्हतीति राजवत् राजार्हम् । तदर्हमिति वतिप्रत्ययः । " तद्धितश्चासर्वविभक्तिः" इत्यव्ययत्वम् । यदिदमर्घ्यमर्घार्थं द्रव्यम् । अर्हणमित्यर्थः । उपहितमर्पितं तदर्घ्यमय कृष्णः महीशा अवनिपा वह्नय इव इत्युपमितसमासः तेषु महीशवह्निषु ज्वलत्सु सत्सु अन्यत्र महीपा इव वह्नयः तेषु ज्वलत्सु सत्स्वित्यर्थः । ग्राम्यमृगः शुनको हविरिव न भजते न प्राप्नोति । उपमालङ्कारः ॥ १५ ॥

अनृतां गिरं न गदसीति जगति पटहैर्विघुष्यसे ।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता ॥ १६ ॥

**अनृतामिति** । हे पार्थ ! अनृतामसत्यां गिरं न गदसि न वदसीति जगति लोके पटहै-र्वाद्यविशेषैः कर्तृभिः । विघुष्यसे उद्घोष्यसे अथ च तथापि निन्द्यं हरिमर्चयतस्तव कर्मणा अपू-ज्यपूजाकरणेनैवासत्यता सत्यहीनता विकसति प्रकाशते । अत्रासत्यप्रसिद्धसत्याचारयोर्विरूपयो-र्घटनाद्विरूपघटनारूपो विषमालङ्कारः ॥ १६ ॥

तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथवा भृशमप्रशस्तमपि मङ्गलं जनाः ॥ १७ ॥

**तवेति** । हे पार्थ ! तवेदं धर्मराज इति नाम कथमपष्ठु असत्यमेव पठ्यते । "अपदुःसुषु स्थः" इत्यौणादिकः कुप्रत्ययः । "अम्बाम्बगोभूमि" इत्यादिना षत्वम् । यद्वा युक्तमेव तदि-त्याह । अथवा जनाः भृशमप्रशस्तमपि भौममदिनममङ्गलवासरं मङ्गलम् अभिदधति व्यपदिशन्ति तद्वदिदमपीत्यर्थः । लोकैरप्रशस्तं प्रशस्तशब्देन विरुद्धार्थेनापि व्यपदिश्यते तदुच्चारणदोषात् । तदधर्मराजस्यापि ते धर्मराजव्यपदेश इति भावः । अत्र धर्मराजभौमदिनयोर्निरपेक्षवाक्यद्वये प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥ १७ ॥

यदि वार्चनीयतम एष किमपि भवतां पृथासुताः ।
शौरिरवनिपतिभिर्निखिलैरवमाननार्थमिह किं निमन्त्रितैः ॥ १८ ॥

**यदि वेति** । हे पृथासुताः कौन्तेयाः ! एष शौरिर्वा शौरिरेवेत्यर्थः । 'वा स्याद्विकल्पो-पमयोरेवार्थे च समुच्चये' इति विश्वः । किमपि कथमपि भवतामर्चनीयतमो यदि पूज्यश्चेत् । तर्हीति शेषः । अवमानस्तिरस्कारः तस्मै तदर्थमेव । "अर्थेन सह नित्यसमासः विशेष्यलिङ्गता च वक्तव्या" क्रियाविशेषणम् । निमन्त्रितैराहूतैर्निखिलैरवनिपतिभिरिह किं कोऽर्थः साध्य इत्यर्थः । अत एव साधनक्रियापेक्षया करणत्वे तृतीया । अत्र गम्यमानक्रियापेक्षयापि कारकवृत्तिरिति न्यासोद्योते । अत्र सकलराजनिषेधस्य पूर्ववाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदः ॥ १८ ॥

अथ त्रिभिर्भीष्मोपालम्भमाह—

अथ वा न धर्ममसुबोधसमयमवयात बालिशाः ।
काममयमिह वृथापलितो हतबुद्धिरप्रणिहितः सरित्सुतः ॥ १९ ॥

**अथेत्यादि** । अथवा बालिशाः मूर्खाः । यूयमिति शेषः । सुबोधो न भवतीत्यसुबोधो दुर्बोधः समय आचारो यस्य तं धर्मं नावयात न जानीत । अवपूर्वाद्याधातोर्लोट् । लोटः "तस्थ" इत्यादिना थस्य तादेशः । किन्तु वृथा निष्फलं पलितं यस्य स वृथापलितः वृथापरिणत इत्यर्थः । 'पलितं जरसा शौक्ल्यम्' इत्यमरः । वृथात्वे हेतुः हतबुद्धिर्नष्टमतिरयं सरित्सुतो

भीष्मोऽपि कामप्रणिहितोऽनवहितः प्रमत्तः बालाः पाथा न जानन्तु हन्त वृद्धोऽपि न जानातीति चित्रमित्यर्थः । अत एव सत्यपि कारणे कार्य्यानुदयाद्विशेषोक्तिरलङ्कारः, तथा बालिशत्वधर्मदुर्बोधत्वयोर्विशेषणगत्या धर्मज्ञानाहेतुत्वात्काव्यलिङ्गं चेत्यनयोः सापेक्षत्वात्सङ्करः ॥ १९ ॥

**स्वयमेव शन्तनुतनूज यमपि गणमर्घ्यमभ्यधाः ।**
**तत्र मुररिपुरयं कतमो यमनिन्द्यबन्दिवदभिष्टुषे वृथा ॥ २० ॥**

स्वयमेवेति । हे शन्तनुतनूज भीष्म ! स्वयमेव त्वमेवेत्यर्थः । यमपि गणं वर्गमर्घ्यमर्हं पूज्यम् "दण्डादिभ्यो यत्" इति यत्प्रत्ययः । अभ्यधा अवोचः । स्नातकं गुरुम् इत्यादिश्लोक इति भावः । धाधातोर्लुङि "गातिस्था-" इत्यादिना सिचो लुक् । तत्र स्नातकादिगणे अयं मुररिपुः कतमः न कोऽपीत्यर्थः । मास्तु अस्तु वा अस्मदुपालम्भे को हेतुस्तत्राह । यमिति । यं मुररिपुमनिन्द्यः बन्दिवत्प्रगल्भवैतालिकवदित्युपमा । अभिष्टुषे मिथ्या स्तौषि । अतस्त्वमेवोपलभ्यस इति भावः । "उपसर्गात्सुनोति-" इत्यादिना षत्वम् ॥ २० ॥

**अवनीभृतां त्वमपहाय गणमतिजडः समुन्नतम् ।**
**नीचि नियतमिह यच्चपलो निरतः स्फुटं भवसि निम्नगासुतः २१**

अवनीति । अतिजडोऽतिमूढोऽतिशीतश्च चपलोऽस्थिरः सत्वरश्च त्वं समुन्नतम् उन्नतमवनीभृतां राज्ञां भूधराणां च गणमपहाय न्यञ्चतीति न्यङ् तस्मिन् नीचि नीचवृत्ते निम्ने च । " अचः " इत्यकारलोपे " चौ " इति दीर्घः । इहास्मिन् कृष्णे यद्यस्मान्नियतं नित्यं निरतोऽनुरक्तः प्रवणश्च स इति शेषः । निम्नं नीचं गच्छतीति निम्नगा नदी । " अन्यत्रापि दृश्यते " इति डप्रत्ययः । तस्याः सुतो भवसि स्फुटं व्यक्तम् । नीचनिरतत्वादिधर्मसङ्क्रमादिति भावः । उक्तं च । ' न पित्र्यमनुवर्त्तन्ते मातृकं द्विपदाः ' इति । अत्र चतुर्थपादार्थस्य पूर्ववाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदः ॥ २१ ॥

अथ सप्तदशभिः कृष्णोपालम्भं करोति—

**प्रतिपत्तुमङ्ग घटते च न तव नृपयोग्यमर्हणम् ।**
**कृष्ण कलय ननु कोऽहमिति स्फुटमापदां पदमनात्मवेदिता २२**

प्रतिपत्तुमिति । हे अङ्ग ! तव नृपयोग्यं राजार्हमर्हणं पूजनं प्रतिपत्तुं स्वीकर्तुं न च घटते न युज्यते । नन्वहमपि राजैव कथमर्हणं मे न युक्तं तत्राह । कृष्णेति । हे कृष्ण ! अहं क इति कलय अहं राजा न वेति निजस्वरूपमालोचयेत्यर्थः । अनालोचनेऽनर्थमाह अनात्मवेदिता अनात्मज्ञत्वम् आपदां पदं स्थानं स्फुटं खलु सत्यमित्यर्थः । आत्मा च कसकिङ्करस्तस्य पशुपालकत्वादिति भावः । अतो निजस्वरूपं चिन्त्यमिति हेतुमद्भावात्काव्यलिङ्गमिति ॥ २२ ॥

असुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ।
दण्डदलितसरघः प्रथसे मधुसूदनस्त्वमिति सूदयन्मधु ॥ २३ ॥

**असुर इति** । मधुरिति कोऽप्यसुरस्त्वया न्यवधि हतः । "आत्मनेपदेष्वन्यतरस्याम्" इति हन्तेर्लुङि विकल्पाद्वधादेशः । इति कथं प्रतीयते विश्वस्यते न कथञ्चिदित्यर्थः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । किन्तु दण्डेन दलिता ध्वस्ता सरघा मधुमक्षिका येनेदृशस्त्वम् । 'सरघा मधुमक्षिका' इत्यमरः । अत एव मधु क्षौद्रं सूदयन् पीडयन् मधुसूदन इति प्रथसे प्रथितोऽसि । मक्षिकासूदनमेव मधुसूदनसंज्ञाप्रवृत्तिनिमित्तं न तु मधुनाम्नो दैत्यस्य सूदनमित्यर्थः । अत्र मधुसूदनसंज्ञाया प्रसिद्धार्थनिरासेनोक्तवाक्यस्यान्यथा व्युत्पादनहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ २३ ॥

मुचुकुन्दतल्पशरणस्य मगधपतिशाततौजसः ।
सिद्धमबल सबलत्वमहो तव रोहिणीतनयसाहचर्य्यतः ॥ २४ ॥

**मुचुकुन्देति** । हे अबल बलहीन ! कुतः मुचुकुन्दो नाम कश्चिद्राजा । यस्यासुरविजयश्रान्त्या निद्रायमाणस्य देवतावरप्रसादात् निद्राविघातकारी दृष्टिपाताद्भस्मीभवति तस्य तल्पं शय्या तदेव शरणं रक्षकं यस्य तस्य । कालयवनविद्रावितस्येति भावः । तथा मगधपतिना जरासन्धेन शाततौजसः अष्टादशकृत्वो नष्टवीर्यस्य तव रोहिणीतनयस्य बलापरनाम्नो बलभद्रस्य साहचर्यतः साहचर्य्यात् सबलत्वं सिद्धम् । न तु स्वबलसम्पत्त्येत्यर्थः । अहो कारणं विना कार्य्योदयादाश्चर्य्यम् । अत एव विभावनालङ्कारः । पुनरुक्तौ श्लेषो लभ्यते इति भावः ॥ २४ ॥

छलयन्प्रजास्त्वमनृतेन कपटपटुरैन्द्रजालिकः ।
प्रीतिमनुभवसि नग्नजितः सुतयेष्टसत्य इति सम्प्रतीयसे ॥२५॥

**छलयन्निति** । इन्द्रजालं वेत्तीति ऐन्द्रजालिकः । अत एव कपटपटुर्वञ्चनाकुशलस्त्वं अनृतेनासत्येन प्रजाश्छलयन् वञ्चयन् इष्टं सत्यं यस्य स इष्टसत्यः प्रियसत्य इति सम्प्रतीयसे सम्यक् ख्यायसे । 'प्रतीते प्रथिताख्यातवित्तविज्ञातविश्रुताः' इत्यमरः । नग्नजितो नग्नजिन्नाम्नो राज्ञः सुतया सत्यभामया सत्यापराख्यया प्रीतिमानन्दम् अनुभवसि । सत्यायोगादिष्टसत्यो न तु सत्ययोगादिति भावः । अत्र हरेः सत्यसम्बन्धेऽपि तदसम्बन्धोक्तेः सम्बन्धे असम्बन्धरूपातिशयोक्तिः ॥ २५ ॥

धृतवान्न चक्रमरिचक्रभयचकितमाहवे निजम् ।
चक्रधर इति रथाङ्गमदः सततं बिभर्षि भुवनेषु रूढये ॥ २६ ॥

**धृतवानिति** । आहवे युद्धे अरिचक्रादरिसैन्याद्भयेन चकितं सम्भ्रान्तम् । 'चकितं भयसंभ्रमः' इति सज्जनः । निजमात्मीयं चक्रं सैन्यं न धृतवान् नावलम्बितवान् न रक्षितवान्

इत्यर्थ. । कि तु चक्रधर इति भुवनेषु रूढये प्रसिद्धये अदः इद रथाङ्ग चक्रापराख्य सतत बिभर्षि दधासि वृथाभारमिति भावः । 'चक्र सैन्यरथाङ्गयोः' इति हेमसज्जनौ । अयोविकारधरः चक्रधरो भवान्नारिभीतचक्रावारकत्वादित्यर्थः । अत्र हरौ भगवति चक्रधारणसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्ति ॥ २६ ॥

**जगति श्रिया विरहितोऽपि यदुदधिसुतामुपायथाः ।**
**ज्ञातिजनजनितनामपदां त्वमतः श्रियः पतिरिति प्रथामगाः २७॥**

**जगतीति** । श्रिया राजलक्ष्म्या विरहितोऽपि । यदूना ययातिशापाद्राज्यानधिकारित्वादिति भावः । ज्ञातिजनेन बन्धुजनेन जनित प्रवर्तित नामपद श्रीपतिरिति पारिभाषिकसज्ञाशब्दो यस्यास्ताम् उदधिसुताम् अब्धिकन्या यद्यस्मादुपायथाः उदूढवानित्यर्थ । 'विवाहोपयमौ समौ' इत्यमर । "उपाद्यमः स्वकरणे" इत्यात्मनेपदम् । 'तनादिभ्यस्तथासोः" इति सिचो लुक् । 'अनुदात्तोपदेश" इत्यादिना अनुनासिकलोपः । अतो जगति श्रियः पतिरिति प्रथा ख्यातिमगा प्राप्तवानसि । "इणो गा लुङि" इति गादेशः । न राजान्तरवद्राजलक्ष्मीयोगात्तव श्रीपतित्वम् । किं तु श्रीसञ्ज्ञिकायाः कस्याश्चिद्दराक्या परिग्रहादिति भाव. । अत्रोग्रसेनस्याभिषेकसस्कारेऽपि त्रैलोक्यप्रतिष्ठापकस्य हरेरेव सकलराज्यश्रीधुरधरत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्ति ॥ २७ ॥

**अभिशत्रु संयति कदाचिदविहितपराक्रमोऽपि यत ।**
**व्योम्नि कथमपि चकर्थ पदं व्यपदिश्यसे जगति विक्रमीत्यतः॥**

**अभीति** । सयति युद्धे कदाचित् कदापि अभिशत्रु शत्रुमभिव्याप्य । आभिमुख्येऽव्ययीभावः । अविहितपराक्रमोऽकृतपौरुषोऽपि यद्यस्मात्कथमपि महता प्रयत्नेन व्योम्नि पद पादक्षेपं चकर्थ कृतवानसि । "ऋतो भारद्वाजस्य" इति इट्प्रतिषेध., पित्त्वेनाकित्त्वाद्गुणः । अतो जगति विक्रमी विक्रमवानिति व्यपदिश्यसे व्यवह्रियसे न तु पराक्रमयोगादित्यर्थ । अत्रापि पराक्रमसम्बन्धेऽपि असम्बन्धोक्तेरतिशयोक्तिः ॥ २८ ॥

**पृथिवीं बभर्थ यदि पूर्वमिदमपि गुणाय वर्तते ।**
**भूमिभृदिति परहारितभूस्त्वमुदाह्रियस्व कथमन्यथा जनैः २९**

**पृथिवीमिति** । पूर्वं प्रागपि सम्पत्संभवेऽपीति भावः । पृथिवीं बभर्थ यदि भृतवांश्चेत् । भृञो लिटि भारद्वाजीयेट्प्रतिषेधः, पित्त्वाद्गुणः । इद भूधारणमपि गुणायोत्कर्षाय वर्तते । भूतपूर्वगत्यापि व्यपदेशत्वात्तदपि नास्तीति भाव. । प्रत्युत परैः शत्रुभि' हारितभूः परिहारितभूमिकः । जरासन्धेन मथुरानगरान्निष्कासितत्वादिति भावः । अत्र हर्तुरवहरणक्षमत्वमेव हारयितृत्वमिति णिजर्थोपपत्तिः । जनैः कथमन्यथा अर्थवैपरीत्येन भूमिभृदिति उदाह्रियस्व ।

उदाह्रियेथा' सभावनाया लोट् । असंभावितमेवेत्यर्थः । अत्रापि भूधरणसम्बन्धेऽप्यसम्बन्धो-क्तेरतिशयोक्तिः ॥ २९ ॥

**तव धन्यतेयमपि सर्वनृपतितुलितोऽपि यत्क्षणम् ।**
**क्लान्तकरतलधृताचलकः पृथिवीतले तुलितभूभृदुच्यसे ॥ ३० ॥**

**तवेति** । तव धन्यता पुण्यवत्ता कथ सर्वैर्नृपतिभिस्तुलितोऽवधूतोऽपि तिरस्कृतोऽपीत्यर्थः । क्षण क्लान्ते भारवत्त्वेन श्रान्ते करतले धृत. अचलकोऽल्पाचलो येन स सन् पृथिवीतले तुलितभूभृदुद्धृतराजकश्च उच्यसे इति यत्, इयमप्यपरा ते धन्यतेत्यर्थः । गोवर्द्धनाख्यक्षुद्रभूधरतोलनात्तुलितभूभृच्च भवति न मादृशामिव महावीरातितुलनादिति भाव । अत्र सर्वनृपतितुलितोऽपि तत्तोलक इति विरोधो भूभृदिति श्लेषमूलाभेदाध्यवसायोत्थापित इति विरोधातिशयोक्त्यो सङ्कर । तेन गोवर्द्धनोद्धरणमपि नातीवाद्भुत वाहुबलशालिनामिति वस्तु व्यज्यते ॥ ३० ॥

**त्वमशक्नुवन्नशुभकर्मनिरत परिपाकदारुणम् ।**
**जेतुमकुशलमतिर्नरकं यशसेऽधिलोकमजयः सुतं भुवः ॥ ३१ ॥**

**त्वमिति** । हे अशुभकर्मनिरत पापाचारपर ! अत एवाकुशलमतिर्दुर्बुद्धिस्त्व परिपाके फलकाले दारुण विचित्रपापयातनामयत्वाद्भयङ्करमित्यर्थ । नरक निरयम् । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ' इत्यमर । जेतुमशक्नुवन् पापिष्ठैर्दुर्जयत्वादिति भाव. । अधिलोक लोके । विभक्त्यर्थेऽव्ययीभावः । यशसे सनरकविजयीति प्रसिद्धये भुव सुत नरकाख्यम् अजय जितवानसि परलोकप्रतारणमात्रपरो न परलोकवाव्योऽसीति भाव. । अत्र निरयापराख्यनरकविजयाशक्तेर्विशेषणगत्या तज्जयस्यार्थिनो हरेर्नरकासुरविजयप्रवृत्तिहेतुकत्वात्पदार्थहेतुककाव्यलिङ्गम् । तच्च नरकयो' श्लेषमूलाभेदात्तदुत्थापितमिति सङ्कर ॥ ३१ ॥

**सकलैर्वपुः सकलदोष समुदितमिदं गुणैस्तव ।**
**त्यक्तमपगुण गुणत्रितयत्यजनप्रयासमुपयासि किं मुधा ॥ ३२ ॥**

**सकलैरिति** । हे अपगुण निर्गुण ! सकलैः सर्वैर्दोषैः समुदित युक्त तवेद वपुः सकलैर्गुणैः शौर्यादिभिस्त्यक्त सर्वगुणान्निवर्तितमेवेत्यर्थः । एव च सति गुणत्रयस्य त्यजने त्यागे यः प्रयासः तं मुधा वृथा किं किमर्थमुपयासि । मुमुक्षयेति भाव । यत्र सकलगुणस्य त्यागस्तत्र गुणत्रयस्य त्यागोऽन्तर्गत्या सिद्ध एव अन्यथा साकल्यव्याघातादित्यर्थः । स्वभावतो निर्गुणस्य परवस्तुनः कुतो गुणत्रयचिन्तेति ध्वनिः । गुणत्रयत्यागनिषेधस्य सकलैरित्यादिवाक्यार्थहेतुकत्वात्काव्यलिङ्गभेद ॥ ३२ ॥

**त्वयि पूजनं जगति जाल्म कृतमिदमपाकृते गुणैः ।**
**हासकरमघटते नितरां शिरसीव कङ्कतमपेतमूर्द्धजे ॥ ३३ ॥**

त्वयीति । हे जाल्म असमीक्ष्यकारिन् । 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः । गुणैरपाकृते निरस्ते गुणहीने त्वयि पूजनं कृतं जगति हासकरं परिहासजनकम् इदं पूजनम् । अपेतमूर्द्धजे अपगतकेशे शिरसि कङ्कतं दारुदन्तादिमयं केशप्रसाधनविशेषः । 'प्रसाधनं कङ्कतिकम्' इति विश्वामरौ । कङ्कतमेव कङ्कतिका कङ्कणमिति पाठे शेखरमित्यर्थः । 'कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपि' इति विश्वः । तदिव नितरामघटते न सङ्गच्छते इत्यर्थः । "नञो नलोपस्तिङि क्षेपे इत्युपसङ्ख्यानम्" इति निन्दाया तिङ्योगेऽपि नलोपः । उपमालङ्कारः ॥ ३३ ॥

सम्प्रति राज्ञां रोषमुत्पादयन्नाह—

**मृगविद्विषामिव यदित्थमजनि मिषतां पृथासुतैः ।**
**अस्य वनशुन इवापचितिः परिभाव एष भवतां भुवोऽधिपाः ॥ ३४ ॥**

मृगेति । हे भुवोऽधिपा राजानः । मृगविद्विषां सिंहानामिव भवतां मिषतां पश्यतां भवत्सु मिषत्सु मिषतो युष्मान् अनादृत्येत्यर्थः । "षष्ठी चानादरे" इति विकल्पाद्भावलक्षणे षष्ठी । इत्थं पृथासुतैः कौन्तेयैः । पितरमेतेषां न वेद्मीति भावः । अस्य कृष्णस्य वनशुनो वनशुनकस्येव । जम्बुकस्येवेति यावत् । अपचितिः पूजा अजनि जनिता कृतेति यत् । जनेर्ण्यन्तात्कर्मणि लुङ् । एष भवतां परिभावः परिभवः । "परौ भुवोऽवज्ञाने" इति विभाषया घञ्प्रत्ययः ॥ ३४ ॥

**अवधीज्जनङ्गम इवैष यदि हतवृषो वृषं ननु ।**
**स्पर्शमशुचिवपुरर्हति न प्रतिमाननां तु नितरां नृपोचिताम् ॥ ३५ ॥**

अवधीदिति । हतवृषो हतसुकृतः । 'सुकृते वृषभे वृषः' इति विश्वः । एष कृष्णो जनङ्गमश्चाण्डाल इव । 'चाण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः । "गमेश्च" इति संज्ञायां जनपूर्वाद्गमधातोः खच्प्रत्ययः, 'अरुर्द्विषत्' इत्यादिना मुमागमः । वृषं वृषभरूपिणम् अरिष्टाख्यमसुरमवधीद्यदि हतवांश्चेत् । 'लुङि च" इति हनो वधादेशः । अत एव अशुचिवपुः अशुद्धात्मा स्पर्शं नार्हति । नृपोचितां राजार्हां प्रतिमाननां पूजां तु नितरां नार्हति । स्पर्शायोग्योऽन्योन्यः कथं पूज्य इत्यर्थः । उपमा ॥ ३५ ॥

**यदि नाङ्गनेति मतिरस्य मृदुरजनि पूतनां प्रति ।**
**स्तन्यमघृणमनसः पिबतः किल धर्मतो भवति सा जनन्यपि ॥ ३६ ॥**

यदीति । अस्य कृष्णस्य मतिः पूतनामाम बालग्रहविशेषः तां प्रति अङ्गना इति हेतोर्मृदुः कृपा दया नाजनि यदि न जाता चेत् मास्त्विति शेषः । जनेः कर्तरि लुङ् "दीपजन"

इत्यादिना चिण्प्रत्ययः। अघृणमनसो निर्घृणचित्तस्य स्तने भवं स्तन्यं पयः। "शरीरावयवाच्च" इति यत्प्रत्ययः। पिबतोऽस्य सा पूतना धर्मतः शास्त्रतो जनन्यपि माता च भवति किल खलु। स्त्रीति कृपाऽभावेऽपि मातेति जुगुप्साऽप्यस्य नास्तीत्यहो न केवलं स्त्रीहन्ता किन्तु मातृहन्ता चायं स्तनप्रदायाः उपमातृत्वादिति भावः। अत्र स्तनपानस्य विशेषणगत्या जननीत्वहेतुत्वात्काव्यलिङ्गम् ॥ ३६ ॥

**शकटव्युदासतरुभङ्गधरणिधरधारणादिकम्।**
**कर्म यदयमकरोत्तरलः स्थिरचेतसां क इव तेन विस्मयः॥३७॥**

**शकटेति।** तरलश्चपलोऽयं कृष्णः शकटव्युदासं शकटासुरमर्दनं तरुभङ्गो यमलार्जुनभञ्जनं धरणिधरधारणं गोवर्द्धनोद्धरणं तान्यादिर्यस्य तत्तथोक्तं यत्कर्म अकरोत् तेन कर्मणा स्थिरचेतसां धीरचित्तानां क इव विस्मयो न कोऽपीत्यर्थः। अत्र स्थिरचेतस्कतायाः विशेषणगत्या विस्मयनिषेधहेतुत्वात्काव्यलिङ्गं वृत्त्यनुप्रासेन संसृज्यते ॥ ३७ ॥

**अयमुग्रसेनतनयस्य नृपशुरपरः पशूनवन्।**
**स्वामिवधमसुकरं पुरुषैः कुरुते स्म यत्परममेतदद्भुतम् ॥३८॥**

**अयमिति।** अपरोऽन्यः ना पशुरिवेति नृपशुरित्युपमितसमासः। कार्याकार्यविवेकशून्यत्वादेवेत्यर्थः। अयं कृष्णः उग्रसेनतनयस्य कंसस्य पशून् अवन् गाः पालयन् पुरुषैरसुकरं लोकवेदविगीतत्वात् दुष्करं स्वामिवधं यत् कुरुते स्म चकारेति यावत्। एतत्परममद्भुतम् अभूतपूर्वादिति भावः। अत्र पश्ववनस्य विशेषणगत्या कंसकृष्णयोः स्वामिभृत्यभावहेतुत्वात्काव्यलिङ्गम् ॥ ३८ ॥

अष्टत्रिंशश्लोकादूर्ध्वमेते चतुस्त्रिंशच्छ्लोकाः प्रक्षिप्ताः सन्ति ते चाटीकाविषया इति मूलभूता एवेह प्रदर्श्यन्ते—

ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम्। सर्वगुणविरहितस्य हरेः परिपूजया कुरु नरेन्द्रको गुणः ॥ १ ॥ न महानयं न च बिभर्ति गुणममतया प्रधानताम्। स्वस्य कथयति चिराय पृथग्जनताजगत्यनभिमाननान्दवन् ॥ २ ॥ रहितं कलाभिरखिलाभिरकृतरसभावनविदम्। क्लीबमिदमुपदिशन्ति जनाः पुरुषाधमेनमतनं विदग्धनाम् ॥ ३ ॥ अतिभूयसापि सुकृतेन दुरुपचर एव शक्यते। भक्तिशुचिभिरुपचारपरैरपि न ग्रहीतुमभियोगिभिर्नृभिः ॥ ४ ॥ भजति स्वनामनुचितोऽपि सविनयमुपासितो जनैः। नियमपरिचितचित्ततया पर एव सर्वजगतस्तथाप्ययम् ॥ ५ ॥ उपकारिणमविहतोपकारमनरिमरिमप्रियं प्रियम्। साधुमितरमसुवं बुधमित्यविशेषतः सततमेव पश्यति ॥ ६ ॥ उपकारकस्य दधतोऽपि बहुगुणतया प्रधानताम्। दुःखमयमनिशमासवतो न परस्य किञ्चिदुपकर्तुमिच्छति ॥ ७ ॥ स्वयमक्रियः कुटिलमेव तृणमपि विधातुमक्षमः। भोक्तुमविरतमलज्जतया फलमीहते परकृतस्य कर्मणः ॥ ८ ॥ य इमं समाश्रयति कश्चिदुदयविपदोर्निराकुलम्। तस्य भवति जगतीह कुतः पुनरुद्भवो विकरणत्वमेयुषः ॥ ९ ॥ गुणवन्तम-

व्ययमपास्य जनमखिलमव्यवस्थितैः । याति सुचिरमतिबालतया धृतिमेक एव परिवारितो जडैः ॥ १० ॥ मुक्तोऽपि सेवकजनस्य बहुदिवसखिन्नचेतसः । सर्वजनविहितनिर्विदय सकृदेव दर्शनमुपैति कस्यचित् ॥ ११ ॥ स्वजने सखिष्वनुगतेषु नियतमनुरागवत्स्वपि । स्नेहममृदुहृदयः क्षपयन्निरपेक्ष एष समुपैति निर्वृतिम् ॥ १२ ॥ क्षणमेष राजसतयैव जगदुदयदर्शितोद्यतिः । सत्त्वहितकृतमतिः सहसा तमसा विनाशयति सर्वमावृतः ॥ १३ ॥ अभिहन्यते यदभिहन्ति परितपति यच्च तप्यते । नास्य भवति वचनीयमिदं चपलात्मिका प्रकृतिरेव हीदृशी ॥ १४ ॥ अतिमत्त्वयुक्त इति पुम्भिरयमतिशयेन वर्ण्यते । सूक्ष्ममतिभिरथ चापगते समुपैति नाल्पमपि सत्त्व-मकरन् ॥ १५ ॥ प्रलय परस्य महतोऽपि नियतमिह निस्सुखे गुणा । यान्ति जगदपि सदोप-मद म्यवलंच्य पश्यति गुणान् द्विपन्नयम् ॥ १६ ॥ क्षितिपीठमभसि निमग्नमुदहरत य. परः पुमान । एष किल स इति कैरबुधैरभिधीयमानमपि तत्प्रतीयते ॥ १७ ॥ नरसिंहमूर्तिरयमेव दितिसुतमदारयन्नखैः । आप्तजनवचनमेतदपि प्रतिपत्तुमोमिति जनोऽयमर्हति ॥ १८ ॥ अपहाय तुङ्गमपि मानमुचितमवलम्ब्य नीचताम् । स्यार्थकरणपटुरेष पुरा बलिना परेण सह सम्प्रयुज्य-ते ॥ १९ ॥ क्रमते नभोरभसयैव विरचयति विश्वरूपताम् । सर्वमतिशयगत कुरुते स्फुटमिन्द्रजा-लमिदमेष मायया ॥ २० ॥ किल रावणारिरयमेव किमिदमियदेवमिष्यते । सत्त्वमधिबलमधि-द्युति यत्तदशेषमेष इति धृष्टमुच्यताम् ॥ २१ ॥ चलतैष पादयुगलेन गुरुशकटमीषदस्पृशत् । नैवकल्पितमथ चोदलल्लदलितोरुभाण्डचयमात्मनैव तत् ॥ २२ ॥ स्नुवतामुना स्तनयुगेन जनित-जननीजनादरा । स्त्रीति सदयमविधाय मनस्तदकारि साधु यदवाति पूतना ॥ २३ ॥ अमन-स्करकथमिवैष कृतवरणिगिह्नणः क्षणात् । बाढमिदमपि न बालकृत ननु दैवताविधिरयं विजृम्भते ॥ २४ ॥ विहरन्वने विजन एव महति दववदेष गोपताम । नाम जगति मधुसूदन इत्यगमद्धतेन मधुना महीयसा ॥ २५ ॥ अविमृश्य गोवृषसमुत्थमयमवममीमरद्रुषा । रिष्टिमुपगु ससुपोढमद यदसौ किलासुर इति प्रमार्ष्टि तत् ॥ २६ ॥ मुखकन्दरान्तरगतोऽपि विकटदशनेन केशिना । नास्य सपदि यदखादि भुजस्तदहो तिरश्चि सहजैव मूढता ॥ २७ ॥ यदुदस्य बाहुमयमेकम-धृत गिरिमद्भुतन्न तत् । भूरिसलिलमविषह्यमिव जलदे विमुञ्चति गवा समागता ॥ २८ ॥ किमिवात्र चित्रमयमन्नमचलमहकल्पित यदि । प्राश निखिलमखिलेऽपि जगत्युदर गते बहुभु-जोऽस्य न व्यथा ॥ २९ ॥ अमुना करेण पृथुदन्तमुसलमुदखानि दन्तिनः । तेन यदवधि न एव पुनर्बलशालिना क इव तत्र विस्मय. ॥ ३० ॥ शिशुरेव शिक्षितनियुद्धकरणमकृतक्रियः स्वयम् । मल्लमलघुकठिनासतट न्यवधीयदेष तददृष्टकारितम् ॥ ३१ ॥ यदयुध्यमानमपि सन्त-मुपहितसुरौघसाध्वसम् । कंसमभियमयमभ्यभवत्समुदा जनेन तदपि प्रशस्यते ॥ ३२ ॥ इति निन्दितु कृतधियापि वचनममुना यदाददे । स्तोतुमनिशमुचितस्य परैः स्तुतिरेव सा मधुनि-घातिनोऽभवत् ॥ ३३ ॥ यदुवाच दुष्टमतिरेष परिविवदिषुर्मुर द्विषन् । द्व्यर्थमपि सदसि चेदि-पतेस्तदतोऽपरावगणनामगाद्वच ॥ ३४ ॥

इति क्षिप्तश्लोका । 

इति वाचमुद्धतमुदीर्य सपदि सह वेणुदारिणा ।
सोढरिपुबलभरोऽसहनः स जहास दत्तकरतालमुच्चकैः ॥ ३९ ॥

इतीति । सोढः क्षान्तो रिपुणा बलभरो वीर्य्यातिशयो येन सः न सहत इति असहनः असहिष्णुः स चैद्य इतीत्थम् उद्धत निष्ठुर यथा तथा वाचम् उदीर्य्य सपदि वेणुदारिणा नरकात्मजेन सह दत्तः करतालः परस्परपाणिताडन यस्मिन् कर्मणि तद्यथा तथा उच्चकैस्तारं जहास कृष्णदोषोद्घाटनहर्षादट्टहास चकारेत्यर्थः । स्वभावोक्तिः ॥ ३९ ॥

कटुनापि चैद्यवचनेन विकृतिमगमन्न माधवः ॥
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते ॥ ४० ॥

कटुनेति । माधवः कटुनापि चैद्यवचनेन विकृतिं नागमत् । गमेर्लुङि पुषादित्वात् च्लेरङादेशः । तथाहि सत्ये नियतवचसम् अस्खलितवचसं सत्यमन्व सुजन के जनाः वचसा तीव्रेणापीति भावः । चलयितुमीशते शक्नुवन्ति न केऽपीत्यर्थः । ' सहिष्ये शतमागांसीति ' प्रतिज्ञाभङ्गभयादसहतेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४० ॥

न च तं तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ।
शौरिसमयनिगृहीतधियः प्रभुचित्तमेव हि जनोऽनुवर्त्तते ॥४१॥

न चेति । किञ्चेति चार्थः । तदा तत्काले इतीत्थं शपमानमाक्रोशन्तमपि । 'शपतेराक्रोशे' इति भट्टमल्लः । त चैद्यम् । यदुनृपा यादवा शौरेः कृष्णस्य समयेन सकेतेन निगृहीतधियो निरुद्धबुद्धयः सन्तो न प्रचुक्रुधुः । ' क्रुधद्रुहोरुपसृष्टयोः कर्म्म" इति कर्मत्वम् । तथाहि जनो लोकः प्रभुचित्तमेव अनुवर्त्तते । शौरिसकेतनिरुद्धबुद्धेर्यदुविशेषणगत्या क्रोधाभावहेतुत्वात् काव्यलिङ्गमर्थान्तरन्यासेन सकीर्य्यते ॥ ४१ ॥

विहितागसो मुहुरलङ्घ्यनिजवचनदामसंयतः ।
तस्य कतिथ इति तत्प्रथमं मनसा समाख्यदपराधमच्युतः ४२॥

विहितेति । अलङ्घ्येन निजवचनदाम्ना स्वप्रतिज्ञापाशेन सयतो बद्धोऽच्युतः मुहुर्विहितागसः पूर्वं सहस्रशः कृतापराधस्यापि तस्य चैद्यस्यापराध स एव प्रथमो यस्मिन् कर्मणि तत्प्रथमं यथा तथा कतिथः कतीनां पूरण इति " तस्य पूरणे डट् " इति डट् प्रत्ययः " षट्कतिकतिपयचतुरां थुक् " इति थुगागमः । मनसा समाख्यत् गणना चकार । " अस्यतिवक्तिख्यातिभ्योऽङ् " इति च्लेरङादेशः । अत्र प्रतिज्ञापाशवन्धनस्य विशेषणगत्या प्राचीनापराधानन्त्येऽपि तात्कालिकापराधगणनाहेतुत्वात्काव्यलिङ्गभेद. ॥ ४२ ॥

स्मृतिवर्त्म तस्य न समस्तमपकृतमियाय विद्विषः ।
स्मर्तुमधिगतगुणस्मरणाः पटवो न दोषमखिलं खलूत्तमाः॥४३॥

**स्मृतीति** । विद्विपश्चैद्यस्य सम्बन्धि समस्तमपकृतमपकारजातम् । नपुंसके भावे क्तः । तस्य हरेः कृष्णस्य स्मृतिपथं नेयाय न प्राप । न तमपकारं सस्मारेत्यर्थः । अर्थान्तरं न्यस्यति । अविगतगुणस्मरणाः परिचितोपकारस्मृतयः उत्तमाः सज्जनाः अखिलं दोषमपकारं स्मर्तुं न पटवः खलु नालम्भवन्तीत्यर्थः । "पर्य्याप्तिवचनेष्वलमर्थेषु" इति तुमुन्प्रत्ययः । उपकारमेव स्मरन्ति साधवो नापकारमित्यर्थः ॥ ४३ ॥

**नृपतावधिक्षिपति शौरिमथ सुरसरित्सुतो वचः ।**
**स्माह चलयति भुवं मरुति क्षुभितस्य नादमनुकुर्वदम्बुधेः ॥४४॥**

**नृपताविति** । अथ नृपतौ चेदिपे शौरिं हरिम् अधिक्षिपति सति सुरसरित्सुतो भीष्मः मरुति प्रलयमारुते भुवं चलयति कम्पयति सति क्षुभितस्योद्वेलस्याम्बुधेर्नादमनुकुर्वत्तद्वद्गभीरं वचः आह स्म उवाच । "लट् स्मे" इति भूतार्थे लट् "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति णल्याहादेशः । यद्यपि 'न पादादौ खल्वादयः' इत्याह वामनः । तथापि कविप्रौढ्या स्मशब्दस्य पादादौ प्रयोगः । उपमालङ्कारः ॥ ४४ ॥

उक्तमेवार्थं वक्तुराशयाविष्कारार्थमाह—

**अथ गौरवेण परिवादमपरिगणयंस्तमात्मनः ।**
**प्राह मुररिपुतिरस्करणक्षुभितः स्म वाचमिति जाह्नवीसुतः ॥४५॥**

**अथेति** । अथ शिशुपालप्रलापानन्तरं मुररिपुतिरस्करणेन हरिनिन्दया क्षुभितः कलुषमनाः जाह्नवीसुतो गाङ्गेयः गौरवेण धैर्येण तमात्मनः परिवादम् 'काममयम्' 'वृथापलित' इत्यादि स्वनिन्दामपरिगणयन् इति वक्ष्यमाणप्रकारेण वाचं प्राह स्म प्रोक्तवान् । गतमेतत् । धीराः स्वनिन्दामेव सहन्ते न गुरुदेवादिनिन्दामिति भावः । अत्र क्षोभस्य विशेषणगत्या वचनहेतुत्वात्काव्यलिङ्गभेदः ॥ ४५ ॥

**विहितं मयाद्य सदसीदमपमृषितमच्युतार्चनम् ।**
**यस्य नमयतु स चापमयं चरणः कृतः शिरसि सर्वभूभृताम् ॥४६॥**

**विहितमिति** । मया अद्य सदसि सभायां विहितं कृतम् इदम् अच्युतार्चनं यस्यापमृषितमतितिक्षितमसोढमित्यर्थः । 'मृष तितिक्षायाम्' इति धातोः कर्मणि क्तः, उपसर्गवशाद्विपरीतार्थता । अत एव मृषस्तितिक्षायामेव कित्त्वनिषेधादतितिक्षार्थत्वान्न गुणः "मतिबुद्धिपूजार्थेभ्यश्च" इति चकाराद्वर्तमानार्थता "क्तस्य च वर्त्तमाने" इति षष्ठी । सोऽपभ्रष्टा पुरुषश्चापं नमयतु आरोपयतु सर्वभूभृतां शिरसि भावः । शिरस्ययं चरणः कृतः न्यस्तः । अयमिति भूमौ पात्यमानस्य चरणस्य हस्तेन निर्देशः । अथ कोपामर्ष इत्यनुसन्धेयम् ॥ ४६ ॥

**इति भीष्मभाषितवचोऽर्थमधिगतवतामिव क्षणात् ।**
**क्षोभमगमदतिमात्रमथो शिशुपालपक्षपृथिवीभृतां गणः ॥४७॥**

**इतीति**। इतीत्थं भीष्मेण भाषितस्योक्तस्य वचसोऽर्थमभिधेयं शिरसि पादन्यासरूपम् क्षणात् अधिगतवतां ग्रासवतामिव सतामित्यर्थः। शिशुपालस्य पक्षा ये पृथिवीभृतो राजानः तेषामसौ गणोऽतिमात्रं क्षोभं क्रोधं विकारमगमत् एतेनैषाम् आत्मविनाशावसायी रौद्रस्थायी क्रोधः प्रादुरभूदित्युक्तम्। उत्प्रेक्षा ॥ ४७ ॥

अथैषां दशभिर्गात्रारम्भान् क्रोधानुभवानाह-

**शितितारकानुमिततात्रनयनमरुणीकृतं क्रुधा।**
**बाणवदनमुददीपि भिये जगतः सकीलमिव सूर्यमण्डलम् ॥**

**शितीत्यादि**। क्रुधा क्रोधेन अरुणीकृतमत एव शिती श्यामे ये तारके कनीनिके ताभ्याम् अनुमिते अनुमापिते ताम्रे नयने यस्य तत्। 'तारकाऽक्ष्णः कनीनिका' इत्यमरः। सर्वमुखस्य रक्तत्वादिति भावः। बाणो नृपस्तस्य वदनं सकीलं कीलाकारच्छायासहितं परिधियुक्तमिति यावत्। सूर्यमण्डलमिव जगतो भिये भयाय उददीपि प्रजज्वाल। दीप्यतेः कर्त्तरि लुङि "दीपजन" इत्यादिना चिण्प्रत्यये तलुक्। अत्र नयनयोः स्वधावन्यत्यागेनारुण्यस्वीकारात्तद्गुणः। तत्सापेक्षत्वादौत्पातिकसूर्यमण्डलोपमासङ्करः ॥ ४८ ॥

**प्रविदारितारुणतरोग्रनयनकुसुमोज्ज्वलः स्फुरन्।**
**प्रातरहिमकरताम्रतनुर्विषजद्रुमोऽपर इवाभवद्द्रुमः ॥ ४९ ॥**

**प्रवीति**। प्रविदारिते अतिविकासिते अरुणतरे क्रोधादतिरक्ततरे अत एवोग्रे भयङ्करे ये नयने ते एव कुसुमे ताभ्यामुज्ज्वलो दीप्तः स्फुरन् स्वतेजसा दीप्यमानः प्रातरहिमकरताम्रतनुः प्रभातार्कारुणविग्रहः प्रसिद्धो द्रुमो द्रुमाख्यो नृपः अपरो विषजद्रुम इवाभवत् इत्युत्प्रेक्षा रूपकसंकीर्णा ॥ ४९ ॥

**अनिशान्तवैरदहनेन विरहितवतान्तरार्द्रताम्।**
**कोपमरुदभिहतेन भृशं नरकात्मजेन तरुणेव जज्वले ॥ ५० ॥**

**अनिशान्तेति**। अनिशान्तोऽनिर्वाणो वैरदहनो विरोधाग्निर्यस्य तेन अत एवान्तरभ्यन्तरे आर्द्रता सारस्य विरहितवता त्यक्तवता। रहयतेः क्तवतुप्रत्ययः। कोपो मरुदिव तेनाभिहतः प्रज्वलित तेन नरकात्मजेन वेणुदारिणा तरुणा वृक्षेणेव भृशं जज्वले ज्वलितम्। भावे लिट्। उपमालङ्कारः ॥ ५० ॥

**अभिधित्सतः किमपि राहुवदनविकृतं व्यभाव्यत।**
**ग्रस्तशशधरमिवोपलसत्सितदन्तपङ्क्ति मुखमुत्तमौजसः ॥ ५१ ॥**

**अभीति**। किमप्यभिधित्सतोऽभिधातुमिच्छतः। दधातेः सन्नन्ताल्लट‌ः शत्रादेशः। उत्तमौजसो नाम राज्ञः संबंधि राहुवदनविकृतं व्यात्तत्वाद्राहुवक्त्रवत् करालम्। उपलसन्ती लक्ष्यमाणा

सिता दन्तपङ्क्तिर्यस्य तन्मुखं ग्रस्तशशधरमिव सदष्टचन्द्रमिव व्यभाव्यतातर्क्यतेत्युत्प्रेक्षा ॥ ९१ ॥

कुपिताकृतिं प्रथममेव हसितमशनैरसूचयत् ।
क्रुद्धमशनिदलिताद्रितटध्वनि दन्तवक्रमरिचक्रभीषणम् ॥ ९२॥

कुपितेति । प्रथमं प्रागेवाकुपितावस्थायामपीत्यर्थः । कुपितस्येवाकृतिर्मुखरागो यस्येत्युपमा । अरिचक्रभीषणं परबलभयङ्करं दन्तवक्रं दन्तवक्रनामानं राजानम् अशनिदलितस्य वज्राहतस्याद्रितटस्य ध्वनिरिव ध्वनिर्यस्य तदित्युपमा । न शनैरशनैः उच्चैर्हसितमट्टहासः सक्रुधमसूचयत् । सर्वदा मुखरागस्य विशेषणादनुभावान्तरत्वेन क्रुद्ध इत्यर्थः । अत्र कोपव्यञ्जकसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥ ९२ ॥

प्रतिघः कुतोऽपि समुपेत्य नरपतिगणं समाश्रयत् ।
यामिहरणजनिताऽनुशयः समुदाचचार निज एव रुक्मिणः ॥ ९३॥

प्रतिघ इति । प्रतिघः कोपः । 'कोपक्रोधामर्षरोषप्रतिघाः' इत्यमरः । कुतोऽपि समुपेत्यागत्य नरपतिगणं राजमण्डलं समाश्रयत् समाविशत् । रुक्मिणस्तु यामिः स्वसा । 'यामिः स्वसृकुलस्त्रियोः' इत्यमरः । तस्या रुक्मिण्या हरणेन जनितोऽनुशयो हा कष्टमापन्नं कदा निर्यातयामीति अनुतापो यस्मिन्सः । 'अथानुशयो दीर्घद्वेषानुतापयोः' इत्यमरः । निजो नित्य एव प्रतिघः । 'निजमात्मीयनित्ययोः' इति विश्वः । समुदाचचार समुद्दिदीपे । भीष्मवाक्यमन्येषां कोपोत्पादकमासीत् । रुक्मिणस्तु प्रागेवारूढकोपस्योद्दीपकमासीदित्यर्थः । अत्रानुशयस्य विशेषणगत्या कोपोद्दीपनहेतुत्वात्काव्यलिङ्गभेदः ॥ ९३ ॥

चरणेन हन्ति सुबलः स्म शिथिलितमहीध्रबन्धनाम् ।
तीरतरलजलराशिजलामवभुग्नभोगिफणमण्डलां भुवम् ॥ ९४॥

चरणेनेति । सुबलो नाम राजा महीं धारयन्तीति महीध्राः पर्वताः । कप्रकरणे "मूलविभुजादिभ्य उपसंख्यानम्" इति कप्रत्ययः । शिथिलितानि विश्लेषितानि महीध्राणां बन्धनानि सन्धयो यस्यास्ताम् । तीरेण तरलानि भूकम्पाच्चलितानि जलराशेरम्बुधेर्जलानि यस्यास्ताम् । अवभुग्नं कुटिलम् अतिभारादित्यर्थः । भोगिनां फणिनां फणमण्डलं फणसमूहो यस्यास्तां भुवं चरणेन हन्ति स्म जघान । "लट् स्मे" इति भूतार्थे लट् । अत्र पादाघातजन्यकम्पासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ९४ ॥

कुपितेषु राजसु तथापि रथचरणपाणिपूजया ।
चित्तकलितकलहागमनो मुदमाहुकिः सुहृदिवाधिकां दधौ ॥ ९५॥

कुपितेष्विति । रथचरणपाणेः चक्रपाणेः पूजया राजसु तथा कुपितेष्वपि चित्ते कलिन निश्चित कलहागमनं युद्धलाभो येन सः आहुकिर्नाम राजा शोभन हृदय यस्य स सुहृत मित्रमिव कृष्णपक्षपातीत्यर्थः । "सुहृद्दुर्हृदौ मित्रामित्रयोः" इति निपातः । अधिका मुद दधौ सन्तोष धत्तवान् । सुदुस्सहोऽपि कृष्णोत्कर्षः कलहकण्डूलत्वाहोराहुकेर्मोदहेतुरासीदित्यर्थः । उपमालङ्कारः ॥ ९९ ॥

गुरुकोपरुद्धपदमापदसितयवनस्य रौद्रताम् ।
व्यात्तमशितुमिव सर्वजगद्विकरालमास्यकुहरं विवक्षतः ॥९६॥

गुर्विति । विवक्षतः किमपि वक्तुमिच्छतः । वचे सन्नन्ताल्लटः शत्रादेशः । असितयवनस्य कालयवनस्य राज्ञः सम्बन्धि सर्वजगदशितुमत्तुमिव व्यात्त विवृतम् अत एव विकरालम् अतिविकृतम् । 'करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च' इति वैजयन्ती । गुरुणा कोपेन रुद्धपद प्रतिबद्धवचनम् हास्यकुहरं वक्त्र विवर रौद्रता भयङ्करतामापत् । अत्राशितुमिवेति फलोत्प्रेक्षा व्यादानक्रियानिमित्ता ॥ ९६ ॥

विवृतोरुबाहुपरिघेण सरभसपदं निधित्सता ।
हन्तुमखिलनृपतीन्वसुना वसने विलम्बिनि निजे विचस्खले ९७

विवृतेति । अखिलनृपतीन् हन्तु विवृत' प्रसारित' उरुबाहुरेव परिघ आयुधविशेषो येन तेन । 'परिघ' प्रतिघातेऽस्त्री' इति हेमः । सरभस सत्वर यत्पाद तन्निधित्सता निधातुमिच्छता । दधातेः सन्नन्ताल्लट शत्रादेश. । वसुना तन्नाम्ना राज्ञा विलम्बिनि उत्पातवेगात् विस्रंसिनि निजे वसने स्वाम्बरे विचस्खले स्खलितम् । तद्वधस्य दुर्निमित्तमिति भावः । भावे लिट् । अत्र वस्त्रस्रसनस्य विशेषणगत्या स्खलनहेतुत्वात्काव्यलिङ्ग तद्बाहुपरिघेति रूपकेण ससृज्यते ॥ ९७ ॥

इति तत्तदा विकृतरूपमभजत्तदभिन्नचेतसम् ।
मारबलमिव भयङ्करतां हरिबोधिसत्त्वमभि राजमण्डलम् ९८॥

इतीति । इतीत्थ तदा तस्मिन् काले विकृतरूप रोषभीषणाकार तद्राजमण्डल मारबलमिव मदनसैन्यमिव । 'मदनो मन्मथो मारः' इत्यमर. । अभिन्नचेतसमविकृतचित्त बोधिसत्त्वो बुद्ध' । 'बुद्धस्तु श्रीघनः शास्ता बोधिसत्त्वो विनायक' इति वैजयन्ती । स हरिरिवेत्युपमितसमासः । त हरिबोधिसत्त्वमभि तत्समक्षमित्यर्थ. । "अभिरभागे" इत्यभे. कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । भयकरोतीति भयङ्करः । "मेघार्तिभयेषु कृञः" इति खच्प्रत्यये मुमागमः । तस्य भावस्तत्तामभजत् । उपमालङ्कारः । तेन भगवतो बुद्धस्य समाधिभङ्गाय प्रवृत्तं मारबल यथा तेन भग्न तथा राजमण्डलमपि हरिणा भज्यत इति वस्तु व्यज्यते ॥ ९८ ॥

इत्यमरः । क्रुधं क्रोध विवरिष्यति । "वृतो व" इति दीर्घविकल्पः । इतः पर तन्नादि टण्डय एवेति भावः ॥ ३७ ॥

**निशमय्य तदूर्जितं शिनेर्वचनं नप्तुरनाप्तुमेनसाम् ।**
**पुनरुज्झितसाध्वसो द्विषामभिधत्त स्म वचो वचोहरः ॥ ३८ ॥**

**निशमय्येति** । एनसामनाप्तुः असंस्प्रष्टुः । सत्यवादिन इति भावः । आप्नोतेस्तृच् । शिने-र्नाम्नः कस्यचिद्यादवस्य नप्तुः पौत्रस्य सात्यकेरिति भावः । तदूर्जितम् अर्थयुक्त वचन निशमय्य श्रुत्वा । "ल्यपि लघुपूर्वात्" इति णेरयादेशः । पुनर्भूयोऽप्युज्झितसाध्वस त्यक्तभय यथा तथा द्विषा वचो हरतीति वचोहरो दूतः "हरतेरनुद्यमनेऽच्" वचोऽभिधत्ते स्म अभिहितवान् ॥ ३८ ॥

**विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः ।**
**यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ३९ ॥**

**विविनक्तीति** । बुद्धया दुर्विधो दरिद्र. बुद्धिशून्य इत्यर्थः । 'नि स्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतश्च सः' इत्यमरः । पृथग्जन. पामरजनः स्वयमेव परोपदेश विनैवात्महितं न विवि-नक्ति तद्युक्तमेवेति भावः । किन्तु परैरुदीरितम् उपदिष्टमप्यदो हितं न विजानातीति यत् तन्मह-दद्भुतम् । अतः सूक्त न गृह्णातीति भाव ॥ ३९ ॥

अथ किमद्भुतं मूर्खेष्वित्याशङ्क्याह—

**विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथ वा बुधाः ।**
**न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ४० ॥**

**विदुरिति** । बुधाः बुद्धिमन्तः एष्यन्तमागामिनम् अपायमनर्थमात्मना स्वयमेव प्रकृत्यादि-भ्य उपसङ्ख्यानात्तृतीया । विदुर्विदन्ति । "विदो लटो वा" इति विकल्पाज्झेर्जुसादेश. । अथ वा परतोऽन्यस्मादाप्तात् श्रद्दधते विश्वसन्ति । आप्तोक्त गृह्णन्तीत्यर्थः । "श्रदन्तरोरुपसङ्ख्यानम्" इति उपसर्गसङ्ख्यानाद्धातोः प्राक् प्रयोग । अल्पधीर्मूढस्तु अनुभवादृते स्वानुभव विना । "अन्यारादितरर्ते" इत्यादिना पञ्चमी । न प्रमिमीते न जानाति अधमस्तु स्वानुभवैकप्रमाण इत्यर्थः । अधमस्त्वमिति भावः । अत एवाप्रस्तुतसामान्यात्प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ ४० ॥

अतः प्रस्तुते किमायात तत्राह—

**कुशलं खलु तुभ्यमेव तद्वचनं कृष्ण यदभ्यधामहम् ।**
**उपदेशपराः परेष्वपि स्वविनाशाभिमुखेषु साधवः ॥ ४१ ॥**

**कुशलमिति** । हे कृष्ण ! अह यद्वचनमभ्यधाम् अभिधायेत्यादिना राज्ञा सन्धिर्गुणाय विग्रह-स्त्वनर्थायेत्येमवोचमित्यर्थः । तद्वचनं तुभ्यमेव कुशल हितम् । "चतुर्थी चाशिष्यायुष्यमद्रभद्रकु शलसुखार्थहितैः" इति चतुर्थी । नन्वहितेषु हितोपदेशात्प्रत्ययः कथमित्याशङ्कामर्थान्तरन्यासेन

परिहरति । साधवः सुजना स्वविनाशाभिमुखेषु प्रबलविरोधादात्मविनाशहेतुभूतकर्मप्रवृत्तेष्वित्यर्थः । परेषु शत्रुष्वपि उपदेशपराः उपदिशन्त्येव कृपालुतयेति भावः ॥ ४१ ॥

तथापि अर्थद्वये त्वद्वाक्ये किं ग्राह्यं तत्राह—

**उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते ।**
**प्रविभज्य पृथङ्मनीषया स्वगुणं यत्किल तत्करिष्यसि ४२॥**

**उभयमिति** । मया सान्त्वं सामादि अथेति पक्षान्तरे इतरदसान्त्वं विग्रहश्चेत्यर्थः । युगपदुदितं त्वं तु मनीषया बुद्ध्या पृथक् भेदेन प्रविभज्य विविच्य यत्स्वगुणं तत्र द्वयेऽपि त्वरया यच्छुभोदर्कं तत्करिष्यसि किल खलु 'हसः क्षीरमिवाम्भसि' इति भावः ॥ ४२ ॥

अथ वा सुजनत्वभावात् कुतोऽपि हितोपदेशो मूर्खेषु निष्फल इत्याह—

**अथ वाभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् ।**
**रविरागिषु शीतरोचिषः करजालं कमलाकरेष्विव ॥४३॥**

**अथ वेति** । अथ वा अभिनिविष्टबुद्धिषु दुराग्रहग्रस्तचित्तेषु विषये सुभाषितं हितोपदेशवचनं रविरागिषु कमलाकरेषु शीतरोचिषः शीतभानोः करजालमिव व्यर्थकतां निरर्थकतां व्रजति । तस्मादलमेव त्वयि हितोपदेशचिन्तयेति भावः ॥ ४३ ॥

नन्वभिनिविष्टोऽपि सुजनैर्बलादपि हिते प्रवर्त्तयितव्य इत्याशङ्क्य न शक्यत इत्याह—

**अनपेक्ष्य गुणागुणौ जनः स्वरुचिं निश्चयतोऽनुधावति ।**
**अपहाय महीशमार्चिचत्सदसि त्वां ननु भीमपूर्वजः ॥४४॥**

**अनपेक्ष्येति** । जनस्त्वादृशः पृथग्जनः । गुणागुणौ गुणदोषौ । "विप्रतिषिद्धञ्चानधिकरणवाचि" इति विभाषया न द्वन्द्वैकवद्भावः । अनपेक्ष्याविमृश्य निश्चयतः स्वनिश्चयादेव स्वरुचिं स्वेच्छामनुधावति, न तु स्वहितमनुसरतीत्यर्थः । तत्र पार्थ एव प्रमाणमित्याह । भीमपूर्वजः भीमाग्रजो युधिष्ठिरः । मूर्खाग्रणीरिति भावः । महीशं चेदिपमपहाय सदसि त्वामार्चिचत् आर्चितवान् । खलु । अर्चयतेर्णौ चङि "अजादेर्द्वितीयस्य" "न न्द्राः संयोगादयः" इति रेफवर्जितस्यैकाचो द्विर्भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४४ ॥

पार्थानादरादेव राज्ञो लाघवं ज्ञेयमित्याशङ्क्य परिहरति—

**त्वयि भक्तिमता न सत्कृतः कुरुराजा गुरुरेव चेदिपः ।**
**प्रियमांसमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः॥४५॥**

**त्वयीति** । हे कृष्ण ! त्वयि भक्तिमता प्रेमवता कुरूणा राट् "सत्सूद्विष" इत्यादिना क्विप् । तेन कुरुराजा कुरुराजेन पार्थेन न सत्कृतो नार्चितश्चेदिपो गुरुरेव पूज्य एव । तथा हि प्रियं मांसं यस्य तेन मांसगृध्नुना मृगाधिपेन सिंहेनोज्झितस्त्यक्तः । करिकुम्भजो

मणिर्मुक्तामणिरवद्यो गर्ह्यः किम्, अनवद्य एवेत्यर्थः । मूर्खानादरान्न महता किञ्चिल्लाघवमि-त्यर्थ. । 'कुपूयकुत्सिताऽवद्यखेटगर्ह्याणकाः समाः' इत्यमरः । "अवद्यपण्य" इत्यादिना निपातः । दृष्टान्तालङ्कारः ॥ ४५ ॥

विदुषा तु पूज्य एव चैद्य इत्याशयेनाह–

क्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरधः ।
शिरसौघमधत्त शङ्करः सुरसिन्धोर्मधुजित्तमङ्घ्रिणा ॥ ४६ ॥

**क्रियत इति** । धवलो निर्म्मलो धवलैर्निर्मलैरेव उच्चकैरुन्नतः क्रियते खलु । सितेतरैर्म-लिनैरधः क्रियते । तथा हि शङ्करः शिव. सुरसिन्धोरोघ मन्दाकिनीपूर शिरसा अधत्त उभयो-र्नैर्म्मल्यादिति भावः । मधुजित् । मधुशत्रुर्विष्णुस्तु तमोघम् । अङ्घ्रिणा अधत्त स्वय मलिन-त्वादिति भावः । अतो विशेषविदुषा राजा पूज्य एवेति भावः । विशेषेण सामान्यसमर्थन-रूपोऽर्थान्तरन्यासः ॥ ४६ ॥

किञ्च- यथा पार्थानादराद्राज्ञो न किञ्चिल्लाघव तथा तदादराच्च न किञ्चिद्गौरव-मित्याह–

अबुधैः कृतमानसंविदस्तव पार्थैः कुत एव योग्यता ।
सहसि प्लवगैरुपासितं न हि गुञ्जाफलमेति सोष्मताम् ॥४७॥

**अबुधैरिति** । अबुधैरज्ञै. पार्थै. कृते मानसंविदौ पूजातोषणे यस्य तस्य । 'संवित् क्रिया प्रतिज्ञाया सकेताचारनामसु । सम्भाषणे तोषणे च' इति विश्व । तव योग्यता कुत एव । न कुतोऽपीत्यर्थः । तथा हि सहसि मार्गशीर्षे । 'मार्गशीर्षे सहा मार्गः' इत्यमरः । प्लवगैरुपासित सेवित गुञ्जाफलं काककङ्गानि । जातावेकवचनम् । 'काकचिञ्चीगुञ्जे तु कृष्णला' इत्यमरः । सोष्मतामूष्मता नैति हि । न हि पुसा मूढपरिग्रहापरिग्रहौ गौरवागौर-वयोः प्रयोजकावित्यर्थः । अत्र कृष्णगुञ्जाफलयोर्विशषयोरेव वाक्यभेदेन प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥ ४७ ॥

यदपूरीत्यादिना यत्सात्यकिना शतापराधक्षमत्वमुक्त तत्रोत्तरमाह–

अपराधशतक्षमं नृपः क्षमयात्येति भवन्तमेकया ।
हृतवत्यपि भीष्मकात्मजां त्वयि चक्षाम समर्थ एव यत् ॥४८॥

**अपराधेति** । नृपश्चैद्, अपराधस्य शतक्षम राज्ञः शतापराधसहिष्णु भवन्तम् एकया क्षमया एकापराधसहनेनेत्यर्थः । अत्येति अतिक्रामति । अपराधकोटीनामपि तद्देशेनापि साम्या-सम्भवादिति भावः । तामेव क्षमां दर्शयति । त्वयि भीष्मकात्मजा रुक्मिणीं हृतवत्यपि समर्थः प्रतीकारक्षम एव सन्नपि चक्षाम क्षाम्यति स्मेति यत् तया क्षमयेत्यर्थः ॥ ४८ ॥

'राक्षस' क्षत्रियस्यैवम्' इति स्मरणात् राक्षसोद्वाहस्य क्षात्रधर्म्मत्वाद्रुक्मिणीहरणे कोऽस्माकमपराधः राज्ञो वा कात्र क्षमेत्याकाङ्क्षायामाह—

गुरुभिः प्रतिपादितां वधूमपहृत्य स्वजनस्य भूपतेः ।
जनकोऽसि जनार्दन स्फुटं हतधर्म्मार्थतया मनोभुवः ॥ ४९ ॥

**गुरुभिरिति** । हे जनार्दन ! गुरुभिः पित्रादिभिः प्रतिपादिता राज्ञे दत्ताम् अत एव स्वजनस्य बन्धोर्भूपतेर्महाराजस्य वधू जायामपहृत्य हतौ धर्म्मार्थौ येन तत्तया हतधर्म्मार्थतया हेतुना स्फुटं मनोभुवः कामस्य जनकोऽसि धर्मार्थित्वाभावेन काममात्रनिष्ठोऽसीत्यर्थः । नाय राक्षसो विवाहः । 'हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदन्तीं तथा । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते' इति कन्याहरणस्य राक्षसत्वलक्षणात् । अत्र तु परदारापहरणे बन्धुद्रोहो राजद्रोहश्चेत्यहो पापिष्ठस्य कामान्धस्य ते परमसाहसिकत्वमिति भावः ॥ ४९ ॥

सत्यमीदृगेवाह ततः किमित्याशङ्क्य किमन्यद्वधादित्याह—

अनिरूपितरूपसम्पदस्तमसो वान्यभृतच्छदच्छवेः ।
तव सर्व्वगतस्य सम्प्रति क्षितिपः क्षिप्नुरभीशुमानिव ॥५०॥

**अनिरूपितेति** । अनिरूपितरूपसम्पदः शैलूषवद्बहुरूपधारित्वादज्ञातरूपविशेषस्यावाङ्मनसगोचररूपस्यैवत्येति च गम्यते । अन्यत्र आरोपितकृष्णरूप तमः । तेजो विशेषाभावस्तम इति च मतद्वयेऽपि प्रमाणानवधृतरूपसम्पद इत्यर्थः । अन्यभृतच्छदच्छवेः कोकिलपक्षकान्तेस्तव तमसो वा तिमिरस्येव । 'वा स्याद्विकल्पोपमयोः' इति विश्वः । सर्व्वगतस्य क्षितिपश्चेदिपोऽभीशुमानंशुमानिव सम्प्रतीदानीमेव क्षिप्नुः क्षेप्ता आहन्तेत्यर्थः । शास्तासौ दुरात्मनामिति भावः. "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुप्रत्ययः । "न लोका" इत्यादिना कृद्योगे षष्ठ्या निषेधे तवेति शेषे षष्ठी । पर्यवसानात्तु कर्म्मत्वलाभः । 'अभीषु' प्रग्रहे रश्मौ' इत्यमरविश्वप्रकाशादयः सर्व्वेऽप्यभिधानिका मूर्द्धन्यान्तेषु पेठुः । लोकवेदयोस्तालव्यान्तो दृश्यते । अभीशूनां महिमानमित्यादि ॥ ५० ॥

तर्ह्यस्मदर्थे त्वया राजा सान्त्वयितव्य इत्याशङ्क्य नेत्याह—

क्षुभितस्य महीभृतस्त्वयि प्रशमोपन्यसनं वृथा मम ।
प्रलयोल्लसितस्य वारिधेः परिवाहो जगतः करोति किम् ॥५१॥

**क्षुभितस्येति** । त्वयि विषये क्षुभितस्यातिक्रुद्धस्य महीभृतो राज्ञो मम प्रशमोपन्यसनं शान्तोपदेशो वृथा निष्फलः । तथा हि प्रलयोल्लसितस्य कल्पान्तक्षुभितस्य वारिधेः जगतः परिवाहो जगत्कृतो जलनिर्गममार्गः किङ्करोति न किञ्चिदित्यर्थः । दृष्टान्तालङ्कारः ॥ ५१ ॥

तर्हि सन्धित्सुना राज्ञा किमर्थं भवानिह प्रहितस्तत्राह—

**प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता ।**
**न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥९२॥**

**प्रहित इति** । प्रधनाय युद्धाय माधवान् यादवानाकारयितुमाहातुम् । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् । हूतिराकारणाह्वानम्' इति चामरः । महीभृता राज्ञाहं प्रहितः प्रेरितः ननु रन्ध्रे हन्तव्याः शत्रवो नाह्वातव्या इत्यत्राह । नेति । महौजसो महावीराः परेष्वरिषु मलिम्लुचाः पाटच्चरा इव । 'पाटच्चरमलिम्लुचाः' इत्यमरः । छलात् कपटात् नापकुर्वन्ति । तस्मादाह्वानं कर्तव्यमिति वाक्यार्थहेतुकं काव्यलिङ्गमुपमालङ्कारसंकीर्णम् ॥ ९२ ॥

तदेवागमप्रयोजनमुक्त्वा हितमुपदिशति—

**तदयं समुपैति भूपतिः पयसां पूर इवानिवारितः ।**
**अविलम्बितमेधि वेतसस्तरुवन्माधव मा स्म भज्यथाः ॥९३॥**

**तदयमिति** । तत्तस्माद्युद्धार्थित्वादयं भूपतिश्चैद्यः पयसां पूरः प्रवाह इवानिवारितः समुपैति । हे माधव ! अविलम्बितं शीघ्रं वेतसः एधि भव तद्वन्नम्रम् आत्मानं रक्षेत्यर्थः । अस्तेर्लोट् सिपि हेर्धि', "घ्वसोरेद्धावभ्यासलोपश्च" इति एत्वम् "धि च" इति सकारलोपः । माधव ! त्वं तरुवत् महावृक्षवत् मा स्म भज्यथाः मा भज्यस्व । अतः आत्मानं न विनाशयेत्यर्थः । भजेः कर्मण्याशिषि लिङः ( अर्थे ) "स्मोत्तरे लङ् च" इति लङ् "न माङ्योगे" इत्यडभावः । उपमालङ्कारः ॥ ९३ ॥

ननु राज्ञि शिशुपाले यूनामफलमित्याशङ्क्याह—

**परिपाति स केवलं शिशूनिति तन्नामनि मा स्म विश्वसीः ।**
**तरुणानपि रक्षति क्षमी स शरण्यः शरणागतान्द्विषः ॥ ९४ ॥**

**परिपातीति** । स शिशुपालः केवलमित्यवधारणे क्रियाविशेषणम् । शिशून् परि पातीति शिशूनेव पालयतीति तन्नामनि तस्य शिशुपालसंज्ञायां मा स्म विश्वसीः मा विश्वासं कुर्वित्यर्थः । श्वसेः "स्मोत्तरे लङ् च" इति लङि "रुदश्च पञ्चभ्यः" इति ईडागमः, चकाराल्लुङि वा तत्र "अस्ति सिचोऽपृक्ते" इति ईडागमः, "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इति वृद्धिप्रतिषेधः, "न माङ्योगे" इत्यडभावस्तूभयत्र । किन्तु क्षमी क्षमावान् । व्रीह्यादित्वाद् इनिः । शरणे रक्षणे साधुः शरण्यः रक्षणक्षमः । "तत्र साधुः" इति यत्प्रत्ययः । स शिशुपालः शरणं रक्षितारमागतान् प्राप्तान् । 'शरणं गृहरक्षित्रोः, शरणं रक्षणे गृहे' इत्युभयत्रापि विश्वः । द्विषः शत्रून् तरुणान् यूनोऽपि रक्षति अतो निःशङ्कं शरणमागच्छेत्यर्थः ॥ ९४ ॥

ननु वयं द्रोग्धारः सोऽप्यतिक्षुभितः किल कथं नः पालयेदित्याशङ्क्याह—

**न विदध्युरशङ्कमप्रियं महतः स्वार्थपराः परे कथम् ।**
**भजते कुपितोऽप्युदारधीरनुनीतिं नतिमात्रकेण सः ॥ ९५ ॥**

**नेति** । स्वार्थपराः स्वार्थनिष्ठाः परे शत्रवो महतोऽधिकस्य कथम् अप्रियम् अपकारम् अशङ्कं यथा तथा न विदध्युः कुर्य्युरेव कार्य्यवशादित्यर्थः । किन्तु उदारधीर्महामतिः । ' उदारो दातृमहतोः ' इत्यमरः । स राजा कुपितोऽपि नतिमात्रकेण प्रणतिमात्रेण अनुनीतिम् अनुनयं भजते अनुग्रहीष्यतीत्यर्थः । 'प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम्' इति भावः ॥ ९५ ॥

किं बहुना तवाय हितोपदेशसंग्रह इत्याशङ्कयाह–

**हितमप्रियमिच्छसि श्रुतं यदि सन्धत्स्व पुरा न नश्यसि ।**
**अनृतैरथ तुष्यसि प्रियैर्जयताज्जीव भवावनीश्वरः ॥ ९६ ॥**

**हितमिति** । श्रुतम् अप्रियं हितमिच्छसि यदि अप्रियं हितं श्रुतमास्वादाकर्णितं ग्रहीतुमिच्छसि चेदित्यर्थः । सन्धत्स्व राज्ञा सन्धेहि पुरा न नश्यसि अन्यथा विनङ्क्ष्यसीत्यर्थः । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । अथेति पक्षान्तरे । अनृतैरसत्यैः प्रियैस्तुष्यसि यदि जयतात् जयतु । " तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् " इति तोस्तातङादेशः । जीव अवनीश्वरः सार्व्वभौमो भव । ततः किमेभिः प्रियालापैः अप्रियमपि प्रियमेव गृहाणेति भावः ॥ ९६ ॥

ननु कंसाद्यनेकविजयी कृष्णः कथं विजेष्यते राज्ञेत्याशङ्कयाह–

**प्रतिपक्षजिदप्यसंशयं युधि चैद्येन विजेष्यते भवान् ।**
**ग्रसते हि तमोऽपहं मुहुर्ननु राहाह्वमहर्पतिं तमः ॥ ९७ ॥**

**प्रतिपक्षेति** । प्रतिपक्षजिदनेकारिहन्तापि भवान् असंशयं संशयो नास्ति । अर्थाभावेऽव्ययीभावः । युधि संग्रामे चैद्येन शिशुपालेन विजेष्यते जयतेः कर्म्मणि लृट् । शेषे प्रथमः । तमांस्यपहन्तीति तमोऽपहं सर्वतमोऽपहारिणम् । "अपे क्लेशतमसोः" इति हन्तेर्डप्रत्ययः । अह्नां पतिम् अहर्पतिं सूर्य्यम् । " अहरादीनां पत्यादिषूपसंख्यानम् " इति वैकल्पिकोरेफादेशः राहाह्वं राह्वाख्यं तमः । ' आख्याह्वे अभिधानं च ' इत्यमरः । मुहुर्ग्रसते ननु गिलति हि । अत्र हरिसूर्ययोः राहुचैद्ययोश्च वाक्यभेदेन प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥ ९७ ॥

किं च न भवानेक एव विजेष्यते किन्तु सर्वैर्यादवैः सहेत्याह–

**अचिराज्जितमीनकेतनो विलसन्वृष्णिगणैर्नमस्कृतः ।**
**क्षितिपः क्षयितोद्धतान्धको हरलीलां स विडम्बयिष्यति ॥ ९८ ॥**

**अचिरादिति** । स क्षितिपः राजा । अचिरादविलम्बितमेव जितो मीनकेतनः कार्ष्णिः प्रद्युम्नः स्मरश्च येन सः । वृष्णयो यादवभेदास्तेषां गणैरोघैर्नमस्कृतो भीत्या प्रणतः सन् । अत एव विलसन् दीप्यमानः । अन्यत्र वृष्णीति पदच्छेदः वृष्णि उक्षाणि विलसन् वृषारूढ इत्यर्थः । गणैः प्रमथैर्नमस्कृतः । ' गणाः प्रमथसङ्घौघाः ' इति 'वृषा महेन्द्रे वृषभे' इति च वैजयन्ती ।

क्षयिता नाशिता उद्धता दृप्ता अन्धका यादवभेदाः । अन्यत्रान्धकोऽसुरो येन सः । हरलीलां शम्भुविभ्रमं विडम्बयिष्यत्यनुकरिष्यति अत्र हरलीलामिति सादृश्याक्षेपान्निदर्शनाश्लेषसङ्कीर्णा ५८॥

देवासुरैरप्यजय्या यादवा कथं राज्ञा जेष्यन्ते तत्राह—

**निहतोन्मददुष्टकुञ्जराद्दधतो भूरि यशः क्रमार्जितम् ।**
**न बिभेति रणे हरेरपि क्षितिपः का गणनास्य वृष्णिषु ॥ ५९ ॥**

**निहतेति** । क्षितिपश्चेदिपो निहत उन्मदो दुष्टः कुञ्जरः कुवलयापीडाख्यो येन तस्मात् । अन्यत्र हतानेकमत्तमातङ्गात् । अत एव क्रमार्जितं भूरि यशः दधतः हरेः कृष्णात् सिंहात् चेति ध्वनिः । रणे न बिभेति । अस्यैतादृशश्चैद्यस्य वृष्णिषु यादवेषु मेषेषु च । 'वृष्णिस्तु यादवे मेषे' इति विश्वः । का गणना कृष्णमगणयन्तो यादवाः के इत्यर्थः । अत्र कुञ्जरघातिनः सिंहस्य का कथा मेषेष्वित्यर्थान्तरप्रतीतिर्ध्वनिरेव, न श्लेषः । हरेर्वृष्णिविशेषस्यापि प्रश्लिष्टत्वात्प्रकृताप्रकृतश्लेषे तदनङ्गीकारादित्युक्तं प्राक् ॥ ५९ ॥

हरेरपि न बिभेति इत्युक्तं तदेव प्रभावयितुं तस्य पराक्रमानासर्गेनमात्रैर्वर्णयति—

**न तदद्भुतमस्य यन्मुखं युधि पश्यन्ति भिया न शत्रवः ।**
**द्रवतां ननु पृष्ठमीक्षते वदनं सोऽपि न जातु विद्विषाम् ॥ ६० ॥**

**नेति** । युधि शत्रवो भियाऽस्य मुखं न पश्यन्तीति यत्तन्नाद्भुतम् । कुतः । सोऽपि न ईक्षते ननु खलु द्रवतां भयात्पलायमानानां विद्विषां पृष्ठं कायपार्श्वाङ्गम् ईक्षते । जातु कदाचित् वदनं न ईक्षते ननु खलु । द्वयोरन्यतरमुखेऽप्यन्योन्यस्य मुखविलोकनासम्भवात्स्वयं विमुखानां विद्विषाम् अभिमुखस्याप्यस्य मुखादर्शनादद्भुतमित्यर्थः । अत एव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ६० ॥

**प्रतनूल्लसिताचिरद्युतः शरदं प्राप्य विखण्डितायुधाः ।**
**दधतेऽरिभिरस्य तुल्यतां यदि नासारभृतः पयोभृतः ॥ ६१ ॥**

**प्रतन्विति** । शरदम् ऋतुं प्राप्य विखण्डितायुधाः खण्डितेन्द्रचापाः अन्यत्र शरान् ददातीति शरदस्तं शरदं शरदापणं प्राप्य खण्डितशस्त्राः प्रतनूल्लसिताचिरद्युतोऽल्पस्फुरितविद्युतः । अन्यत्र प्रतनूल्लसिताः स्वल्पोल्लसितास्ता एवाचिरद्युतोऽस्थिरद्युतः । पयोभृतो मेघा आसारभृतः वृष्टिमन्तः न यदि । शरदि वृष्टिशून्यत्वादिति भावः । सुहृद्बलशून्या इत्यर्थः । 'आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले' इति वैजयन्ती । अस्यारिभिस्तुल्यतां दधते । अत्र पयोभृतामुपमानानामुपमेयभावोक्तेः प्रतीपालङ्कारः, तेषामासारसम्बन्धेऽपि तदभावनया तदसम्बन्धोक्तेरतिशयोक्तिभेदश्चेति सङ्करः ॥ ६१ ॥

विशेषकमाह—

**मलिनं रणरेणुभिर्मुहुर्द्विषतां क्षालितमङ्गनाश्रुभिः ।**
**नृपमौलिमरीचिवर्णकैः खलु यस्याङ्घ्रियुगं विलिप्यते ॥ ६२ ॥**

मलिनमित्यादि। मुहुरसकृत्। रणरेणुभिर्मलिनम् अत एव द्विषतामङ्गनाश्रुभिः क्षालितम्। नाद्यारीन् रणान्निवर्त्तिन इति भावः। यस्याङ्घ्रियुग चरणयुगलम्। अथ रेणुक्षालितानां नृपाणां प्रणतानां राज्ञां मौलिमरीचयो मकुटमणिरश्मयस्तैरेव वर्णकैर्विलेपनैश्चन्दनैः 'चन्दने चापि वर्णकम्' इति विश्वः। विलिप्यते विशेष्यते अत्राङ्घ्रियुगस्य विशेषणमहिम्ना स्नातानुलिप्तपुरुषसाम्यप्रतीतेः समासोक्तिः॥ ६२॥

**समराय निकामकर्कशं क्षणमाकृष्टमुपैति यस्य च।**
**धनुषा सममाशु विद्विषां कुलमाशङ्कितभङ्गमानतिम्॥ ६३॥**

समरायेति। किञ्चेति चार्थः। निकामकर्कशमतिकठिनं दुर्द्धर्षमित्यर्थः। समराय सम्प्रहाराय कृष्टमाकृष्टमावर्जितं च क्षणम् आशङ्कितभङ्गं मनसोत्प्रेक्षितस्वपराजयम्। अन्यत्रातिकर्षणात्सम्भावितदलनं यस्य विद्विषां कुलम् आशु धनुषा सममानतिं नम्रतामुपैति। अत्र धनुर्नमनकार्यस्य द्विषन्नमनस्य तत्सहभावोक्तेः कार्यकारणयोः पौर्वापर्यविपर्ययनिमित्तरूपातिशयोक्तिमूलामहोक्तिरलङ्कारः॥ ६३॥

**तुहिनांशुममुं सुहृज्जनाः कलयन्त्युष्णकरं विरोधिनः।**
**कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगं यथापरे॥ ६४॥**

तुहिनेति। अमुमवंविधं चैद्यं सुहृज्जनाः तुहिनांशुं कलयन्ति आह्लादकत्वाच्चन्द्रं मन्यन्ते। विरोधिनः उष्णकरं तपनं कलयन्ति। एकस्यानेकप्रतीतिमुपमिमीते। कृतिभिरिति। कृतिभिः कुशलैरैन्द्रजालिकादिभिः कृतदृष्टिविभ्रमाः जनितदृष्टिविपर्यया एके नरा यथा स्रजं मालां कलयन्ति अपरे तु भुजगं कलयन्ति एवमेव रज्ज्वादिकमिति शेषः। उपमालङ्कारः। स चैकस्य निमित्तवशाद्गृहीतेनेदन्तादस्तानेकधोल्लिखनात्मकेनोल्लेखेन सङ्कीर्य्यते॥ ६४॥

**दधतोऽसुलभक्षयागमास्तनुमेकान्तरतामभानुषीम्।**
**भुवि सम्प्रति न प्रतिष्ठिताः सदृशा यस्य सुरैररातयः॥ ६५॥**

दधत इति। असुलभक्षयागमाः दुर्लभगृहप्राप्तयः। अन्यत्रामरत्वात् दुर्लभनाशयोगाः। 'निलयापचयौ क्षयौ' इत्यमरः। एकान्तरतां भयाद्विजनस्थाने निरताम् अमानुषीं कार्श्यमालिन्यादिना पिशाचादिवत्प्रतीयमानाम्। अन्यत्रैकान्तरतां नियतसुरतां नित्यभोगाममानुषीं दिव्यां तनुं दधतो दधानाः भुवि सम्प्रति क्वचन न प्रतिष्ठिताः राज्यभ्रंशात् क्वापि स्थितिमप्राप्ताः। अन्यत्र च भुवं न स्पृशन्तीत्यर्थः। देवत्वात्। यस्यारातयः सुरैः सदृशाः। अत्राप्यमुमिति पूर्वेण संबन्धः। श्लिष्टविशेषणेयमुपमा। श्लेष एवेत्यन्ये॥ ६५॥

**अतिविस्मयनीयकर्म्मणो नृपतेर्यस्य विरोधि किञ्चन।**
**यदभुक्तनयो नयत्यसावहितानां कुलमक्षयं क्षयम्॥ ६६॥**

**अतीति** । अतिविस्मयनीयकर्म्मणः अत्यन्तविस्मितपौरुषस्य । स्मयतेरनीयर्प्रत्ययः । यस्य नृपतेश्चैद्यस्य विरोधि चेष्टितं द्वेपरूपं न किञ्चिदस्तीत्यर्थः । यस्मादमुक्तनयोऽत्यक्तनीतिमार्गोऽसौ अक्षमयविनाशि पूर्वं केनापि क्षयं न नीतमित्यर्थः । अहितानां कुलं शत्रुजातं क्षयं नाशं नयति नीतिपौरुषाभ्यां द्विपं निर्मूलयितुरस्य को विरोधिवर्त्तेति भावः । अक्षयमपि क्षयं नयतीति विरोधस्य नेतृभेदेन परिहाराद्विरोधाभासोऽलङ्कारः ॥ ६६ ॥

**चलितोर्ध्वकबन्धसम्पदो मकरव्यूहनिरुद्धवर्त्मनः ।**
**अतरत्स्वभुजौजसा मुहुर्महतः सङ्गरसागरानसौ ॥ ६७ ॥**

**चलितेति** । असौ चैद्यश्चलिताः प्रवृत्ता ऊर्ध्वा उत्थिताः कवन्धसम्पदः शिरोहीनकलेवरसम्पद एव कवन्धसम्पद उदकसमृद्धयो येषु तान् । श्लिष्टरूपकम् । 'कवन्धं सलिले प्रोक्तमपमूर्द्धकलेवरे' इति वैजयन्ती । मकरव्यूहाः मकराकारसैन्यविन्यासा. त एव मकरव्यूहा इति श्लिष्टरूपकम् । ' व्यूहौ समूहविन्यासौ' इति वैजयन्ती । निरुद्धवर्त्मनो निरुद्धप्रवेशमार्ग्गान् । अत एव महतो दुस्तरान् सङ्गरसागरान् समरसमुद्रान् स्वभुजौजसा निजभुजबलेनैव मुहुरसकृत् अतरत् । भुजेनाब्धितरणमदृष्टचरमत्यद्भुतमिति भावः । अत्र कवन्धा एव कवन्धाः मकरव्यूहा एव कच्छपादिव्यूहा इति श्लिष्टरूपकस्य सङ्गरेषु सागररूपणहेतुत्वात्केवलं श्लिष्टपरम्परितरूपकम् ॥ ६७॥

**न चिकीर्षति यः स्मयोद्धतो नृपतिस्तच्चरणोपगं शिरः ।**
**चरणं कुरुते गतस्मयः स्वमसावेव तदीयमूर्द्धनि ॥ ६८ ॥**

**नेति** । स्मयोद्धतो गर्वेण दुर्विनीतो नृपतिः शिरो निजोत्तमाङ्गं तस्य शिशुपालस्य चरणमुपगच्छतीति तच्चरणोपगं तत्पादगतं यो न चिकीर्षति कर्त्तुं नेच्छति तदीये तस्य नृपतेः सम्बन्धिनि मूर्द्धनि गतस्मयो विगर्वोऽसौ शिशुपाल एव स्वं चरणं कुरुते निधत्त इत्यर्थः । अनम्रान् सद्यो नयमति नम्रानवतीति तात्पर्य्यम् ॥ ६८ ॥

**स्वभुजद्वयकेवलायुधश्चतुरङ्गामपहाय वाहिनीम् ।**
**बहुशः सह शक्रदन्तिना स चतुर्दन्तमगच्छदाहवम् ॥ ६९ ॥**

**स्वेति** । स चैद्यश्चत्वार्य्यङ्गानि हस्त्यादीनि यस्यास्तां चतुरङ्गां वाहिनीं सेनामपहाय स्वभुजद्वयं केवलमेकमायुधं यस्य सः सन् शक्रदन्तिना ऐरावतेन सह चत्वारो दन्ता यस्मिन् तं चतुर्दन्तम् आहवं रणं बहुशोऽगच्छत् । चतुर्दन्तेन शक्रदन्तिना दोर्द्वयेन योद्धुं चैद्यं विना कोऽन्यः शक्त इति भावः । दन्तिनोराहवश्चतुर्दन्त इत्युक्तं न तु मनुष्यदन्तिनोरिति विरोधः । स च शक्रदन्तिनेति परिहृतः तस्य चतुर्दन्तत्वादिति विरोधाभासः ॥ ६९ ॥

**अविचालितचारुचक्रयोरनुरागादुपगूढयोः श्रिया ।**
**युवयोरिदमेव भिद्यते यदुपेन्द्रस्त्वमतीन्द्र एव सः ॥ ७० ॥**

**अविचालितेति** । अविचालितं परैरपर्य्यासितम् अतएव चारु शोभनं चक्रं सुदर्शन राष्ट्रं च ययोस्तयोः । 'चक्रं राष्ट्ररथाङ्गयोः' इति विश्वः । श्रिया कमलया सम्पदा चानुरागादुपगूढयोराश्लिष्टयोर्द्वयोस्तत्र तस्य च । "त्यदादीनि. सर्वैर्नित्यम्" इत्येकशेषः । इदमेव भिद्यते विशेष्यते । कर्म्मकर्त्तरि लट् । किं तदित्यत्राह । त्वमिन्द्रमुपगतः उपेन्द्रः इन्द्रानुजः । तदनुचर इति यावत् । स तु इन्द्रमतिक्रान्तः अतीन्द्रः इन्द्रविजयीति यावत् इत्येव भिद्यते इति सम्बन्धः । इन्द्रकिङ्करेन्द्रजयिनोः का साम्यकथेति भावः । अत्रोपमानात् कृष्णादुपमेयस्य वैद्यस्याधिक्याद्वेदमाधान्यसाधर्म्योक्तिर्व्यतिरेकालङ्कारः ॥ ७० ॥

किञ्च त्वत्तोऽप्यधिको राजेत्यवाच्योऽयमर्थः यदीश्वरादप्यधिक इत्याह—

**भृतभूतिरहीनभोगभाग्विजितानेकपुरोऽपि विद्विषाम् ।**
**रुचिमिन्दुदले करोत्यजः परिपूर्णेन्दुरुचिर्महीपतिः ॥ ७१ ॥**

**भृतेति** । भृता भूतिर्भस्म सम्पच्च येन स भृतभूतिः । 'भूतिर्भस्मनि सम्पदि' इत्यमरः । अहीना भोगिनामिनोऽहीनः शेषः तस्य भोगं कायं भजतीत्यहीनभोगभाक् शेषभूषण इत्यर्थः । अन्यत्र अहीनमन्यूनं भोगं सुखानुभवं भजतीति अहीनभोगभाक् ' भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । विद्विषां विजितानेकपुरः विजितानेकविद्विट्पुर इत्यर्थः । एकत्र त्रिपुरविजयादन्यत्र शत्रुनगरविजयाच्चेति भावः । सापेक्षत्वेऽपि गमकत्वात्समासः । एवम्भूतोऽप्यजो हरः । ' अजा विष्णुहरच्छागाः' इत्यमरः । इन्दुदले चन्द्रखण्डे विषये रुचिमभिलाषं करोति । इन्दुदले या रुचिः शोभा तां करोति दधातीति चार्थः । सामान्यशब्दे विशेषलक्षणा । महीपतिस्तु परिपूर्णेन्दो रुचिरिव रुचिः शोभा यस्य सः तस्मिन् रुचिरभिलाषो यस्येति च परिपूर्णेन्दुरुचिः । ' रुचिर्मयूखे शोभायामभिषङ्गाभिलाषयोः' इति विश्वः । अत्र हरः खण्डेन्दुरुचिः राजा पूर्णेन्दुरुचिरिति व्यतिरेकः । स च रुच्योरभेदाश्रयादिति श्लेषमूलाभेदातिशयोक्त्या सङ्कीर्णः ॥७१॥

अथ कलापकमाह—

**नयति द्रुतमुद्धतिश्रितः प्रसभं भङ्गमभंगुरोदयः ।**
**गमयत्यवनीतलस्फुरद्भुजशाखं भृशमन्यमुन्नतिम् ॥ ७२ ॥**

**नयतीत्यादि** । यः तटद्रुमैः सरितामुदकस्य पूर इव भूभृतां गणैः क्रीडतीति चतुर्थे वक्ष्यति । तत् क्रीडाप्रकारं त्रिभिर्वर्णयति । अभङ्गुरोदयः स्थिरवृद्धिः यः उद्धतिश्रित औद्धत्यभाजः । अनम्रानिति यावत् । श्रयतेः क्विप् । नृपान् द्रुमांश्चेत्यर्थः । द्रुतं शीघ्रं प्रसभं प्रसह्य भङ्गं नयति । अवनीतले स्फुरन्त्यो भुजौ शाखे इव भुजशाखे यस्य तं भुजौ प्रसार्य्य भुवि प्रणिपतितमित्यर्थः । अन्यं नृपं द्रुमं च वेतसादिकं भृशमुन्नतिं गमयति ॥ ७२ ॥

**अधिगम्य च रन्ध्रमन्तरा जनयन्मण्डलभेदमन्यतः ।**
**खनति क्षतसंहति क्षणादपि मूलानि महान्ति कस्यचित् ॥७३॥**

**अधिगम्येति**। किञ्चेति चार्थः। अन्तरा मण्डलमध्ये आलवालमध्ये च रन्ध्रमन्तरा सुषिर चाधिगम्य अन्यत. मण्डलस्यामात्यादिचक्रस्य भेदमुपजाप जनयन्। अन्यत्र मण्डलस्याधारदेशस्य भेदं विदारणं कुर्वन्नित्यर्थ। क्षता सहतिरैकमत्यं मूलानामाश्लेषश्च यस्मिन कर्मणि तद्यथा तथा क्षणात्कम्यचित्राज. द्रुमस्य च महान्ति मूलानि मुख्यान् जनानपि खनति तापयति अन्यत्रार्द्रानपि खनत्यवदारयति ॥ ७३ ॥

**घनपत्रभृतोऽनुगामिनस्तरसाकृष्य करोति कांश्चन।**
**दृढमप्यपरं प्रतिष्ठितं प्रतिकूलं नितरां निरस्यति ॥ ७४ ॥**

**घनेति**। घनानि सान्द्राणि पत्राणि वाहनानि पर्णानि च बिभ्रतीति घनपत्रभृत काश्चन नृपान् द्रुमांश्च। तरसा बलेन वेगेन च। तरसी बलरहसी' इति विश्व। आकृष्यानुगामिनोऽनुचरान् करोति दृढ यथा तथा प्रतिष्ठित प्रतिष्ठा गतमपि। प्रतिकूल प्रातिकूल्यभाजम् अपर नृप द्रुम च नितरा निरस्यति उत्पाट्यान्यत. क्षिपति द्रुमपक्षे प्रतिकूलं कूले क्षिपतीति चार्थ ॥७४॥

**इति पूर इवोदकस्य यः सरितां प्रावृषिजस्तटद्रुमैः।**
**क्वचनापि महानखण्डितप्रसरः क्रीडति भूभृतां गणः ॥७५ ॥**

**इतीति**। इतीत्थ क्वचनाप्यखण्डितप्रसर' सर्वत्राखण्डितप्रवृत्तिरित्यर्थ'। महान् यः शिशुपालः प्रावृषि जातः प्रावृषिज। "सप्तम्या जनेर्ड." इति डप्रत्ययः। "प्रावृट्शरत्कालदिवा जे" इत्यलुक्। प्रावृषिक इति पाठे तत्र जातः" इत्यर्थे "प्रावृषष्ठक्" इति ठक् प्रत्यय, "ठस्येक." इतीकादेशः। सरितामुदकाना पूरस्तटद्रुमैरिव भूभृता राज्ञा गणै. सार्धं क्रीडति। 'महतः कुकुर' इत्याग्मिश्लोके स महीपतिरित्यनेनास्य सम्बन्ध ॥ ७५ ॥ कलापकम्।

अथ विशेषकमाह—

**अलघूपलपङ्क्तिशालिनीः परितो रुद्धनिरन्तराम्बराः।**
**अधिरूढनितम्बभूमयो न विमुञ्चन्ति चिराय मेखलाः ॥ ७६ ॥**

**अलघ्वित्यादि**। यस्यारिस्त्रियः सम्पदनुभूतमापदप्यनुभवन्तीति वक्ष्यति तत्प्रकारमेवाह। अधिरूढनितम्बभूमयः उन्नतश्रोणिभागा अलघुभिः उपलाना मणीना पाषाणाना च पङ्क्तिभिः शालन्त इति तच्छालिनीः। ' उपलौ मणिपाषाणौ ' इति विश्व। परितो रुद्धमावृत निरन्तर सान्द्र सन्निहित च अम्बर वस्त्रमाकाश च याभिस्ता' अधिरूढनितम्बभूमीराक्रान्तश्रोणिभागा' प्राप्तकटकाश्चेति विभक्तिविपरिणाम। मेखला रशनाः पर्वतमध्यभूमीश्च चिराय न विमुञ्चन्ति। अत्र सम्पदादिविषयत्वेनोभयेषामपि मेखलादीना वर्ण्यत्वेन प्रकृतत्वात् केवलप्रकृतगोचरः श्लेषः ॥ ७६ ॥

**कटकानि भजन्ति चारुभिर्नवमुक्ताफलभूषणैर्भुजैः ।**
**नियतं दधते च चित्रकैरवियोगं पृथुगण्डशैलतः ॥ ७७ ॥**

**कटकानीति** । किञ्च नवमुक्ताफलानि नूतनमौक्तिकानि भूषणानि येषां तैश्चारुभिः भुजैः कटकानि वलयानि भजन्ति । अन्यत्र नवमुक्तान्यचिरत्यक्तानि अतः अफलानि वैधव्यान्निष्फलानि आभरणानि यैस्तैर्भुजैरुपलक्षिताः कटकानि तटानि भजन्ति । किञ्चेति चार्थः । पृथुगण्डशैलतः पृथुगण्डस्थलेषु चित्रकैः पत्ररचनाभिर्नियतमवियोगं सम्पर्कं दधते । अन्यत्र च्युतस्थूलोपलेषु चित्रकैर्मृगविशेषैः सहवासं दधते । अत्रापि प्रकृतगोचरः श्लेषः ॥ ७७ ॥

**इति यस्य ससम्पदः पुरा यदवापुर्भवनेष्वरिस्त्रियः ।**
**स्फुटमेव समस्तमापदा तदिदानीमवनीध्रमूर्द्धसु ॥ ७८ ॥**

**इतीति** । यस्यारिस्त्रियः पुरा पूर्वं ससम्पदः सश्रीका भवनेषु सदनेषु यदवापुर्मेखलादिकमनुबभूवुः । समस्तमशेषं तदिदानीमापदा अवनीध्रमूर्द्धसु शैलशृङ्गेषु इतीत्थं स्फुटमेवावापुः । नह्यस्य वैरिणा जीविताशेति भावः । अत्रापि यदर्थस्योत्तरश्लोकेनान्वयः ॥ ७८ ॥ विशेषकम् ।

**महतः कुकुरान्धकद्रुमानतिमात्रं दववद्दहन्नपि ।**
**अतिचित्रमिदं महीपतिर्यदकृष्णां पृथिवीं करिष्यति ॥ ७९ ॥**

**महत इति** । यत्तदोर्नित्यसम्बन्धात् । स महीपतिर्महतोऽधिकान् कुकुरांश्चान्धकांश्च यादवभेदास्तानेव द्रुमानतिमात्रं दववत् दवाग्निवत् । 'दवदावौ वनारण्यवह्नी' इत्यमरः । दहन्नपि अवनीमकृष्णामश्यामां करिष्यति इति यत् इदमतिचित्रं विरुद्धमित्यर्थः । कृष्णरहितामित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः । कुकुरान्धकैः सह कृष्णं हनिष्यतीति श्लेषार्थः ॥ ७९ ॥

अथ युग्मेनाह—

**परितः प्रमिताक्षरापि सर्वं विषयं प्राप्तवती गता प्रतिष्ठाम् ।**
**न खलु प्रतिहन्यते कुतश्चित्परिभाषेव गरीयसी यदाज्ञा ॥ ८० ॥**

**परित इति** । प्रकर्षेण मिताक्षरापि एकत्र मितभाषितत्वादन्यत्र तु सूत्रत्वाच्चाल्पाक्षरापि सर्वं विषयं राष्ट्रकार्य्यं देशं च परितो व्याप्तवती सर्वत्र प्रवृत्तेत्यर्थः । प्रतिष्ठां प्रामाण्यं स्थितिं गता गरीयसी भूयिष्ठार्था यदाज्ञा यस्य राज्ञः शासनं परिभाषा अनियमनिवारको न्यायविशेषः सैव कुतश्चित् कुत्रापि न प्रतिहन्यते खलु न बाध्यते हि । 'परिभाषा ह्येकदेशे स्थिता सर्वशास्त्रमभिज्वलयति' इति भाष्यकारः । "इको गुणवृद्धी" इत्यादिका परिभाषा सिचि वृद्धिरित्यादिविषयः । उपमालङ्कारः । औपच्छन्दासिकं वृत्तम् ॥ ८० ॥

**यामूढवानूढवराहमूर्तिर्मुहूर्त्तमादौ पुरुषः पुराणः ।**
**तेनोह्यते साम्प्रतमक्षतैव क्षतारिणा सम्यगसौ पुनर्भूः ॥ ८१ ॥**

**यामिति** । या भुवमादौ पूर्वं पुराणपुरुषो विष्णुः ऊढवराहमूर्त्तिः धृतवराहशरीरः सन् न तु स्वरूपेणेति भावः । मुहूर्त्तं क्षणमात्रम् ऊढवान् धृतवान् । क्षतारिणा सहननकलविपक्षेण अत एवैना पुनस्तेन राज्ञा अविकृतेनेति भावः । अक्षतैव विपक्षैरस्पृष्टैव असौ भूः साम्प्रतमद्यापि न तु मुहूर्त्तमिति भावः । सम्यक् यथाशास्त्रमुह्यते धार्य्यते । वहे कर्मणि लट्, "वचिस्वपि" इत्यादिना सम्प्रसारणम् । अत्र राज्ञो विष्णोराधिक्यकथनाद्व्यतिरेकः । अत्र ध्वनिः । कश्चिद्वृद्धः स चोढवराहमूर्त्तिर्यामविकृतामादौ प्रथमं मुहूर्तमूढवान् परिणीतवानिति अत एव अक्षता पूर्वेण अक्षतयोनिका । अत एवासौ भूर्वोढुः क्षतारिणा । शौर्य्यादिगुणाढ्येनेत्यर्थः । तेन केनचिद्यूना साम्प्रतं पुनरुह्यते पुनः पुनः परिणीयते । 'सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति' इति स्मरणादिति भावः । सा पुनर्भूरुच्यते इति योज्यम् । 'पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः' इत्यमरः । अत्राभिधायाः प्रकृतार्थ एव नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव ॥ ८१ ॥

**भूयांसः क्वचिदपि काममस्खलन्तस्तुङ्गत्वं दधति च यद्यपि द्वयेऽपि । कल्लोलाः सलिलनिधेरवाप्य पारं शीर्य्यन्ते न गुणमहोर्म्मयस्तदीयाः ॥ ८२ ॥**

**भूयांस इति** । द्वयेऽपि समुद्रोर्म्मयो गुणोर्मयश्चेति द्वितया अप्यूर्मय इति । द्वेस्तयप् तस्य "द्वित्रिभ्यामयच्" इत्यादिना अयजादेशः "प्रथमचरम" इत्यादिना जसि विभाषया सर्वनामसंज्ञा । भूयांसो बहुतराः क्वचिदप्यस्खलन्तोऽप्रतिहतप्रसराः इत्यर्थः । कामं तुङ्गत्वं दधति यद्यपि दधत्येव । 'यद्यपीत्यवधारणे' इति केशवः । तथापीति शेषः । सलिलनिधेः समुद्रस्य कल्लोला महोर्म्मयः । 'अथोर्म्मिषु । महत्सूल्लोलकल्लोलौ' इत्यमरः । पारं तीरमवाप्य शीर्य्यन्ते । विशीर्यन्ते । शीर्य्यतेर्दैवादिकात्कर्त्तरि लट् । तदीया गुणमहोर्म्मयस्तु पारमवाप्य न शीर्य्यन्ते । अत्र गुणमहोर्म्मीणां भूयस्त्वादिति साधर्म्येण गुरुत्वेन समुद्रस्याधिक्याद्व्यतिरेकः । अनेन राज्ञोऽपि समुद्राधिक्यं व्यज्यते । प्रहर्षिणी वृत्तम् ॥ ८२ ॥

अथ युग्मेनाह—

**लोकालोकव्याहतं घर्म्मरश्मेः शालीनं वा धाम नालं प्रसर्तुम् । लोकस्याग्रे पश्यतो धृष्टमाशु क्रामत्युच्चैर्भूभृतो यस्य तेजः ॥ ८३ ॥**

**लोकालोकेत्यादि** । लोक्यते आलोक्यते च पार्श्वान्तरेणेति लोकालोकः 'लोकालोकश्चक्रवालः' इत्यमरः । विशेषणसमासः । तेन व्याहतं निरुद्धप्रसारं लोकस्यालोकेन चक्षुःप्रकाशेन व्याहतमित्यपि स्फुरति । अत एव शालीनमधृष्टं लज्जया भग्नधार्ष्ट्यमित्यर्थः । "शालीनकौपीने अधृष्टाकार्य्ययोः" इति निपातः । इवार्थे वा शब्दः तदुत्प्रेक्षा । घर्म्मरश्मेर्धाम तेजः पश्यतो

लोका' उच्चैर्भृत' पर्वतान् राज्ञश्च प्रसत्तुं व्याप्तु नाऽ न समर्थम् । लोकालोकव्याप्तस्य लोकाग्रे सञ्चरत्वादित्यर्थः । यस्य राज्ञस्तु तेज पश्यतो लोकस्याग्रत एव धृष्ट केनाप्यव्याहतत्वात्प्रगल्भ सत् उच्चैर्भूभृतो राज्ञः पर्वतांश्च क्रामति व्याप्नोति । अत्राप्रतिहतप्रतापत्वेन राज्ञः सूर्यादाधिक्याव्यतिरेकः स च द्वयोर्लोकालोकयोर्द्वयानां भूभृताम् अभेदाध्यवसायात् श्लेषमूलातिशयोक्त्युत्थापितया शालीनत्वोत्प्रेक्षया संकीर्यते शालिनी वृत्तमेतत् ॥ ८३ ॥

**विच्छित्तिर्नवचन्दनेन वपुषो भिन्नोऽधरोऽलक्तकैरच्छाच्छे पतिताञ्जने च नयने श्रोण्यो लसन्मेखलाः । प्राप्तो मौक्तिकहारमुन्नतकुचाभोगस्तदीयद्विषामित्थं नित्यविभूषणा युवतयः सम्पत्सु चापत्स्वपि ॥ ८४ ॥**

**विच्छित्तिरिति** । वपुषो नवचन्दनेन विच्छित्तिर्वियोग आपदि अन्यत्र चन्दनालेपनमिति यावत् । अधरोष्ठः अलक्तकैः लाक्षारागैर्भिन्नो वियुक्तः अन्यत्र युक्तः । नयने च पतिताञ्जने गलितकज्जले अत एवाच्छाच्छे अच्छप्रकारे । " प्रकारे गुणवचनस्य " इति द्विर्भावः । " कर्मधारयवत् " इति सुपो लुक् । अन्यत्र अच्छाच्छे नयने पतिताञ्जने प्राप्ताञ्जने । श्रोण्यो नितम्बाः लसन्मेखला न भवन्तीत्यलसन्मेखला निर्मेखला इत्यर्थः । अन्यत्र लसन्मेखला इति पदच्छेदः । उन्नत' कुचाभोगः कुचविस्तारो मौक्तिकाना हार हरणं प्राप्तः । अन्यत्र मुक्तादाम प्राप्त इत्थमुक्तरीत्या तदीयद्विषः युवतयः सम्पत्सु चापत्स्वपि नित्यविभूषणाः । अत्रापत्सम्पदोः प्रकृताप्रकृतयोः युवतिविशेषणद्वारा वर्णनात् श्लेषः । शार्दूलविक्रीडितं वृत्तम् । लक्षणमुक्तम् ॥ ८४ ॥

सत्यमीदृशस्ते राजा, ततः किमित्याशङ्क्य तर्हि तत्त्वमाकर्णयेत्याह—

**विनिहत्य भवन्तमूर्जितश्रीर्युधि सद्यः शिशुपालतां यथार्थाम् । रुदतां भवदङ्गनागणानां करुणान्तःकरणः करिष्यतेऽसौ ॥ ८९ ॥**

**इति श्रीमाघकृते शिशुपालवधे महाकाव्ये षोडशः सर्गः ॥ १६ ॥**

**विनिहत्येति** । ऊर्जितश्रीरधिकैश्वर्योऽसौ राजा युधि भवन्त सद्यो विनिहत्य हत्वा रुदतां क्रन्दतां भवदङ्गनागणानां करुणान्तःकरणः कृपाविष्टचित्तः सन् शिशुपालतां यथार्थां करिष्यते । अङ्गनागणान् प्रति तच्छिशुपालनेन निजां शिशुपालसंज्ञामन्वर्थां करिष्यतीत्यर्थः । अत्र रोदनकरुणापदार्थयोर्विशेषणगत्याक्रमात् करुणाशिशुपालनहेतुकत्वात्काव्यलिङ्गयोः सङ्करः । औपच्छन्दसिकं वृत्तम् ॥ ८९ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये षोडशः सर्गः ॥ १६ ॥



# सप्तदशः सर्गः।



इतीरिते वचसि वचस्विनाऽमुना युगक्षयक्षुभितमरुद्गरीयसि।
प्रचुक्षुभे सपदि तदम्बुराशिना समं महाप्रलयसमुद्यतं सदः॥१॥

**इतीति**। इतीत्थम् अमुना वचस्विना वाग्मिना। मनस्विनेति पाठे मनस्विना धीरेण दूतेन युगक्षये कल्पान्ते क्षुभित उद्धतो मरुत्तद्वद्गरीयसि वचसि ईरिते सति। सदम्बुराशि- ना युगक्षयवर्द्धिना समं तुल्यं यथा तथा सदो हरेरास्थानं महाप्रलये सर्वसंहारे समुद्यतमु- द्युक्तं सत् सपदि प्रचुक्षुभे प्रचुकोप। कल्पोद्धतमहामारुतेन महार्णव इव तद्वचनेन तत्सदः क्षुभितमासीदित्यर्थः। उपमा। रुचिरा वृत्तम्। 'चतुर्ग्रहैरिह रुचिरा जभस्जगाः' इति लक्षणात्॥१॥

अथाष्टादशभिः सभाक्षोभं वर्णयति—

सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया।
मुहुर्मुहुर्दशनविखण्डितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे॥२॥

**सरागयेत्यादि**। नृपा राजानः सह रागेण पाटलिम्ना अनुरागेण च सरागया। "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। स्रुतं घनं सान्द्रं घर्मतोयं स्वेदोदकं यस्याः सा तथा कराहत्या पाणितलास्फालनेन ध्वनितं पृथु महदूरु पीठमिव ऊरुपीठं यस्या तया मुहुर्मुहु- र्दशनविखण्डितोष्ठया दन्तदष्टाधरया। रुषा प्रियतमयेव भेजिरे। आविष्टोऽनाविष्टश्च रौद्रस्थायी क्रोधः प्रादुर्भूत इत्यर्थः। उपमालंकारः॥२॥

अथ सप्तदशभी राज्ञां क्रोधानुभावानाह—

अलक्ष्यत क्षणदलिताङ्गदे गदे करोदरप्रहितनिजांसधामनि।
समुल्लसच्छकलितपाटलोपलस्फुलिंगवान्स्फुटमिव कोपपावकः॥३॥

**अलक्ष्यतेत्यादि**। करोदरप्रहितं पाणितलास्फालितं निजमंसधाम स्वांसप्रदेशो येन तस्मिन्। अत एव क्षणात् दलिताङ्गदे भग्नकेयूरे। गदे गदाख्ये कृष्णानुजे समुल्लसद्भिः उत्पतद्भिः शकलितैः शकलीकृतैर्दलदङ्गदगलितैः पाटलोपलैः पद्मरागैः कोपपावकः स्फुलिङ्गवा- निव स्फुटं व्यक्तमलक्ष्यतेत्युत्प्रेक्षा। 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः॥३॥

अवज्ञया यदहसदुच्चकैर्बलः समुल्लसद्दशनमयूखमण्डलः।
रुषारुणीकृतमपि तेन तत्क्षणं निजं वपुः पुनरनयन्निजां रुचिम्॥४

**अवज्ञयेति** । बलो बलभद्रः समुल्लसत् समन्ततः प्रसरद्दशनमयूखमण्डलं दन्तरश्मिपटलं यस्य स सन् अवज्ञया अनादरेण उच्चैः अमहदिति यत् तेन हासेन रुणारुणीकृतमपि निज वपुः तत्क्षण तस्मिन् क्षणे । 'अत्यन्तसंयोगे द्वितीया' पुनर्निजां रुचिं धावल्यमेवानयत् । अत्र वपुष. स्वधावल्यत्यागेन दन्तधावल्यस्वीकारात्तद्गुणाऽलङ्कारः । 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाश्रयात्' इति लक्षणात् ॥ ४ ॥

**यदुत्पतत्पृथुतरहारमण्डलं व्यवर्त्तत द्रुतमभिदूतमुल्मुकः ।**
**बृहच्छिलातलकठिनांसघट्टितं ततोऽभवद्भ्रमितमिवाखिलं सदः ५**

**यदिति** । उल्मुको नाम राजा उत्पतदुल्लुठत् पृथुतर हारमण्डल मुक्ताकलापो यस्मिन् कर्म्मणि तद्यथा तथा अभिदूत दूताभिमुख व्यवर्त्तत विवृत इति द्रुत यत् ततो निवर्त्तनादखिल सदः बृहता शिलातलकठिनेनांसेन स्कन्धेन घट्टितं भ्रमितमिवाभवत् । निवर्त्तवेगवशोत्थादंसघट्टनाद्भ्रमितमिवाभूदित्युत्प्रेक्षा ॥ ५ ॥

**प्रकुप्यतः श्वसनसमीरणाहतिस्फुटोष्मभिस्तनुवसनान्तमारुतैः ।**
**युधाजितः कृतपरितूर्णवीजनं पुनस्तरां वदनसरोजमस्विदत् ६**

**प्रकुप्यत इति** । प्रकुप्यतोऽतिक्रुध्यतो युधाजितो नाम राज्ञो वदनसरोज श्वसनसमीरणस्य निःश्वासमारुतस्याहतिभिः स्फुटः प्रकट ऊष्मा उष्णत्व येषा तैः तनुवसनान्तमारुतैः सूक्ष्मवस्त्राञ्चलवातैः कृत परितूर्णवीजन शीघ्रविधूनन यस्य तत् । अतिशीघ्र वीज्यमानमपीत्यर्थः । पुनस्तरा पुनरत्यन्तम् । अव्ययादामुप्रत्ययः । अस्विदत् स्विद्यति स्म । स्विदेर्लुङि पुषादित्वादङ्प्रत्यय. । अत्रोष्मविशेषणगत्या स्वेदहेतुत्वात्काव्यलिङ्ग वीजनेऽपि स्वेद इति विरोधः । वीजिरय चुरादिषु अन्वेषणीयः ॥ ६ ॥

**प्रजापतिक्रतुनिधनार्थमुत्थितं व्यतर्क्कयज्ज्वरमिव रौद्रमुद्धतम् ।**
**समुद्यतं सपदि वधाय विद्विषामतिक्रुधं निषधमनौषधं जनः॥७॥**

**प्रजेति** । जनः सपदि विद्विषा वधाय समुद्यतमुद्युक्तम् उद्धत तीव्रम् अत एवातिक्रुद्धमधिकक्रोधमनौषधमप्रतीकारमित्यर्थः । निषधं निषधाख्य नृप प्रजापतिक्रतुनिधनार्थं दक्षाध्वरध्वसनार्थमुत्थित रुद्रस्येम रौद्र रुद्रसम्बन्धिन ज्वरमिव वीरभद्ररूपिणमित्यर्थः । व्यतर्कयत् । अत्र राज्ञोऽपि प्रजापतित्वात् पुनः प्रजापतिक्रतुनिधनार्थमुत्थितः साक्षाद्दक्षाध्वरविध्वंसी वीरभद्र इवायमिति उत्प्रेक्षितवानित्यर्थः । उपमा ॥ ७ ॥

**परस्परं परिकुपितस्य पिंषतः क्षतोर्म्मिकाकनकपरागपङ्किलम् ।**
**करद्वयं सपदि सुधन्वनो निजैरनारतस्रुतिभिरधाव्यताम्बुभिः८॥**

**परस्परमिति** । परिकुपितस्यातिक्रुद्धस्य अत एव परस्पर पिंषत. पीडयतः करद्वयमित्यर्थः । सपदि सुधन्वनो राज्ञः क्षताना विष्टानामूर्म्मिकाणामङ्गुलीयकाना कनकपरागेण सुवर्ण-

चूर्णेन पङ्किलं पङ्कवत् । पिच्छादित्वान्मत्वर्थीय इलच्प्रत्ययः । 'अङ्गुलीयकमूर्म्मिका' इत्यमरः । करद्वयं पाणियुग्मं निजैः करद्वयजन्यैरेवानारतश्रुतिभिरविरतस्राविरम्बुभिः स्वेदोदकैरधाव्यताक्षाल्यत । "धावु गतिशुद्ध्योः" इति धातोः कर्म्मणि लङ् । अत्रोर्म्मिकाणां करद्वयस्य च परागत्यपङ्किलत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ती । तयोः सङ्करः ॥ ८ ॥

**निरायतामनलशिखोज्ज्वलां ज्वलन्नखप्रभाकृतपरिवेषसम्पदम् । अविभ्रमद्भ्रमदनलोल्मुकाकृतिं प्रदेशिनीं जगदिव दग्धुमाहुकिः ॥ ९ ॥**

**निरिति** । आहुकिर्नाम राजा निरायता प्रसारिताम् अनलशिखाग्निज्वाला तद्वत् उज्ज्वलां ज्वलन्तीभिर्नखप्रभाभिः कृता परिवेषसम्पत् परिधिशोभा यस्यास्ताम् अत एव भ्रमतोऽनलोल्मुकस्यालातस्येवाकृतिः संस्थानं यस्यास्ताम् । 'अङ्गारोऽलातमुल्मुकम्' इत्यमरः । प्रदेशिनीं जगद्दग्धुमिवेत्युत्प्रेक्षा । अविभ्रमत् भ्रमयति स्म । भ्रमेर्णौ चङ् । नूनमन्तर्जनाय भ्राम्यमाणनखप्रभापटला तर्जनी जगद्दाहाय भ्राम्यमाणालातचक्रवदलक्ष्यतेत्यर्थः ॥ ९ ॥

**दुरीक्षतामभजत मन्मथस्तथा यथा पुरापरिचितदाहधाष्टर्यया । ध्रुवं पुनः सशरमसुं तृतीयया हरोऽपि न व्यसहत वीक्षितुं दृशा ॥ १० ॥**

**दुरीक्षतामिति** । मन्मथः प्रद्युम्नावतारः कामस्तथा दुरीक्षता दुर्दर्शनत्वम् । ईक्षतेः खलन्तात्तल्प्रत्ययः । अभजत यथा हरोऽपि पुरा पूर्वजन्मनि परिचितमभ्यस्तं दाहधाष्टर्यं दहनसाहसं यस्यास्तया तृतीयया दृशा । सशरममुं मन्मथं ध्रुवं पुनर्वीक्षितुं न व्यसहत न शक्तः । "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" "सिवादीनां वाड् व्यवायेपि" इति विकल्पान्नत्वम् । अनयोत्प्रेक्षया रुद्रस्यापि भीषणं किमुतान्येषामिति वस्तु व्यज्यते ॥ १० ॥

**विचिन्तयन्नुपनतमाहवं रसादुरः स्फुरत्तनुरुहमग्रपाणिना । परामृशत्कठिनकठोरकामिनीकुचस्थलप्रमुषितचन्दनं पृथुः ॥ ११ ॥**

**विचिन्तयन्निति** । पृथुर्नाम राजा उपनतं प्राप्तम् आहवं युद्धं रसाद्रणरागात् विचिन्तयन् कदेति ध्यायन् कठिनेन कर्कशेन कठोरेण प्रवृद्धेन कामिन्याः कुचस्थलेन प्रमुषितमपहृतं चन्दनं यस्य तत् । एतेनास्य सुरतसमरयोः समरसत्वं व्यज्यते । अत एव स्फुरत्तनुरुहमुद्गच्छत्पुलकमुरः । अग्रश्चासौ पाणिश्चेति समानाधिकरणसमासः । अत एव "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदयोः" इति वामनः । तेनाग्रपाणिना पाणितलेन परामृशत् परामृष्टवान् । रणकण्डूलपाणित्वादिति भावः । अत एव यदन्येषां रोपजनकं दूतवाक्यं तदागामिरणकारणतयास्य हर्षे हेतुरिति श्लेषार्थः ॥ ११ ॥

**विलङ्घितस्थितिमभिवीक्ष्य रूक्षया रिपोर्गिरा गुरुमपि गान्दिनीसुतम् । जनैस्तदा युगपरिवर्त्तवायुभिर्विवर्त्तिता गिरिपतयः प्रतीयिरे ॥ १२ ॥**

**विलंघितेति** । गुरु स्वभावतो धीरमपि सन्त रूक्षया परुषया रिपोर्गिरा दूतवाचा-विलङ्घितस्थितिमुल्लङ्घितमर्य्याद क्रोधादुन्मर्य्याद विकृतिं गमितमित्यर्थः । गान्दिनीसुतमक्रूरमभिवीक्ष्य जनैस्तदा अक्रूरविक्रियालोकनसमये युगपरिवर्त्तवायुभिः कल्पान्तवातैर्विवर्त्तिताः स्थानाद्दुच्चालिताः गिरिपतयोऽद्रय' प्रतीयिरे विशश्वसिरे । अक्रूरविक्रियादर्शनाद्गिरिचलनमपि युगान्ते संभावितमेवेति जनैर्विश्वस्तमित्यर्थः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । प्रतिपूर्वादिणः कर्मणि लिट् । अत्र कल्पान्ते गिरिचलनविक्रियाकल्पेयमक्रूरविक्रियेति वाक्यभेदेन सादृश्याक्षेपान्निदर्शनालङ्कारः । तेनाक्रूरस्य लोकोत्तर धैर्य्यं नैसर्गिकमिति वस्तु व्यज्यते ॥ १२ ॥

**विवर्त्तयन्मदकलुषीकृते दृशौ कराहतक्षितिकृतभैरवारवः ।**
**क्रुधा दधत्तनुमतिलोहिनीमभूत्प्रसेनजिद्गज इव गैरिकारुणः॥१३॥**

**विवर्त्तयन्निति** । मदो मद्यविकारो दान च । "मदो मद्येमदानयोः" इति विश्वः । तेन कलुषीकृते आकुलीकृते दृशौ निवर्त्तयन् घूर्णयन् करेण पाणिना शुण्डादण्डेन चाहतायां क्षितौ भूमौ कृतो भैरवारवो भयङ्करध्वनिर्येन स । क्रोधातिरेकात् करेण क्षितिमाघ्नन्नित्यर्थः । क्रुधा क्रोधेन अतिलोहिनीमतिलोहिताम् । "वर्णादनुदात्तात्तोपधात्तो नः" इति विकल्पात् ङीष् तकारस्य च नकारः । तनु वपुर्दधत् प्रसेनजिन्नाम राजा गैरिकारुणो धातुरक्तो गज इवाभूत् । तद्वदलक्ष्यतेत्यर्थः ॥ १३ ॥

**सकुङ्कुमैरविरलमम्बुबिन्दुभिर्गवेषणः परिणतदाडिमारुणः ।**
**स मत्सरस्फुटितवपुर्विनिस्सृतैर्बभौ चिरं निचित इवासृजां लवैः॥१४॥**

**सकुंकुमैरिति** । प्रसिद्धो गवेषणो नाम राजा सकुंकुमैः । सर्वाङ्गीणकश्मीरजलेपैरित्यर्थः । अत एव परिणतदाडिमारुणैः परिपक्वदाडिमबीजरक्तैरम्बुबिन्दुभिः । क्रोधसात्विकैः स्वेदबिन्दुभिरित्यर्थः । मत्सरेणान्तःसवृत्तेनात्युत्कटवैरेण स्फुटितान्निर्भिन्नात् वपुषो विनिस्सृतैरसृजा लवैरसृग्बिन्दुभिरविरल निरतर निचितो व्याप्त एव चिर बभौ । उत्प्रेक्षा ॥ १४ ॥

**ससम्भ्रमं चरणतलाभिताडनस्फुटन्महीविवरवितीर्णवर्त्मभिः ।**
**रवेः करैरनुचिततापितोरगं प्रकाशतां शिनिरनयद्रसातलम् ॥१५॥**

**ससम्भ्रममिति** । शिनिः सात्यकेः पितामहः ससम्भ्रम ससत्वर चरणतलाभिताडनेन पादतलाभिघातेन स्फुटन्त्या दलन्त्या मह्या विवरैः छिद्रैः वितीर्णवर्त्मभिर्दत्तमार्गैस्तत्प्रसरणैरित्यर्थः । रवेः करैः अनुचित पूर्वमपरिचितमिद यथा तथा तापिताः सन्ताप गमिता उरगा यस्मिन् तत् रसातलं प्रकाशता प्रगटत्वमनयत् । अत्र महीरविकरोरगरसातलाना क्रमेण स्फुटनान्तःप्रवेशतापप्रकाशनैरसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । पादाहननैरस्मानुषी तीव्रता व्रजति स्मेति ध्वनिः ॥ १५ ॥

प्रतिक्षणं विधुवति शारणे शिरः शिखिद्युतः कनककिरीट-रश्मयः । अशङ्कितं युधमधुना विशन्त्वमी क्षमापतीनिति निरराजयन्निव ॥ १६ ॥

**प्रतीति** । शारणे नाम राज्ञि प्रतिक्षणं शिरो विधुवति क्रोधात्कम्पयति सति । धुवस्तौ-दादिकाल्लटः शत्रादेशः, "अचि श्नुधातु" इत्यादिना उवङादेशः । शिखिवत् द्योतन्त इति शिखिद्युतोऽग्निप्रभाः । क्विप् । कनककिरीटरश्मयो नीराजनकर्त्तार अमी भूपा. अधुना अशङ्कितं निःशङ्कं युधमाजिम् । ' समित्याजिसमिद्युधः ' इत्यमरः । विशन्त्विति क्षमापतीन्निराजयन्निव नीराजयन्ति स्मेवेत्युत्प्रेक्षा । ' नीराजना स्याद्विजये ' इत्यागमः ॥ १६ ॥

दधौ चलत्पृथुरसनं विवक्षया विदारितं विततबृहद्भुजालतः । विदूरथः प्रतिभयमास्यकन्दरं चलत्फणाधरमिव कोटरं तरुः ॥ १७

**दधाविति** । वितते विस्तृते बृहत्यौ भुजे लते इव यस्य सः विदूरथो नाम राजा । विव-क्षया किमपि वक्तुमिच्छया विदारितं व्यात्तम् अत एव चलन्ती पृथुर्महती रसना जिह्वा यस्मिन् तम् । ' रसज्ञा रसना जिह्वा' इत्यमर. । प्रतिभयं भयङ्करमास्यं कन्दरं इवास्यकन्दरस्तम् । 'दरी तु कन्दरो वा स्त्री' इत्यमरः । चलन् फणाधरः फणी यस्मिन् तत् कोटरमिवि । 'निष्कुहः कोटर वा ना ' इत्यमरः । दधौ । श्रौती पूर्णोपमा ॥ १७ ॥

समाकुले सदसि तथापि विक्रियां मनोऽगमन्न मुरभिदः परोदितैः घनाम्बुभिर्बहुलितनिम्नगाजलैर्जलं न हि व्रजति विकारमम्बुधेः॥

**समाकुल इति** । परोदितैः शत्रुवाक्यै. सदसि आस्थाने तथा समाकुले क्षुभितेऽपि मुरभिदो हरेर्मनो विक्रिया क्षोभं नागमत् । तथा हि बहुलितानि बहुलीकृतानि क्षोभितानि निम्न-गाजलानि यैस्तैर्घनाम्बुभिर्मेघोदकैरम्बुधेर्जलं विकारं न व्रजति । यथा वर्षोदकैर्नद्यः क्षुभ्यन्ति न समुद्रस्तद्वदिति भावः । दृष्टान्तालङ्कारः ॥ १८ ॥

परानमी यदपवदन्त आत्मनः स्तुवन्ति च स्थितिरसताम-साविति । निनाय नो विकृतिमविस्मितः स्मितं मुखं शर-च्छशधरमुग्धमुद्धवः ॥ १९ ॥

**परानिति** । अमी खला. परानन्यानपवदन्ते निन्दन्ति । "अपाद्वदः" इत्यात्मनेपदम् । आत्मनः स्वानि स्तुवन्ति चेति यत् असावसतां खलानां स्थितिः प्रकृतिरिति । इति मत्वेत्यर्थः । गम्यमानार्थत्वादप्रयोग. । अन्यथा पौनरुक्त्यमित्यालङ्कारिका' । विस्मितो न भवतीति अवि-स्मितो दूतप्रलापैर्विस्मयं न गतः उद्धवः स्मितं स्मेरम् । उभयत्र कर्त्तरि क्तः । अत एव शरच्छशधरमुग्धं शरदिन्दुसुन्दरमित्युपमा मुखं विकृतिं न निनाय न प्रापयामास । नहि महतां निन्दा स्तुतिर्वा विकारकारणमिति भावः ॥ १९ ॥

**निराकृते यदुभिरिति प्रकोपिभिः स्पशे शनैर्गतवति तत्र विद्विषाम् । मुरद्विषः स्वनितभयानकानकं बलं क्षणादथ समनह्यताजये ॥ २० ॥**

**निराकृत इति** । तत्र सदसि इतीत्थ प्रकोपिभिरतिक्रुद्धैर्यदुभि. विद्विषा स्पशे चरे । 'अपसर्पचर स्पश.' इत्यमरः । निराकृते धिक्कृते शनैर्गतवति गच्छति सति । सागसोऽपि दूतस्यावध्यत्वादिति भाव । अथ दूतगमनानन्तर स्वनितेन ध्वनिता भयानकाः भयङ्कराः आनका. पटहा यस्मिंस्तत् मुरद्विषो बल क्षणादाजये युद्धाय समनह्यत सन्नद्धम् ॥ २० ॥

**मुहुः प्रतिस्खलितपरायुधा युधि स्थवीयसीरचलनितम्बनिर्भरः। अदंशयन्नरहितशौर्यदंशनास्तनूरयं नय इति वृष्णिभूभृतः॥२१॥**

**मुहुरिति** । वृष्णिभृतो यादवनरेन्द्राः मुहुरसकृद्युधि प्रतिस्खलितपरायुधाः भग्नप्रतिपक्षायुधाः स्थवीयसी. स्थूलतराः पराक्रमानुरूपप्रकर्षवतीरित्यर्थ. । 'स्थूलदूर' इत्यादिना पूर्वस्य गुणलोपौ । अचलनितम्बनिर्भरा अद्रिकटकनिबिडा । अन्तः सारवतीरित्यर्थः । अरहितमत्यक्त शौर्यमेव दशन वर्म्म यासा तास्तनूर्देहान् अय नय इति वर्मधारण नीतिरिति हेतोर्न तु भयादिति भाव । अदशयन् अवर्मयन् । दशेरनुदात्तेत्त्वात्परस्मैपद चिन्त्यमित्याहुः । अत एव भट्टमल्लः " सवर्मयति सन्नह्यत्यात्मने सज्जतीत्यमी । सन्दशते दशयते सन्नाहे पदपञ्चकम् " इति । कचित्तु चुरादिष्वूभयपदिषु पठन्ति । अत्र साभिप्रायविशेषणत्वात् परिकरालङ्कारः ॥ २१ ॥

**दुरुद्वहाः क्षणमपरैस्तदन्तरे रणश्रवादुपचयमाशु बिभ्रति । महीभुजां महिमभृतां न सम्ममुर्मुदोऽन्तरा वपुषि बहिश्च कञ्चुकाः ॥ २२ ॥**

**दुरुद्वहा इति** । महिमभृतामैश्वर्यवता महीभुजा राज्ञा सम्बन्धिनि रणश्रवात् युद्धश्रवणात् आशु शीघ्रम् उपचय वृद्धिं बिभ्रति बिभ्राणे वपुषि अपरैरन्यैः क्षण क्षणमपि दुरुद्वहा दुर्भरा मुदः सन्तोषाः अन्तरा अन्तराले न सममुः बहिः कञ्चुकाश्च न सममुः न मान्ति स्म नावर्त्तन्तेत्यर्थः । पूर्वत्र आधेयाधिक्यादुत्तरत्राधाराधिक्यादिति विवेकः । अत्र मुदा कञ्चुकानां च प्रकृतानामेव विशेषणसाम्यादौपम्यगम्यतायां केवलप्रकृतास्पदा तुल्ययोगिता ॥ २२ ॥

**सकल्पनं द्विरदगणं वरूथिनस्तुरङ्गिणो जयनयुजश्च वाजिनः। त्वरायुजः स्वयमपि कुर्वतो नृपः पुनःपुनस्तदधिकृतानतत्वरन्॥**

**सकल्पनमिति** । द्विरदगण सह कल्पनया सकल्पन यथोचितसन्नाहसहितम् । 'कल्पना सज्जना समे' इत्यमरः । वरूथो रथगुप्तिरेषामस्तीति वरूथिनो रथान् 'रथगुप्तिर्वरूथो ना' इत्यमरः । तुरङ्गिणोऽश्वयुक्तान् वाजिनोऽश्वान् जयनयुजः पल्ययनादिसन्नाहसयुक्तान् । सम्पदादिभ्यः क्विप् ।

'जयनः स्यात्तुरङ्गादिसन्नाहे विजयेऽपि च' इति विश्वः । स्वयम् । त्वरायुजः त्वरायुक्तान् स्वतः कुर्व्वतोऽपि स्वत एव त्वरया कुर्व्वाणानपीत्यर्थः । तदधिकृतान् हस्त्यादिषु नियुक्तपुरुषान् नृपाः पुनःपुनरतत्वरन् त्वरयन्ति स्म । तेषां तथा रणौत्सुक्यादिति भावः । त्वरेर्णौ चङि "अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्" इत्यभ्यासस्याकारः ॥ २३ ॥

**युध परैः सह दृढबद्धकक्षया कलक्कणन्मधुपकुलोपगीतया ।**
**अदीयत द्विपघटया सवारिभिः करोदरैः स्वयमथ दानमक्षयम् २४**

**युध इति** । अथ परैः सह युद्धे युद्धाय दृढबद्धा कक्षा मध्यबन्धनं यस्यास्तया । 'कक्षा बृहतिकाया स्यात् काच्या मध्येभबन्धने' इति विश्वः । अन्यत्र दृढोद्योगयेत्यर्थः । कलं क्वणता मधुपकुलेनालिगणेनोपगीतया । वन्दिमागधस्तुतया चेति गम्यते । द्विपघटया । कर्त्र्या । स्वयं सवारिभिः सोदकैः करोदरैः पुष्कराग्रैः पाणितलाग्रैश्चाक्षयमपरिमितं दानं मदः अदीयत दानं द्रव्यं चादीयत दत्तम् । अत्र प्रस्तुतगजघटाविशेषणसाम्येनाप्रस्तुतदानकर्तृप्रतीतेः समासोक्तिरलङ्कारः ॥ २४ ॥

**सुमेखलाः सिततरदन्तचारवः समुल्लसत्तनुपरिधानसम्पदः ।**
**रणैषिणां पुलकभृतोऽधिकन्धरं ललम्बिरे सदसिलताः प्रिया इव**

**सुमेखला इति** । शोभना मेखला बन्धनसूत्राणि काञ्च्यश्च यासां ताः सुमेखलाः । 'मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः' इति विश्वः । सिततरैर्दन्तैर्दन्तमयत्सरुभिर्दशनैश्च चारवः उल्लसन्त्यः तनवः सूक्ष्माः परिधानसम्पदः । कोशसम्पदो वस्त्रसम्पदश्च यासां ताः पुलकभृतः छायाभृतः रोमाञ्चधारिण्यश्च सदसिलताः चारुखड्गवल्लयः प्रिया इव रणैषिणां रणाकाङ्क्षिणां कन्धरास्वधिकन्धरं अधिकण्ठम् । विभक्त्यर्थेऽव्ययीभावः । ललम्बिरे लग्ना इत्यर्थः । श्लेषः श्लिष्टोपमा वा मतभेदात् ॥ २५ ॥

**मनोहरैः प्रकृतिमनोरमाकृतिर्भयप्रदैः समितिषु भीमदर्शनः ।**
**सदैवतैः सततमथानपायिभिर्निजाङ्गवन्मुरजिदसेव्यतायुधैः २६**

**मनोहरैरिति** । अथ प्रकृतिमनोरमाकृतिः स्वभावसुन्दरमूर्त्तिः समितिषु युद्धेषु भीमदर्शनं यस्य स भीमदर्शनो मुरजिद्भिर्मनोहरैः प्रकृतिमनोहरैः समितिषु भयप्रदैः सदैवतैः अधिदेवतायुक्तैः सततम् अनपायिभिः आयुधैः शार्ङ्गादिभिर्निजाङ्गवत् पृथगवस्थितैः शरीरैरिवेत्युत्प्रेक्षा । असेव्यत सेवितः ॥ २६ ॥

**अवारितं गतमुभयेषु भूरिशः क्ष्माभृतामथ कटकान्तरेष्वपि ।**
**मुहुर्युधि क्षतसुरशत्रुशोणितप्लुतप्रधिं रथमधिरोहति स्म सः २७॥**

**अवारितमिति** । अथायुधसन्निधानानन्तरं स हरिरुभयेषु द्वयेषु द्विविधेष्वित्यर्थः । क्ष्माभृतां राज्ञां गिरीणां च कटकान्तरेष्वपि शिबिराभ्यन्तरेषु नितम्बावकाशेषु च भूरिशो बहुशः

अवारितमप्रतिहत गत प्रस्थितं मुहुरसकृत् युधि क्षताना सुरशत्रूणामसुराणा शोणितैः प्लुताः सिक्ता प्रधयो नेमयो यस्य तम्। 'चक्रधारा प्रधिर्नेमिः' इति हलायुधः। रथमधिरोहति स्म आरुरोह ॥ २७ ॥

उपेत्य च स्वनगुरुपक्षमारुतं दिवस्त्विषा कपिशितदूरदिङ्मुखः। प्रकम्पितस्थिरतरयष्टि तत्क्षणं पतत्पतिः पदमधिकेतनं दधौ ॥ २८ ॥

उपेत्येति। किञ्चेति चार्थः। पतत्पतिः अण्डजमण्डलेश्वरः गरुडः। 'पतत्पत्ररथाण्डजाः' इत्यमरः। त्विषा कान्त्या कपिशितानि कपिलीकृतानि दूराणि दिङ्मुखानि येन सः। स्वनेन गुरुर्महान् पक्षमारुतो यस्मिन् कर्म्मणि तत्तथा। दिवः स्वर्गादुपेत्यागत्य तत्क्षण तस्मिन् क्षणे प्रकम्पिता स्थिरतरा निश्चला यष्टिरावासस्तम्भो यस्मिंस्तत्तथा अधिकेतन केतने। विभक्त्यर्थेऽव्ययीभावः। पद दधौ निहितवान् ॥ २८ ॥

गभीरताविजितमृदङ्गनादया स्वनश्रिया हतरिपुहंसहर्षया।
प्रमोदयन्नथ मुखरान्कलापिनः प्रतिष्ठते नवघनवद्रथः स्म सः॥२९

गभीरतेति। अथ गरुडागमनानन्तर स रथो नवघनवत् नवघनेन नवाम्बुदेन तुल्यं 'तेन तुल्यम्' इत्यादिना वतिप्रत्ययः। गभीरतया गाम्भीर्य्येण विजितो मृदङ्गनादो यया तया हतो रिपुहंसानां हंसानामिव रिपूणा हर्षो यया तया स्वनश्रिया ध्वनिसम्पदा मुखरान् कूजतः कलापिनो मयूरान् प्रमोदयन् प्रतिष्ठते स्म प्रतस्थे। "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्। 'लट् स्मे' इति भूते लट्। तद्धितगता श्रौती पूर्णोपमा ॥ २९ ॥

निरन्तरस्थगितदिगन्तरं ततः समुच्चलद्बलमवलोकयञ्जनः।
विकौतुकः प्रकृतमहाप्लवेऽभवद्विशृंखलं प्रचलितसिन्धुवारिणि ॥ ३० ॥

निरन्तरेति। ततो रथप्रस्थानानन्तरं निरन्तर नीरन्ध्र स्थगितानि आच्छादितानि दिगन्तराणि येन तत्। समुच्चलत् प्रतिष्ठमानं तद्बलं सैन्यम् अवलोकयन् जनो लोकः प्रकृतः प्रक्रान्तो महाप्लवो महापूरो जगत्सम्प्लवरूपो येन तस्मिन् विशृङ्खलमप्रतिघात प्रचलित क्षुभित यत् सिन्धोरब्धेर्वारि तस्मिन् विकौतुको निवृत्तकौतूहलोऽभवत्। कल्पान्तक्षुभितवारिवच्च तद्बल सकलजगत्संहाराशङ्कया अलक्ष्यतेत्यर्थः। अत्रान्यदर्शनादन्यदिदृक्षानिवृत्तेर्बलवारिधिवारिणोरेकत्वाक्षेपे बाधात् सादृश्याक्षेपात् वाक्यभेदेन प्रतिबिम्बकरणात् निदर्शनालङ्कारः ॥ ३० ॥

ववृंहिरे गजपतयो महानकाः प्रदध्वनुर्जयतुरगा जिहेषिरे।
असम्भवद्गिरिविरगह्वरैरभत्तदारवैर्दलित इव स्व आश्रयः ॥३१॥

**बबृंहिर इति।** गजपतयः बबृंहिरे बबृंहुः बृंहणं चक्रुरित्यर्थः. 'बृहि बृद्धौ शब्दे च' आत्मनेपदं चिन्त्यम्। अत एव मल्लिनाथः। 'हेषते ह्रेषतेऽश्वानां हस्तिना बृंहतीति च' इति। जहानकाः प्रदध्वनुर्जयशीलास्तुरगा जयतुरगा जिहेषिरे ह्रेषां चक्रुरित्यर्थः। 'हेषृ ह्रेषृ अव्यक्ते शब्दे'। तदा तस्मिन्काले असम्भवन्त्यन्तर्द्रातुमपर्याप्नुवन्ति गिरिवरगह्वराणि येषां तैः गिरिवरगह्वरेषु अमाद्भिः अवर्त्तमानैरित्यर्थः। स्वैर्बृंहणादिघोषैः स्व आश्रयः स्वसमवायिकारणमाकाशो दलित इव विदारित इवाभूदित्युत्प्रेक्षा। तया तेषामतितीव्रत्वं व्यज्यते ॥ ३१ ॥

**अनारतं रसति जयाय दुन्दुभौ मधुद्विषः फलदलघुप्रतिस्वनैः। विनिष्पतन्मृगपतिभिर्गुहामुखैर्गताः परां मुदमहसन्निवाद्रयः॥३२॥**

**अनारतमिति।** मधुद्विषो हरेः दुन्दुभौ रणभेर्यां जयायानारतमश्रान्तं रसति ध्वनति सति फलन्तः सक्रामन्तोऽलघवो महान्तः प्रतिस्वनाः प्रतिध्वनयो येषु तैः। विनिष्पतन्तः क्षोभान्निगच्छन्तः मृगपतयः सिंहा येभ्यस्तैर्गुहाभिरेव मुखैरद्रयः परां मुदं गताः सन्तः अहसन्निव। सिंहानां धावल्याद्ध्वनियोगाच्च हसनोत्प्रेक्षा ॥ ३२ ॥

**जडीकृतश्रवणपथे दिवौकसां चमूरवे विशति सुराद्रिकन्दराः। अनर्थकैरजनि विदग्धकामिनीरतान्तरक्वणितविलासकौशलैः॥ ३३ ॥**

**जडीकृतइति।** दिवमोको येषां तेषां दिवौकसां देवानां कन्दरान्तर्गतानामित्यर्थः। जडीकृतश्रवणपथे बधिरीकृतश्रोत्रमार्गे। सापेक्षत्वेऽपि गमकत्वात्समासः। चमूरवे सेनाघोषे सुराद्रिकन्दरा मेरुगह्वराणि विशति सति। विदग्धकामिनीनां प्रौढाङ्गनानां रतान्तरे सुरतमध्ये क्वणितविलासाः कूजितसम्पदस्तासु यानि कौशलानि तैरनर्थकैरजनि जातम्। प्रेयसां नाविर्भावादिति भावः। अत्र श्रोत्रजाड्यस्य विशेषणगत्या क्वणितानर्थक्यहेतुत्वात् काव्यलिङ्गम्। तदुपजीवितेन क्वणितानामानर्थक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३३ ॥

**अरातिभिर्युधि सहयुध्वनो हतान्जिघृक्षवः श्रुतरणतूर्यनिस्स्वनाः। अकुर्वत प्रथमसमागमोचितं चिरोज्झितं सुरगणिकाः प्रसाधनम् ॥ ३४ ॥**

**अरातिभिरिति।** सह युध्यन्त इति तान् सहयुध्वनः। "सहे च" इति क्वनिप्। अत एवारातिभिर्युधि हतान् जिघृक्षवो ग्रहीतुमिच्छवः स्वयं वरणकामाः। ग्रहेः सन्नन्तादुप्रत्ययः। सुरगणिकाः अप्सरसः श्रुतरणतूर्यनिस्स्वनाः सत्यश्चिरोज्झितं प्रायेण प्रवीरसद्भावाभावादिति भावः। प्रथमसमागमोचितम् अतिमोहनमित्यर्थः। प्राथम्यं च पुंसामिदं प्रथमत्वादिति भावः।

प्रसाधनम् अकुर्वत परिष्कृतवत्य इत्यर्थः । 'प्रतिकर्मप्रसाधनम्' इत्यमरः । अत्र स्वयवरणतूर्य्यश्रवणयोर्विशेषणगत्या प्रसाधनहेतुत्वात्काव्यलिङ्गम् ॥ ३४ ॥

**प्रचोदिताः परिचितयन्तृकर्म्मभिर्निषादिभिर्विदितयताङ्कुशक्रियैः**
**गजाः सकृत्करतललोलनालिका हतामुहुः प्रणदितघण्टमाययुः ३५**

**प्रचोदिता इति** । परिचित यन्तृकर्म सादिकृत्य यैस्तैः स्वभ्यस्तगजशास्त्रैरित्यर्थः । अत एव विदिते यताङ्कुशक्रिय यतयाताख्ये पदांङ्कुशकर्म्मणी यैस्तैः । 'पादकर्म्म यत प्रोक्तं यातमङ्कुशवारणम्' इति हलायुधः । निषादिभिर्यन्तृभिः प्रचोदिताः प्रेरिता गजाः सकृदेकवारमेव करतललोलाभिः पाणितलचलिताभिर्नालिकाभिरन्तरर्नाडिकाभिर्हतास्ताडितास्तथापि मुहुः प्रणदिता असकृत् ध्वनन्ती घण्टा यस्मिन् कर्म्मणि तत्तथा आययुः प्रस्थातुमागताः । स्वभावोक्तिः ॥ ३५ ॥

**सविक्रमक्रमणचलैरितस्ततः प्रकीर्णकैः क्षिपत इव क्षिते रजः ।**
**व्यरंसिषुर्न खलु जनस्य दृष्टयस्तुरङ्गमादभिनवभाण्डभारिणः ३६**

**सविक्रमेति** । सविक्रमेण साधिविन्यासविशेषेण क्रमणेन गमनेन चलैः प्रकीर्णकैश्चामरैः । 'चामर तु प्रकीर्णकम्' इत्यमरः । क्षितेः रजः स्वखुरोद्धतमितस्ततः क्षिपतो निरस्यत इव स्थितादित्युत्प्रेक्षा । अभिनवभाण्डभारिणः प्रत्यग्राभरणधारिणः । 'स्याद्भाण्डमश्वाभरणम्' इत्यमरः । तुरगमात्तुरगमेभ्यः जातावेकवचनम् । "जुगुप्सा विरामप्रमादार्थानामुपसख्यानम्" इत्यपादानत्वम् । जनस्य दृष्टयो न व्यरंसिषुर्न विरताः खलु । रमेर्लुङि "व्याङ्परिभ्यो रम." इति परस्मैपदम् । "यमरमनमाता सक्च" इति सगिडागमौ इटि "नेटि" इति वृद्धिप्रतिषेधः ॥ ३६ ॥

अथ विशेषकेणाह—

**चलाङ्गुलीकिसलयमुद्धतैः करैरनृत्यत स्फुटकृतकर्णतालया ।**
**मदोदकद्रवकटभित्तिसङ्गिभिः कलस्वरं मधुपगणैरगीयत ॥ ३७ ॥**

**चलेत्यादि** । स्फुट कृतः कर्णतालः कर्णताडन यया तया द्विपघटया कर्त्र्या । चलाङ्गुल्य एव किसलया यस्मिन् कर्म्मणि तत्तथोद्धतैः करैर्हस्तैरनृत्यत अनर्त्ति । भावे लङ् । तथा मदोदकेन द्रवास्वार्द्रासु कटभित्तिषु गण्डस्थलेषु सङ्गिभिरासक्तैः मधुपगणैर्भ्रमरगणैः कलस्वरं मधुरस्वरमगीयत गीतम् । भावे लङ् ॥ ३७ ॥

**असिच्यत प्रशमितपांसुभिर्मही मदाम्बुभिर्धृतनवपूर्णकुम्भया ।**
**अवाद्यत श्रवणसुखं समुन्नमत्पयोधरध्वनिगुरु तूर्य्यमाननैः ॥ ३८**

**असिच्यतेति** । धृतौ नवौ पूर्णकुम्भौ शिरःपिण्डकलशौ यया तया द्विपघटया कर्त्र्या । 'कुम्भौ घटेभमूर्द्धांशौ' इत्यमरः । प्रशमितपासुभिर्मदाम्बुभिर्मही असिच्यत सिक्ता । आननैर्मुखैः करणैः । श्रवणयोः सुखयतीति सुखं सुखकरम् । 'सुखहेतौ सुखे सुखम्' इति शब्दार्णवे ।

समुन्नमत्पयोधरध्वनिगुरु उद्यन्मेघगर्जितगम्भीरं तूर्यम् अवाद्यत वादितम् । स्वमुखबृंहणैरेव तूर्यं सम्पादितमित्यर्थः ॥ ३८ ॥

**उदासिरे पवनविधूतवाससस्ततस्ततो गगनलिहश्च केतवः ।**
**यतः पुरः प्रतिरिपु शार्ङ्गिणः स्वयं व्यधीयत द्विपघटयेति मंगलम् ॥**

**उदासिरे इति** । पवनेन विधूतवाससः कम्पितपटाः गगनलिहोऽभ्रङ्कषा केतवो ध्वजाश्च ततस्तत उदासिरे उत्क्षिप्ता इतीत्थं द्विपघटया प्रतिरिपु रिपून्प्रति । आभिमुख्येऽव्ययीभावः । यतो गच्छतः । इणो लटः शत्रादेशः । शार्ङ्गिण पुरोऽग्रे स्वयं मंगलं व्यधीयत विहितम् । अत्र श्लोकत्रये प्रस्तुतद्विपघटाविशेषणसाम्यादप्रस्तुतमङ्गलाचरणपरपुरन्ध्रीप्रतीतेः समासोक्तिरलङ्कारः ॥ ३९ ॥ विशेषकम् ।

**न शून्यतामगमदसौ निवेशभूः प्रभूततां दधति बले चलत्यपि ।**
**पयस्यभिद्रवति भुवं युगावधौ सरित्पतिर्न हि समुपैति रिक्तताम् ॥**

**नेति** । प्रभूततां भूमानं दधति दधाने बले सैन्ये चलति प्रतिष्ठमानेऽपि असौ निवेशभूः सेनानिवेशभूमिः शून्यतां रिक्ततां नागमत् । तथा हि । युगावधौ युगान्ते पयसि भुवमभिद्रवत्यभिप्लवमाने सति सरित्पतिः समुद्रो रिक्ततां न समुपैति हि । दृष्टान्तालङ्कारः ॥ ४० ॥

**यियासितामथ मधुभिद्विवस्वता जनोजरन्महिपविषाणधूसराम् ।**
**पुरः पतत्परबलरेणुमालिनीमलक्षयद्दिशमभिधूमितामिव ॥ ४१ ॥**

**यियासितामिति** । अथ मधुभिद्रविरेव विवस्वान् तेन यियासिता यातुमिष्टा जिगमिषिताम् । यातेः सन्नन्तात्कर्मणि क्तः । पततोऽतिधावतः परबलस्य शत्रुसैन्यस्य रेणून्मलते धारयतीति तन्मालिनी । मलतेर्णिनिप्रत्ययः । अत एव जरतो वृद्धस्य महिषस्य विषाणवद्धूसरां धूम्रां पुरोऽग्रे दिशमभितो धूमोऽस्याः सञ्जातस्तामभिधूमितामिव जनो लोकोऽलक्षयत् । मधुभिद्विवस्वतेति रूपकोत्थापिता अग्रदिशि धूमितत्वोत्प्रेक्षेति सङ्करः । अत्राहुः । 'अङ्गारिणी दिग्रविविप्रमुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता । प्रधूमिता यास्यति या दिनेशः शेषाः प्रशस्ताः शुभदाश्च ताः स्युः' । इति ॥ ४१ ॥

**मनस्विना मुदितगुरुप्रतिश्रुतिः श्रुतस्तथा न निजमृदङ्गनिस्स्वनः ।**
**यथा पुरः समरसमुद्यतद्विषद्बलानकध्वनिरुदकर्षयन्मनः ॥ ४२ ॥**

**मनस्विनामिति** । उदिता उत्पन्ना गुरुर्गम्भीरा प्रतिश्रुतिः प्रतिध्वनिर्यस्य सः निजमृदङ्गनिस्स्वनः स्वसेनातूर्यघोषः श्रुतः सन् तथा मनस्विनां मनो नोदकर्षयत् नाचकर्ष । कृषिरत्र स्वार्थण्यन्तः । यथा पुरोऽग्रे समरसमुद्यते समरोद्युक्ते द्विषद्बले शत्रुसैन्ये ये आनकास्तेषां ध्वनिरुदकर्षयत् । एतेनैषां वीरस्थायी महोत्साह उक्तः । अत्र भयकरस्यापि परसैन्यघोषस्योत्सा-

हननकाले महावीरेषु न विरुध्यत इति विरोधाभासोऽलङ्कारः । भीहेतौ सत्यपि भयानुत्पत्तेर्विशेषोक्तिरलङ्कारोत्पत्तेर्विषमभेदश्चेति सङ्करः ॥ ४२ ॥

यथा यथा पटहरवः समीपतामुपागमत्स हरिवराग्रतस्सरः ।
तथा तथा हृषितवपुर्मुदाकुला द्विषाञ्चमूरजनि जनीव चेतसा ४३

यथा यथेति । हरिर्वरो जामातेव हरिवरः । 'वरो जामातृवर्थयोः' इति विश्वः । तस्याग्रतः पुरतस्सरोऽग्रेसरः 'पुरोऽग्रतोऽग्रेषु सर्तेः" इति टप्रत्ययः स पूर्वोक्तः पटहरवो यथा यथा समीपतामासन्नतामुपागमत् । तथा तथा तावत्तावद्द्विषतां चमूर्जनीव वधूरिव । 'जनी सीमन्तिनीवधू" इति विश्वः । चेतसा मुदाकुला आनन्दाविला हृषितवपू रोमाञ्चिताङ्गी 'हृषेर्लोमसु' इतीडागमः । अजनि जाता । जने कर्तरि लुङ् "दीपजन" इत्यादिना चिण्प्रत्ययः । वधूवरसमागमवत् प्रतिद्वन्द्विसमागमो महोत्साहवर्द्धनो वीरसेनाया इत्युपमार्थः । तेन सैन्ययोरन्योऽन्यशब्दश्रवणकारिणी प्रत्यासत्तिरासीदिति व्यज्यते ॥ ४३ ॥

प्रसारिणी सपदि नभस्तले ततःसमीरणभ्रमितपरागरूषिता ।
व्यभाव्यत मलयजकालिकाकृतिर्विदूरतःप्रतिबलकेतनावलिः ४४

प्रसारिणीति । ततः श्रवणानन्तरं सपद्यविलम्बेन नभस्तले प्रसारिणी व्याप्ता समीरणेन वायुना भ्रमितेन परागेण रूषिता रूक्षीकृता अत एव मलयजायाः कल्पान्तप्रादुर्भूताया कालिकाया महाकाल्या आकृतिरिवाकृतिर्यस्याः सा । प्रतिबले प्रतिपक्षसैन्ये केतनावलिर्ध्वजपङ्क्तिर्विदूरतो दूरादलक्ष्यत । एतावता प्रत्यासत्तिरासीदित्यर्थः । उपमालङ्कारः ॥ ४४ ॥

क्षणेन च प्रतिमुखतिग्मदीधितिप्रतिप्रभास्फुरदसिदुःखदर्शना ।
भयङ्करा दृशमपि दर्शनीयतां ययावसावसुरचमूश्च भूभृताम् ४५॥

क्षणेनेति । प्रतिमुखस्याभिमुखस्य तिग्मरश्मेः उष्णांशोः प्रतिप्रभाभिः प्रतिफलितदीप्तिभिः स्फुरद्भिर्देदीप्यमानैरसिभि खड्गैर्दुःख दुष्करं दर्शनं यस्याः सा दुर्दर्शेत्यर्थः असावसुरचमूश्चैवमेना क्षणेन च भूभृतां हरिसैनिकानां भृशं भयं करोतीति भयङ्करापि । "मेघर्तिभयेषु कृञः' इति खच्प्रत्ययः । दर्शनीयतां मनोहरतामिति विरोधः । दृष्टिविषयतां ययावित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः ॥ ४५ ॥

पयोमुचामभिपततां दिवि द्रुतं विपर्य्ययः पतित इवातपस्य सः । समक्रमः समविषमेष्वथ क्षणात् क्ष्मातलं बलजलराशिराननशे ॥ ४६ ॥

पयोमुचामिति । अथासुरसेनादर्शनानन्तरं समविषमेषु निम्नोन्नतेषु समक्रमस्तुल्यसञ्चारः बलजलराशिः सैन्यसागरः दिवि व्योम्नि द्रुतमभिपततामभिधावतां पयोमुचां सम्बन्धी

आतपस्य विपर्य्ययः छायेव परित क्षणात् क्षमातलं भूतल आनशे । 'अशू व्याप्तौ' "अत आदे." इत्यभ्यासदीर्घ. । "अश्नोतेश्च" इति नुमागमः । उपमालङ्कारः ॥ ४६ ॥

**ममौ पुरः क्षणमिव पश्यतो महत्तनूदरस्थितभुवनत्रयस्य तत् । विशालतां दधति नितान्तमायते बलं द्विषां मधुमथनस्य चक्षुषि ॥ ४७ ॥**

**ममाविति** । पुरोऽग्रे क्षणमिव पश्यत क्षणमात्र विलोकयत । इवशब्दो वाक्यालङ्कारे । तनौ क्षोदीयस्युदरे कुक्षौ स्थित भुवनत्रयं यस्य तस्य मधुमथनस्य हरेः सम्बन्धिनि विशालता वैपुल्य दधति दधाने नितान्तमायते दीर्घे द्राघीयसि चक्षुषि महत् द्विषा बलं ममौ ववृते । क्षणमीक्षणादेव परबले इयत्ता परिचिच्छेदेत्यर्थ । क्षोदीयस्यपि कुक्षौ भुवनत्रय परिच्छिन्दत. हरेरतिमहति चक्षुषि अल्पबलपरिच्छेद· कियानिति भाव । अत्र भुवनत्रयापेक्षयाधारस्य कुक्षेरल्पत्वाच्चक्षुरपेक्षयाधेयस्य बलस्याल्पत्वाच्चाधिकालङ्कारौ सङ्कीर्य्येते ॥ ४७ ॥

**भृशस्विदः पुलकविकाशिमूर्तयो रसाधिके मनसि निविष्टसाहसाः । मुखे युधः सपदि रतेरिवाभवन् ससम्भ्रमाः क्षितिपचमूवधूगणाः ॥ ४८ ॥**

**भृशेति** । क्षितिपचम्वो वध्व इवेत्युपमितसमास । गतेरिवेति लिङ्गात् । तासा गणाः युधो मुखे युद्धारम्भे रतेर्मुखे रत्यारम्भ इव सपदि भृश स्विद्यन्तीति भृशस्विदः क्विप् । पुलकविकाशिमूर्तयो रोमाञ्चोदाञ्चितगात्रा· रस वीर शृङ्गारश्च तेनाधिके निर्भरे मनसि निविष्टसाहसा प्रविष्टधार्ष्ट्या. ससम्भ्रमा सत्वराश्चाभवन् । यादृशी वधना सुरतरसकर्मण्युत्कण्ठा तादृशी चमूना समरकर्म्मणीत्युपमार्थः । तेनैतासा समरसुरतयो समरसत्व व्यज्यते ॥ ४८ ॥

**ध्वजांशुकैर्ध्रुवमनुकूलमारुतप्रसारितैः प्रसभकृतोपहूतयः । यदूनभिद्रुततरमुद्यतायुधाः क्रुधा परं रयमरयः प्रपेदिरे ॥ ४९ ॥**

**ध्वजांशुकैरिति** । अरय चैद्यरक्षा अनुकूलमारुतेन प्रसारितै ध्वजांशुकैर्ध्रुव प्रसभेन बलात्कारेण कृतोपहूतयः कृताह्वाना इवेत्यर्थ । यदून् अभि यादवान् प्रति द्रुततरमुद्यतायुधाः उत्क्षिप्तायुधा· सन्त· क्रुधा क्रोधेन परम् अधिक त्वरा प्रपेदिरे । ध्वजांशुकदर्शनोत्थक्रोधहेतुकस्य शीघ्राभिपातस्य ध्वजाह्वानहेतुकत्वमुत्प्रेक्ष्यते ध्रुवमिति ॥ ४९ ॥

**हरेरपि प्रति परकीयवाहिनीरधिस्यदम्प्रववृतिरे चमूचराः । विलम्बितुं न खलु स हामनस्विनो विधित्सतःकलहमवेक्ष्य विद्विषः**

**हरेरिति** । हरेरपि चमूषु चरन्तीति चमूचरा सैनिकाः । चरेष्टः । परेषामिमाः परकीयाः वाहिनी. सेनाः प्रति अधिस्यदम् अधिकस्यं यथा तथा । 'रहस्तरसी तु स्यः स्यद. '

इत्यमरः। प्रववृतिरे प्रवृत्ताः। तथा हि मनस्विनो धीराः कलह युद्धं विधित्सतः विधातुमिच्छतः दधातेः सन्नन्ताल्लटः शतरि रूपम्। तान् विद्विषः शत्रून् अवेक्ष्य विलम्बितुम्। "शकधृष" इत्यादिना तुमुन्प्रत्ययः। सहन्ते इति सहाः क्षमाः। पचाद्यच्। न खलु। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ९०॥

**उपाहितैर्वपुषि निवातवर्मभिः स्फुरन्मणिप्रसृतमरीचिसूचिभिः।**
**निरन्तरं नरपतयो रणाजिरे रराजिरे शरनिकराचिता इव॥९१॥**

**उपाहितैरिति**। रणाजिरे रणाङ्गणे नरपतयो राजानो वपुषि उपाहितैरामुक्तैः स्फुरन्तो मणिप्रसृता रत्ननिर्गता मरीचय एव सूचयो येषां तैः निवातवर्मभिः अच्छिद्रकञ्चुकैः। 'निवातो दृढसन्नाहे निर्वाते चाश्रयेऽपि च' इति विश्वः। 'तनुत्रं वर्म कञ्चुकम्' इत्यमरः। निरन्तरं नीरन्ध्रं शरनिकरैराचिताः प्रोता इव रराजिरे। "फणां च सप्तानाम्" इति विकल्पादेत्वाभ्यासलोपाभावः। मणिरोचिषः सादृश्याच्छरनिकरत्वोत्प्रेक्षा॥ ९१॥

**अथोच्चकैर्जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति।**
**बलैश्चलच्चरणविधूतमुच्चरद्घनावलीरुदचरत क्षमारजः॥९२॥**

**अथेति**। अथानन्तरम् उच्चकैरुन्नत जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति जीर्णपारावतकन्धरारोमनिकरधूसरच्छायमित्युपमा। 'पारावत कलरवः कपोतः' इत्यमरः। बलैः सैन्यैश्चलद्भिश्चरणैर्विधूतमुद्धूत मरित सदुच्चरदुत्पदत् क्षमारजो भूरेणुर्घनावलीर्घनपङ्क्तीरुदचरत प्रचक्रामेत्यर्थः। "उदश्चरः सकर्मकात्" इत्यात्मने पदम्। अस्य प्रत्युदाहरणमुच्चरदिति। अत्र भूरेणोर्मेघमण्डलाक्रमणासंबन्धेऽपि सबन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा॥ ९२॥

**विषङ्गिभिर्भृशमितरेतरं क्वचित्तुरङ्गमैरुपरिनिरुद्ध निर्गमाः।**
**चलाचलैरनुपदमाहताः खुरैर्विबभ्रमुश्चिरमध एव धूलयः॥९३॥**

**विषङ्गिभिरिति**। चलाचलैश्चटुलैः खुरैरनुपद प्रतिपदम् आहताः उद्धताः भृशमितरेतर परस्परम्। निरन्तरमिति पाठे अभितो निरन्तर नीरन्ध्र विषङ्गिभिर्मिथः श्लिष्टैस्तुरङ्गमैरुपरि निरुद्धो निर्गमो यासां ताः धूल्यः क्वचित् चिरमध एव विबभ्रमुर्नोत्पेतुरिति भावः। अत्रोद्धतानाम् अधोभ्रमणविरोधस्योपरि निर्गमरोधेन विशेषणगत्या परिहारात्काव्यलिङ्गसङ्कीर्णो विरोधाभासोऽलङ्कारः॥ ९३॥

**गरीयसः प्रचुरमुखस्य रागिणो रजोऽभवद्व्यवहितसत्त्वमुत्कटम्।**
**सिसृक्षतः सरसिजजन्मनो जगद्बलस्य तु क्षयमपनेतुमिच्छतः॥९४॥**

**गरीयस इति**। गरीयसः सर्वलोकपितामहत्वात्पूज्यतरस्य अन्यत्र महत्तरस्य। प्रचुरमुखस्य, चतुर्मुखस्येत्यर्थः। अन्यत्र बहुप्रवाहस्य रागिणो रक्तवर्णस्य अन्यत्र रणे रागिणोऽ-

नुरागवतः एवम्भूतस्य सरसिजजन्मनो ब्रह्मणो जगत्सिसृक्षतः जगत् स्रष्टुमिच्छतः सतः । सृजेः सन्नन्तात्लटः शत्रादेशः । व्यवहितसत्त्व तिरस्कृतसत्त्वगुणकम् अन्यत्र तिरोहितजन्तुक रजो रजोगुणो रेणुश्चोत्कटमुद्भिक्तमभवत् । बलस्य सैन्यस्य तु जगत्क्षयमपनेतुमिच्छतः सतोऽभवत् । अत्र ब्रह्मबलयोर्गरीयस्त्वादिसाधर्म्येऽपि रजश्शब्देन एकस्य सिसृक्षोरन्यस्य संजिहीर्षोरिति व्यतिरेकः श्लेषोत्थापित इति सङ्करः ॥ ५४ ॥

पुरा शरक्षतिजनितानि संयुगे नयन्ति नः प्रसभमसृञ्जि पङ्कताम् ।
इति ध्रुवं व्यलगिषुरात्तभीतयः खमुच्चकैरनलसखस्य केतवः ॥ ५५ ॥

पुरेति । सयुगे युद्धे सति शरक्षतिजनितानि क्षतजानि असृञ्जि रुधिराणि नोऽस्मान् प्रसभ प्रसह्य पङ्कतां पुरा नयन्ति नेष्यन्ति । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । इतीत्थमालोच्य ध्रुवमात्तभीतयः प्राप्तभयाः सन्तोऽनलसखस्याग्निमित्रस्य वायोः केतवो रेणवः तल्लिङ्गत्वात्तस्येति भावः । उच्चकैरुन्नत खमाकाश व्यलगिषुः वियदारूढा इत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् ॥ ५५ ॥

क्वचिल्लसद्घननिकुरम्बकर्बुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः ।
क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरक्षतक्षितितलरेणुरुद्ययौ ॥ ५६ ॥

क्वचिदिति । क्वचिल्लसन् घननिकुरम्बस्याभ्रपटलस्येव कर्बुरः शबलः । क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः कनकचूर्णराशिकपिशः । क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरैः क्षतस्य क्षितितलस्य रेणुरुद्ययौ उज्जगाम । अत्रोपमात्रयस्य संसृष्टिः ॥ ५६ ॥

महीयसां महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणी ।
विसारितामजिहत कोकिलावलीमलीमसा जलदमदाम्बुराजयः ॥ ५७ ॥

महीयसामिति । महति अनीकजे सेनासमुत्थे रजसि महीयसां दिगन्ता एव दन्तिनः तेषां मुखानि पुरोभागा एव मुखान्याननानि इति श्लिष्टरूपकम् । तेष्वनुषङ्गिणि लग्ने सति । कोकिलावलीवन्मलीमसा मलिना जलदा दिङ्मुखसङ्गिन एव ये मेघास्त एव मदाम्बु राजयो मदरेखाः विसारिता प्रसृमरत्वमजिहत अगच्छन् । प्राप्ता इत्यर्थः । पांसुपातस्य दन्तिनां मदहेतुत्वादिति भावः । तदुक्तं महाभारते । 'स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः । कुञ्जराः पांसुवर्षेण ब्राह्मणाः परनिन्दया' इति । दिगन्तलम्बिनो मेघाः सेनारजोमेलनाद्बहुलीबभूवुरित्यर्थः । अत्र दिगन्तेषु तन्मेघेषु च दन्तित्वतन्मदत्वरूपणात् समस्तवस्तुवर्ति सावयवरूपकं मुखमेव मुखमिति श्लिष्टपरम्परितमिति सङ्करः । अजिहतेति ओहाङो लङि तङ् "श्नाभ्यस्तयोरातः" इत्याकारलोपः "अदभ्यस्तात्" इत्यदादेशः ॥ ५७ ॥

शिरोरुहैरलिकुलकोमलैरमी मुधा मृधे मृषत युवान एव मा ॥
बलोद्धतं धवलितमूर्द्धजानिति ध्रुवञ्जनाञ्जरत इवाकरोद्रजः ॥ ५८ ॥

शिरोरुहैरिति । अलिकुलकोमलैः भ्रमरवृन्दमनोरमैः । शिरोरुहैः केशैरुपलक्षिता अमी राजानो युवान एव मुधा वृथा मृधे युद्धे 'मृधमास्कन्दनम्' इति युद्ध पर्यायेषु अमरः । मा मृषत न म्रियन्ताम् म्रियतेर्माङि लुङि "न माङ्योगे" इत्यडभावः, "उश्च" इति सिचः कित्वान्न गुणः । इतीत्थमालोच्येत्यर्थः । बलोद्धत रजः कर्तृ । धवलितमूर्द्धजान् धवलीकृतकेशान् जनान् जरत इवाकरोत् । वृद्धानिवाकरोदित्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् । अत्रेवशब्दस्यावधारणार्थत्वान्न तेन पौनरुक्त्यम् । 'इवौपम्येऽवधारणे' इति विश्वः । 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः । जीर्य्यतेरतृन्" इति अतृन् प्रत्ययः ॥ ५८ ॥

**सुसंहतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिरसंशयम्परैः ।**
**यतः क्षितेरवयवसम्पदोऽणवस्त्विषान्निधेरपि वपुरावरीषत ॥५९॥**

सुसंहतैरिति । धाम तेजो दधदपि दधानोऽपि तेजस्व्यपीत्यर्थः परैरन्यैः सुसंहतैः सुसङ्गतैः परैरैक्यङ्गतैश्च बहुभिः तिरस्कृतिं नीयते । असशयं निश्चितम् अर्थाभावेऽव्ययीभावः । कुतः । यतः अणवः सूक्ष्माः क्षितेरवयवसम्पदो रेणुसमृद्धयः त्विषां निधेः सूर्य्यस्यापि वपुरावरीषत आच्छादितवन्तः । वृञो लुङि "वतो वा" इति इटो दीर्घः । विशेषेण सामान्यसमर्थनं रूपोऽर्थान्तरन्यासः ॥ ५९ ॥

**द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोऽवगुण्ठितम् ।**
**युगक्षयक्षणनिरवग्रहेजगत्पयोनिधेर्जल इव मग्नमाबभौ ॥ ६० ॥**

द्रुतेति । द्रुत शीघ्र द्रवता धावता रथाना चरणैश्चक्रैः क्षतात् क्षुण्णात् क्षमातलादुल्लसता पतता बहुलेन सान्द्रेण रजसावगुण्ठितमाच्छादित जगद्युगक्षयक्षणे कल्पान्तकाले निरवग्रहे निष्प्रतिबन्धे पयोनिधेर्जले मग्नमिवाबभावित्युत्प्रेक्षा ॥ ६० ॥

**समुल्लसद्दिनकरवक्त्रकान्तयो रजस्वलाः परिमलिताम्बरश्रियः ।**
**दिगङ्गनाः क्षणमविलोकनक्षमाः शरीरिणांपरिहरणीयतां ययुः ६१॥**

समुल्लसदिति । समुल्लसन्ती दिनकरस्येव वक्त्रस्य कान्तिर्यासां ताः रजो रेणुरेव रज आर्त्तवमासामस्तीति रजस्वलाः । "रजःकृष्यासुतिपरिषदः" इत्यादिना मत्वर्थीयो वलच्प्रत्यय. । धूलिधूसराः उदक्याश्च परिमलिताः परितः सञ्जातमला अम्बरस्याकाशस्येवाम्बरस्य वस्त्रस्य च श्रीर्यासां ताः । अत एवाविलोकनक्षमा विलोकानानर्हाः दिशः एवाङ्गना दिगङ्गनाः शरीरिणां प्राणिना क्षणमीषत्काल परिहरणीयतामगम्यतां ययुः । तस्मान्मरुद्वासस न सविशेदेवेत्यादिनिषेधादिति भावः । श्लिष्टपरम्परितरूपकम् ॥ ६१ ॥

**निरीक्षितु वियति समेत्य कौतुकात्पराक्रमं समरमुखे महीभृताम् ।**
**रजस्ततावनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणैः पलाय्यत ६२**

**निरीक्षितुमिति** । त्रिदशगणैर्देवगणैः समरमुखे रणारम्भे महीभृता राज्ञां प्रपाक्रम निरीक्षितुं वियति कौतुकात्समेत्य रजस्ततौ रजस्तोमे न निमिषन्त्यनिमिषाणि पक्ष्मपातरहितानि । मिषे. पचाद्यच् कुटादित्वान्न गुणः । तेषां लोचनोत्पलानां व्यथाकृति दुःखकारिण्यां सत्याम् । कृञः क्विप् । पलाय्यत अधाव्यत । भावे पराघूर्वादयतेर्लङि तङ्, "उपसर्गस्यायतौ" इति रेफस्य लत्वम् । अत्र लोचनोत्पलानां व्यथाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ६२ ॥

**विषंगिणि प्रतिपदमापिबत्यपो हताचिरद्युतिनि-समीरलक्ष्मणि ।**
**शनैःशनैरुपचितपङ्कभारिकाः पयोमुचः प्रययुरपेतवृष्टयः॥ ६३॥**

**विषंगिणीति** । विषंगिणि विषक्ते अत एव हताचिरद्युतिनि विरमिताचिरद्युतिनि समीरलक्ष्मणि वातकर्तौ रजसि प्रतिपदं प्रतिक्षणम् आपोऽम्भांसि आपिबत्याकर्षति सति अतएव अपेतवृष्टयो निवृत्तवर्षा पयोमुचः । उपचिताः प्रवृद्धिताः पङ्कभारिकाः पङ्कभरणानि येषां ते उपचितपङ्कभारिकाः सन्तः । "पर्यायार्हणोत्पत्तिषु ण्वुच्" इत्यर्हणार्थे ण्वुच् प्रत्ययः । अर्हणं च कारणसामर्थ्यम् । अतएव मारात्छनैःशनैः प्रययुः प्राप्ताः । अत्र पयोमुचां पङ्कभरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

**नभोनदीव्यतिकरधौतमूर्त्तिभिर्वियद्गतैरनधिगतानि लेभिरे ।**
**चलच्चमूतुरगखुराहतोत्पतन्महीरजः स्नपनसुखानि दिग्गजैः॥ ६४॥**

**नभोनदीति** । नभोनदीव्यतिकरेणाकाशगङ्गाया अवगाहेन धौतमूर्तिभिः क्षालिताङ्गैः वियद्गतैः खेचरैः अतएव दिग्गजैरनधिगतानि अननुभूतचराणि चलद्भिश्चमूतुरगखुरैराहतम् अत एवोत्पतदुद्गच्छत् महीरजस्तेन स्नपनमभिषेचनं तेन यानि सुखानि तानि लेभिरे । कुञ्जराः पांसुवर्षेणेत्युदाहृतम् । अत्रापि दिग्गजानां रजःस्नपनासम्बधेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६४ ॥

**गजव्रजाक्रमणभरावनम्रया रसातलं यदखिलमानशे भुवा ।**
**नभस्तलं बहुलतरेण रेणुना ततोऽगमत्त्रिजगदिवैकतां स्फुटम् ६५**

**गजेति** । यद्यस्माद्गजव्रजानाम् आक्रमणभरेण । पादक्षेपगौरवेणावनम्रया भुवाखिलं रसातलं पातालमानशे व्याप्तम् यद्यस्माच्च नभस्तलं बहुलतरेण रेणुनानशे ततः कारणात् त्रिजगत् जगत्त्रयम् । "तद्धितार्थे" इत्यादिना समाहारे द्विगुः "द्विगुरेकवचनम्" । एकतां भूलोकतामिवागमत् स्फुटमित्युत्प्रेक्षायाम् ॥ ६५ ॥

**समस्थलीकृतविवरेण पूरिता महीभृतां बलरजसा महागुहाः ।**
**रहस्त्रपाविधुरवधूरतार्थिनां नभःसदामुपकरणीयतां ययुः ॥ ६६ ॥**

**समेति** । समस्थलीकृतानि विवराणि निम्नस्थानानि येन तेन बलरजसा पूरिताः महीभृतां भूधराणां महागुहाः । रहो रहसि । अत्यन्तसंयोगे द्वितीया । त्रपया विधुराणां विलक्षणानां

वधूना रत सुरतमर्थयन्त इति तदार्थिना नभ सदा सुराणाम् उपकरणीयतामुपकारकत्व ययु । तासा रजःशृङ्गारतुंसामर्थ्यकरणत्वादिति भाव. । "कृत्यल्युटो बहुलम्" इत्यनीयर कर्त्रर्थता । अत्र रजःप्रागल्भ्य विशेषणगत्योपकारकहेतुत्वात् काव्यलिङ्गभेदस्तथोपकारकत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरिति सङ्करः ॥ ६६ ॥

**गते सुखच्छदपटसादृशीन्दृशः पथस्तिरोदधति घने रजस्यपि ।**
**मदानिलैरधिगतचूतगन्धिभिर्द्विपाद्विपानभिययुरेव रंहसा ॥६७॥**

**गतइति** । छाद्यतेऽनेनेति छदः मुखस्य छदो मुखच्छद । "पुसि सज्ञाया घ प्रायेण" इति घप्रत्यय, "छादेर्घेऽद्व्युपसर्गस्य" इति ह्रस्वः । स चासौ पटश्च तत्सादृशीं तत्सादृश्यम् । ब्राह्मणादित्वात् ष्यञ्प्रत्यये "षिद्गौरादिभ्यश्च" इति ङीष् स च 'ष्यञः षित्करणादीकारो बहुलम्' इति वामनवचनाद्वैकल्पिकः गते प्राप्ते । गजाना युद्धपूर्वकाले मुखावरणकारणात् तत्सदृशे घने सान्द्रे रजसि दृशो दृष्टेःपथो मार्गान्तिरोदधति छादयति सत्यपि अधिमधो अधिकमकरन्दस्य चूतस्येव गन्धो येषा तैः । "उपमानाच्च" इति गन्धस्येत्वे तदेकान्तग्रहण तु व्यभिचारि । मदानिलैरभिज्ञानैर्द्विपा गजा द्विपान् गजान् प्रति रहसा वेगेनाभिययुरेव । अत्र तिरोहितदृष्टेरभियानविरोधस्य मदानिलै. परिहाराद्विरोधाभासोऽलङ्कार. ॥ ६७ ॥

**मदाम्भसा परिगलितेन सप्तधा गजाजनः शमितरजश्चयानधः ।**
**उपर्यवस्थितघनपांसुमण्डलानलोकयत्ततपटमण्डपानिव ॥६८॥**

**मदाम्भसेति** । सप्तधा । "करात्कटाभ्या मेढ्राच्च नेत्राभ्या च मदश्रुति." इति पालकाप्ये । सप्तभि. स्रोतोभि परिगलितेन श्रुतेन मदाम्भसा अधःशमितोरजश्चयो यैस्तान् उपर्यवस्थितानि तथैव स्थितानि घनानि सान्द्राणि पासुमण्डलानि पूर्वोत्थरजःपुञ्जा येषा तान् गजान् जनो लोकस्तता उपरि वितता पटमण्डपाः येषा तानिवेत्युत्प्रेक्षा अलोकयत् ॥ ६८ ॥

**अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृतस्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामभिः ॥ वर्षन्तः शममानयन्नुपलसच्छृङ्गारलेखायुधाःकाले कालियकायकालवपुषः पांसून्गजाम्भोमुचः ॥ ६९ ॥**

**इति श्रीमाघकविकृते शिशुपालवधे महाकाव्ये यदुवंशक्षोभणं नाम सप्तदशः सर्गः ॥ १७ ॥**

**अन्यूनेति** । अन्यूनोन्नतयो महोच्छ्रायाः अतिमात्रपृथवोऽत्यन्तविपुलाः अत एव पृथ्वीधरश्रीभृतः शैलशोभाधारिण इति निदर्शनालङ्कारः । कनकावलीभिरावरणहेतुहेमराजिभिः करणैः सुदाम्ना पर्वतेनैकदिशः सौदामिन्यो विद्युतः । "तेनैकदिक्" इत्यणुप्रत्यये ङीप् । ताभिर्दामभिरिव सौदामिनीदामभिर्विद्युल्लताभिः उपमा सादृश्य तन्वन्तः । 'तडित्सौदामिनी विद्युत्' इत्यमरः । 'अतुलोपमाभ्याम्' इति सदृशवचनस्यैव निषेधादिह सादृश्यवाचित्वात्तृतीया । उपलसन्त. शृङ्गाराः सिन्दूरादिमण्डलान्येव लेखायुधानि सुरधनूंषि येषां ते तथोक्ताः । 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने । लेखो लेख्ये सुरे' इति च विश्वः । कालियस्य कालियनागस्य कायवत्कालवपुषः कृष्णदेहाः । गजा एव अम्भोमुचो मेघाः काले योग्यकाले वर्षन्तो मदाम्बु मुञ्चन्तः पांसून् शम शान्तिम् अनयन् प्रापयन् । रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तमुक्तम् ॥ ६९ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशः सर्गः ।

अथाग्रिमसर्गे तुमुलयुद्धवर्णनाय सेनयोर्मेलन तावदाह—

**संजग्माते तावपायानपेक्षौ सेनाम्भोधी धीरनादौ रयेण ।**
**पक्षच्छेदात्पूर्वमेकत्र देशे वाञ्छन्तौ वा विन्ध्यसह्यौ निलेतुम् ॥ १ ॥**

**संजग्माते इति** । अपायोऽपगमो युद्धादपसरण तस्यानपेक्षौ तमनिच्छन्तौ युद्धानिवर्तिनावित्यर्थः । ईक्षतेः पचाद्यचि नञ्समासः । धीरनादौ गम्भीरघोषौ तौ सेनाम्भोधी सेनासागरौ । पक्षच्छेदात्पूर्वं पश्चादसंभवादिति भावः । एकत्र देशे एकस्थाने निलेतु वस्तुम् । लीङ् गताविति धातोस्तुमुन्प्रत्यये गुण. । वाञ्छन्ताविच्छन्तौ सह्यविन्ध्यौ वा सह्यविन्ध्याख्यौ पर्वताविव । 'वा स्याद्विकल्पोपमयोः' इति विश्व । सञ्जग्माते मिलितवन्तौ । संपूर्वाद्गच्छतेरकर्मकाल्लिटि 'समो गम्यृच्छि' इत्यादिना आत्मनेपदम् । अत्र सह्यविन्ध्ययोः सपक्षयोरप्येकत्रमेलनस्याप्रसिद्धस्य संभावनामात्रेणोक्तत्वादुपमानाप्रसिद्धेर्नोपमा किं तूत्प्रेक्षेति संक्षेपः । अस्मिन्सर्गे शालिनीवृत्तम् । "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति लक्षणात् ॥ १ ॥

सेनाम्भोधी सञ्जग्माते इत्युक्त तत्सङ्गतिप्रकार तावद्वर्णयति—

**पत्तिः पत्तिं वाहमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् ।**
**इत्थं सेना वल्लभस्येव रागादङ्गेनाङ्गम्प्रत्यनीकस्य भेजे ॥ २ ॥**

**पत्तिरिति** । पत्तिः पदाति. पत्ति पदातिम् । 'पदातिपत्तिपदगपादातिकपदाजयः' इत्यमरः एयाय प्राप आङ्पूर्वादिणो लिट् । वाज्यश्वो वाहमश्वमेयाय । 'वाजिवाहार्वगन्धर्वा' इत्यमरः । नागो गजो नागम् एयाय । स्पन्दनस्थो रथस्थमेयाय । न तु व्युत्क्रमेण धर्म्मयुद्धत्वा- दिति भाव. । इत्थमुक्तरीत्या सेना रागाद्रणरागात् रतिरागाच्च अङ्गेन स्वाङ्गेन पत्त्यादिना करचरणादिना च वल्लभस्य प्रियतमस्येव प्रत्यनीकस्य प्रतिबलस्य । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । अङ्गं पत्त्यादिकं करचरणादिकं च भेजे । यथा कान्ता कान्तस्योरुमूरुणा कर करेण मुखं मुखेन भजति तथा सेना प्रतिसैन्यस्य पत्ति पत्तिना अश्वमश्वेनेत्यादि क्रमेण न तु व्युत्क्रमेणेत्यर्थः । वल्लभस्येवेत्युपमया समरसुरतयो. समर- सत्व व्यज्यते ॥ २ ॥

**रथ्याघोषैर्बृंहणैर्वारणानामैक्यं गच्छन्वाजिनां हेषया च ।**
**व्योमव्यापी सन्ततं दुन्दुभीनामव्यक्तो भूदीशितेव प्रणादः॥३॥**

**रथ्येति** । सतत व्योमव्यापी गगनस्पृक् । अन्यत्र सर्व्वगत इत्यर्थः । दुन्दुभीनां रणभे- रीणा प्रणादो महाघोषः । "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् । रथाना समूहो रथ्या । 'त्रिषु द्वैपाद्यो रथ्या रथकट्या रथव्रजे' इत्यमरः । 'खलगोरथात्' इति यत्प्रत्ययः । समूहार्थे । तासा घोषैः वारणाना बृंहणैः कण्ठघोषैः । 'बृंहण गजगर्ज्जितम्' इति वैजयन्ती । वाजिनामश्वाना हेषया हेषणेन च । 'हेषा ह्रेषा च निस्वने' इत्यमरः । "गुरोश्च हलः" इत्य- प्रत्यये टाप् । ऐक्य मेलन गच्छन् । अन्यत्र तत्त्वम्पदार्थशोधनादद्वितीयता गच्छन् । ईशिता ईशयिता ईश्वरत्वोपाधिमान् परमात्मेव । ईशस्तृच् । अव्यक्तोऽभूत् अय दुन्दुभिघोष इति दुर्भेदो बभूव अन्यत्र जीवेश्वरोपाधिविलयादयमीश्वरोऽय जीव इति भेदरहितोऽभूदित्यर्थः । अत्रै- क्यमगनस्य विशेषणगत्या अव्यक्तहेतुत्वात्काव्यलिङ्गमुपमाङ्गमिति सङ्करः ॥ ३ ॥

**रोषावेशाद्गच्छतां प्रत्यमित्रं दूरोत्क्षिप्तस्थूलबाहुध्वजानाम् ।**
**दीर्घास्तिर्य्यग्वैजयन्तीसदृश्यः पादातानां भ्रेजिरे खड्गलेखाः ४**

**रोषावेशादिति** । रोषावेशात् प्रत्यमित्रमभिशत्रुम् । आभिमुख्येऽव्ययीभावः गच्छतां धावतां द्रवतां दूरादुत्क्षिप्ताः उद्यताः स्थूलाः पीवराः बाहुध्वजा ध्वजस्तम्भा इव बाहवो येषा तेषां पादाताना पादातिसमूहानाम् । 'पादातं पत्तिसहतिः, इत्यमरः, । "भिद्भिदादिभ्योऽङ्" तिर्य्यग्दीर्घाः तिर्य्यगायता इत्यर्थः । लेखा इव खड्गाः खड्गलेखाः वैजन्तीसदृश्यः पताकासदृश- सत्य इत्यर्थः । 'वैजयन्ती पताका स्यात्' इत्यमरः । "सामानान्ययोश्च" "क्स् च वक्तव्यः" । इति समानशब्दोपपदाद्दृशेः कञ्प्रत्यय. । दृग्दृशवतुषु" इति समानस्य सभावः । भ्रेजिरे रेजिरे । 'भ्राजृ दीप्तौ' इति धातोः कर्त्तरि लिट् "फणा च सप्तानाम्" इति विकल्पादेत्वाभ्यासलोपौ । आर्थीयमुपमा ॥ ४ ॥

**वर्ध्रीबद्धा धौरितेन प्रयातामश्वीयानामुच्चकैरुच्चलन्तः ।**
**रौक्मा रेजुः स्थासका मूर्तिभाजो दर्पस्येव व्याप्तदेहस्य शेषाः ५**

**वध्रेति** । धौरितेन धौरिताख्येन गतिविशेषेण प्रयाता धावताम् । यातेर्लटः शत्रादेशः । अश्वीयानामश्वसमूहानाम् । "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" इति छप्रत्ययः । उच्चकैरुच्चलन्तो गतिवशादूर्ध्वमुत्पतन्तः । वर्द्धन्ते इति वर्ध्राणि पर्याणबन्धनवस्त्रा । 'वर्ध्रं त्रपुवरत्रयोः' इति विश्वः । 'वृधुवचित्रपिभ्यो रन्' इति रन्प्रत्ययः । लघूपधगुणो रपरः । तैर्बद्धा स्थापिता रौक्माः सौवर्णाः स्थासकाः बुद्बुदाकारमण्डलानि व्याप्तदेहस्य सर्वाङ्गीणस्य मूर्तिभाजो मूर्तिभृतः दर्पस्यान्तरस्य तेजसः शेषा अन्तरमानाद्बहिर्निर्गता अतिरेका इव रेजुरित्युत्प्रेक्षा ॥ ५ ॥

**सान्द्रत्वक्कास्तल्पलाश्लिष्टकक्षा आङ्गीं शोभामाप्नुवन्तश्चतुर्थीम् ।**
**कल्पस्यान्ते मारुतेनोपनुन्नाश्चेलुश्चण्डं गण्डशैला इवेभाः ॥ ६ ॥**

**सान्द्रेति** । सान्द्रत्वक्काः सान्द्रवर्माणः । शपिकः कप्रत्ययः । तल्पलाः पृष्ठवंशाः तेषु श्लिष्टाः कक्षाः मध्यबद्धवरत्रा येषां ते । 'दूष्या कक्ष्या वरत्रा स्यात्' इत्यमरः । गजानां विंशत्युत्तरशतायुषां द्वादश दशा भवन्ति । तत्र चतुर्दशारूढा प्राङ्गशोभा तदेवाह । अथ चतुर्थीमाङ्गीं शारीरीं शोभामाप्नुवन्तः चत्वारिंशद्वर्षदेश्या इत्यर्थः । इभाः गजाः कल्पस्यान्ते मारुतेनोपनुन्ना प्रलयमारुतप्रेरिता गण्डशैला स्थूलोपला इव चण्डं तीव्रं चेलुः प्रतस्थिरे इत्युपमा ॥ ६ ॥

**संक्रीडन्ती तेजिताश्वस्य रागादुद्यम्यारामग्रकायोत्थितस्य ।**
**रंहोभाजामक्षधूः स्यन्दनानां हाहाकारं प्राजितुः प्रत्यनन्दत् ७॥**

**संक्रीडन्तीति** । संक्रीडन्ती संघर्षात् कूजन्ती । "समोऽकूजने च वक्तव्यम्" इति वचनात् कूजने "क्रीडोऽनुसंपरिभ्यश्च" इति वचनादात्मनेपदम् । रंहोभाजां वेगभाजां स्यन्दनानां रथानामक्षस्य चक्राधारकाष्ठस्य धूरग्रमक्षधूः । 'अक्षं रथाङ्ग आधारे' इति वैजयन्ती । अनक्षे इति निषेधात् "ऋक्पूः" इत्यादिना न समासान्तः । रागात् आराम् प्रतोदमुद्यम्य तेजिता उत्साहिता अश्वा येन तस्य अग्रं चासौ कायश्च स उत्थितो यस्य तस्योत्थितपूर्वकायस्येत्यर्थः । आहिताग्न्यादित्वात्साधुः । प्राजितुः सारथेः । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । हाहाकारमुत्साहवर्द्धनार्थं हाहाशब्दम् । एवकार इत्यत्रैवग्रहणस्योपलक्षणत्वात् । अन्यत्रापि यथा दर्शनं शब्दनिर्देशात्कारप्रत्ययः अथवा हाहाकारं हाहाकरणम् । भावे घञ्प्रत्ययः प्रत्यनन्दत् साधुसाध्वित्यन्वमोदत । किमित्युत्प्रेक्षा ॥ ७ ॥

**कुर्वाणानां साम्परायान्तरायं भूरेणूनां मृत्युनामार्जनाय ।**
**सम्मार्ज्जन्यो न्यूनमुद्धूयमाना भान्ति स्मोच्चैः केतनानां पताकाः ८**

**कुर्व्वाणानामिति ।** उच्चैरुन्नताः केतनाना ध्वजस्तम्भानां पताका वैजयन्त्यः साम्परायान्तरायं युद्धविघ्नं कुर्व्वाणानाम् । 'अनीक साम्परायिकम्' इत्यमरः । भूरेणूनां मार्जनाय प्रमार्ज्जनाय मरुता अन्तकेनोधूयमानाः प्रकम्प्यमाना समार्जन्यः शोधिन्य इव भान्ति स्म । 'सम्मार्ज्जनी शोधिनी स्यात्' इत्यमरः । नूनमित्युत्प्रेक्षा ॥ ८ ॥

**उद्यन्नादं धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति ।**
**आस्फाल्यन्ते कार्म्मुकाणि स्म कामं हस्त्यारोहैः कुञ्जराणां शिरांसि ॥**

**उद्यन्नादमिति ।** धन्विभिर्धनुष्मद्भिः । व्रीह्यादित्वादिनिप्रत्ययः । निष्ठुराणि कर्कशानि स्थूलानि पीवराणि उच्चैरुन्नतानि मण्डलत्वं दधन्ति वर्त्तुलत्वं दधानानि । एकत्राकर्षणादन्यत्र स्वभावाच्चेति भावः । कर्म्मणि प्रभवन्तीति कार्म्मुकाणि धनूंषि । उकञ् । उद्यन्नादमुज्जृम्भमाणघोषं यथा तथा काममास्फाल्यन्ते स्म पाटवपरीक्षार्थं पाणिभिरास्फालितानि । हस्तिनमारोहन्ति इति हस्त्यारोहैर्निषादिभिः कर्म्मण्यण् । कुञ्जराणां शिरांसि आस्फाल्यन्ते स्म । उत्साहार्थमिति भावः । अत्र कार्म्मुकाणां कुञ्जरशिरसाञ्च प्रकृतानामेव निष्ठुरत्वादिविशेषणसाम्येनौपम्यावगमात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९ ॥

**घण्टानादो निस्स्वनो डिण्डिमानां ग्रैवेयाणामारवो बृंहितानि ।**
**आमेतीवम्प्रत्यवोचन् गजानामुत्साहार्थं वाचमाधोरणस्य १० ॥**

**घण्टानाद इति ।** घण्टानादः किङ्किण्यादिघोषः । डिण्डिमानां वाद्यविशेषाणां निस्स्वनः । ग्रीवासु भवानां ग्रैवेयाणां कण्ठशृङ्खलानाम् "ग्रीवाभ्योऽण् च" इति ढञ् प्रत्ययः । आरवः । बृंहितानि बृंहणानि गजानाम् उत्साहार्थमाधोरणस्य हस्तिपकस्य । 'आधोरणा हस्तिपकाः' इत्यमरः । वाचं बृंहणादिशब्दम् आमेति प्रत्यवोचन्निवैवमेवेत्यनुकूलमूचिर इवेत्युत्प्रेक्षा । 'आमानुगुण्ये स्मरणे' इत्यमरः ॥ १० ॥

**यातैश्चातुर्विध्यमस्त्रादिभेदादव्यासङ्गैस्सौष्ठवाल्लाघवाच्च ।**
**शिक्षाशक्तिं प्राहरन्दर्शयन्तो मुक्तामुक्तैरायुधैरायुधीयाः ॥ ११ ॥**

**यातैरिति ।** आयुधेन जीवन्तीत्यायुधीयाः आयुधजीविनः । 'शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः' इत्यमरः । "आयुधाच्छ च" इति छप्रत्ययः । शिक्षाशक्तिमभ्यासपाटवं दर्शयन्तः अस्त्रादिभेदादस्त्रमहास्त्रादिकभेदाच्चातुर्विध्यं यातैः प्राप्तैः । सुष्ठुभावः सौष्ठवं नैशित्यादिगुणश्च तस्मात् । उद्गात्रादित्वादञ् प्रत्ययः । लाघवाद्वेगवत्त्वाच्च "इगन्ताच्च लघुपूर्वात्" इत्यण् प्रत्ययः । अव्यासङ्गैरप्रतिषिद्धैः मुच्यन्त इति मुक्तानि शरादीनि न मुच्यन्त इत्यमुक्तानि खड्गादीनि च तैस्तैर्मुक्तामुक्तैरिति द्वन्द्वः । आयुधैः प्राहरन् । स्वभावानुप्रासयोः संसृष्टिः ॥ ११ ॥

**रोषावेशादाभिमुख्येन कौचित्पाणिग्राहं रंहसैवोपयातौ ।**
**हित्वा हेतीर्म्मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासृजेताम् १२ ॥**

**रोषावेशादिति** । कौचिद्योधौ रोषावेशात्कोपपारवश्याभिमुख्येन रहसा वेगेनैवोपय निमिथः प्रत्यासन्नौ अत एव पाणिग्राहमन्योन्य पाणिं गृहीत्वा । "द्वितीयाया च" इति णमुल्प्रत्ययः । हेतीः शस्त्राणि हित्वा त्यक्त्वा चैकरूपादिति भावः । 'हेतिस्तु शस्त्रे द्वयोः' इति केशव. । मल्लवन्मल्लाभ्या तुल्यम् । 'तेन तुल्यम्' इति वतिप्रत्ययः । मुष्टिभिर्हत्वा । "करणे हनः" इति णमुल्प्रत्ययः । घ्नन्तौ प्रहरन्तौ । हन्तेर्लट्. शत्रादेशे, कषादित्वादनुप्रयोगः । मुष्टिभिर्घ्नन्तावित्यर्थः । बाहुभ्या बाहुभ्या प्रहृत्य प्रवृत्तमिदं युद्धं बाहूबाहवि बाहुयुद्धम् । "तत्र तेनेदमिति सरूपे" इति बहुव्रीहौ "इच् कर्मव्यतीहारे" इतीच्प्रत्ययः समासान्त "अन्येषामपि दृश्यते" इति दीर्घः, तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वादव्ययत्वम् । तत्र व्यासजता व्यासक्तवन्तौ । "कर्त्तरि कर्मव्यतीहारे" इत्यात्मनेपदम् । मल्लवदिति तद्धितगता श्रौती पूर्णोपमा ॥ १२॥

**शुद्धाः सङ्गं न क्वचित्प्राप्तवन्तो दूरान्मुक्ताः शीघ्रतां दर्शयन्तः ।**
**अन्तस्सेनं विद्विषामाविशन्तो युक्तश्चक्रुः सायका वाजितायाः ॥१३॥**

**शुद्धा इति** । शुद्धा निर्विषाः । 'न कर्णिभिर्नापि दग्धैर्नाग्निज्वलिततेजनैः' इति निषेधादिति भाव । अन्यत्र जात्येत्यर्थः । क्वचित्कुत्रापि सङ्ग प्रतिबन्ध न प्राप्तवन्तः न प्राप्ता दुर्वारा इत्यर्थः । दूरान्मुक्ता दूरत एव विसृष्टाः । "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति समासः । "पञ्चम्याः स्तोकादिभ्यः" इत्यलुक् । शीघ्रता जवनत्व दर्शयन्तः । विद्विषा सेनासु अन्तस्सेनम् । विभक्त्यर्थेऽव्ययीभाव. । आविशन्त सेनामध्य प्रविशन्तः इत्यर्थः । सायका बाणा वाजितायाः पक्षवत्ताया अश्वत्वस्य च । 'वाजो निस्स्वनपक्षयोः' इति विश्वः । युक्तमनुरूपं कर्म चक्रुः । एवंविधसेनाप्रवेशस्य वाजिनामेव सम्भवादिति भावः । अत्राभिधायाः प्रकृतपक्षतामात्रोपक्षीणत्वाद्वाजिताशब्देन प्रकृतस्यैव प्रतीते' ध्वनिरेवेति न श्लेषावकाश । किन्तु सिद्धादिपदार्थपुञ्जविशेषणगत्या सायकाना युक्तकारिताहेतुत्वात् पदार्थहेतुक काव्यलिङ्गम् ॥ १३ ॥

**आक्रम्याजेरग्रिमस्कन्धमुच्चैरास्थायाथो वीतशङ्कं शिरश्च ।**
**हेलालोलावर्त्म गत्वातिमर्त्यं द्यामारोहन्मानभाजः सुखेन ॥१४॥**

**आक्रम्येति** । मानभाजोऽभिमानवन्त उच्चैरुन्नतम् आजेर्युद्धस्याग्रिमस्कन्धमग्रभागमस्प्रदेश चाक्रम्यारुह्य वीतशङ्क शिर' सम्मुखं उत्तमकायम् चास्थायारुह्य हेलासु युद्धक्रीडासु लीलासु च लोला उत्सुका सन्तः अतिमर्त्यं वर्त्म गत्वा अमानुष्यं युद्ध कृत्वेत्यर्थः । अन्यत्रामानुषगम्यमारोहणमार्गं मत्वा सुखेनानायासेन द्यां स्वर्गमभ्रङ्कर गिरिशिखरादि क्रीडास्थानम् । 'द्यौः स्वर्गसुखवर्त्मनोः, इति विश्वः । आरोहन्नारूढाः । "युध्यमाना परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः" इति मनुस्मरणादिति भावः । यथा कथञ्चित्कश्चित् स्कन्धमूर्द्धारोहणक्रमेण किञ्चिदुपरोहमद्रितटादिकमारोहति तद्वदिति प्रतीतेर्विशेषणमहिम्नागता समासोक्तिः ॥ १४ ॥

रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्यान्तर्मापितैः स्थावराणि ।
केचिद्गुर्वीमेत्य संयन्निषद्यां क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥ १५ ॥

रोदोरन्ध्रमिति । केचिद्वीरा गुर्वीं महतीं संयतो युध एव निषीदन्त्यस्यामिति निषद्याम् आपणम् । 'आपणस्तु निषद्यायाम्' इत्यमरः । "संज्ञाया समजनिषद" इत्यादिना क्यप् । एत्य प्राप्य । आङ्पूर्वादिणः क्त्वो ल्यप् । देहस्यान्तरभ्यन्तरे मापितैः परिच्छिन्नैः । मातेर्मोङो वा ण्यन्तात्कर्मणि क्तः । "अर्तिह्री" इत्यादिना पुगागमः । लोलैरस्थिरैः प्राणैरेव मूल्यैः प्राणमूल्यै रोदसोर्द्यावापृथिव्यो रन्ध्रमन्तरालं व्यश्नुवानानि व्याप्नुवन्ति । अश्नोतेर्लटः शानजादेशः । स्थावराणि स्थिराणि यशांसि क्रीणन्ति स्म स्वीचक्रुरित्यर्थः । अत्र न्यूनैः प्राणैः ततोऽधिकयशः परिवर्त्तनात् न्यूनपरिवृत्तिरलङ्कारः । "समन्यूनाधिकानां च यदा विनिमयो भवेत् । साक समाधिकन्यूनैः परिवृत्तिरसौ मता" इति लक्षणात् ॥ १५ ॥

वीर्य्योत्साहश्लाघि कृत्वावदानं संग्रामाग्रे मानिनां लज्जितानाम् ।
अज्ञातानां शत्रुभिर्युक्तमुच्चैः श्रीमन्नाम श्रावयन्ति स्म नग्नाः ॥ १६ ॥

वीर्य्योत्साहेति । संग्रामाग्रे रणाग्रे वीर्य्योत्साहाभ्यां श्लाघ्यते इति श्लाघि विक्रमाहङ्कारशोभि । अवदानं महत्कर्म्म कृत्वा । 'अवदानं कर्मवृत्तम्' इत्यमरः । लज्जितानां मानित्वात् स्वनामाख्याने सङ्कोचवतामित्यर्थः । शत्रुभिरज्ञातानाम् अज्ञातनामकानां मानिनां मानशालिनां शूराणां सम्बन्धि श्रीमत् शौर्य्यश्रीयुक्तं नाम नग्नाः बन्दिनः । 'बन्दिनि क्षपणे नग्नः । इति विश्वः । उच्चैः श्रावयन्ति स्म अयमसाविति कथयामासुरित्यर्थः । युक्तं सर्व्वमेतदुचितमित्यर्थः । अत्र लज्जमानाज्ञातयोर्विशेषणगत्या वन्दिश्रवणहेतुत्वात्काव्यलिङ्गभेदः ॥ १६ ॥

आधावन्तः सम्मुखं धारितानामन्यैरन्ये तीक्ष्णकौक्षेयकाणाम् ।
वक्षःपीठैरात्सरोरात्मनैव क्रोधेनान्धाः प्राविशन्पुष्कराणि ॥ १७ ॥

आधावन्त इति । क्रोधेनान्धाः अपश्यन्तोऽन्ये भटाः आधावन्तोऽभिमुखमापतन्तः सन्तः अन्यैः सैन्यैः प्रतिद्वन्द्वाभिसम्मुखं धारितानां धृतानां तीक्ष्णकौक्षेयकाणां निशितासिनाम् "कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु" इति ढकञ्प्रत्ययः । पुष्कराणि फलानि खड्गमुखानीत्यर्थः । 'पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि च' इति विश्वः । वक्षांसि पीठानीव वक्षःपीठैः वक्षःस्थलैः आत्सरोरामुष्टेः । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । "आङ्मर्यादाभिविध्योः" इति विकल्पादसमासः । आत्मना स्वयमेव परप्रयत्नं विनेत्यर्थः । प्राविशन् प्रविष्टाः । अत्र क्रोधान्धविशेषणगत्या पुष्करप्रवेशहेतुत्वात् काव्यलिङ्गभेदः ॥ १७ ॥

मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणायं व्यक्तमासीद्विशेषः ।
आत्मीयास्ते ये पराञ्चः पुरस्तादभ्यावर्त्ती सम्मुखो यः परोऽसौ १८

**मिश्रीभूत इति** । तत्र युद्धे सैन्यद्वयेऽपि मिश्रीभूते मिलिते सति प्रायेणाय भिन्नोऽसाधारणधर्म्मो व्यक्तमासीत् । क इत्याह । पुरस्तादग्रे ये पराञ्चः पराङ्मुखाः परेऽपीति भावः ते आत्मीया अवध्या इत्यर्थः । 'न भीत न परावृत्तम्' इति वधनिषेधश्रवणात् । यः पुरस्तादभ्यावर्त्ती परावर्त्ती सम्मुखोऽभिमुख स्वकीयोऽपीति भावः । असौ परः शत्रुर्वध्य इत्यर्थ । प्राणलुब्धस्य स्वामिद्रोहित्वादित्यर्थः ॥ १८ ॥

**सद्वंशत्वाद्दंगसंसङ्गिनीत्वं नीत्वा कामङ्गौरवेणावबद्धा ।**
**नीता हस्तं वञ्चयित्वा परेण द्रोहश्चक्रे कस्यचित्स्वा कृपाणी १९॥**

**सदिति** । सद्वंशत्वाच्छुद्धाकरत्वात्कुलीनत्वाच्चाङ्गसंसगिनीत्वमङ्गसम्बन्धित्व नीत्वा । अगुणत्वविवक्षाया "त्वतलोर्गुणवचनस्य" इति न पुवद्भावः । काम गौरवेणादरेणावबद्धा संयता च कस्यचित्स्वा स्वकीया कृपाणी अमिलिता परेणान्येन वञ्चयित्वा प्रतार्य हस्त नीता स्वायत्तीकृता सती द्रोह हिंसा व्यभिचार च चक्रे कृतवती । अत्र प्रकृतकृपाणीविशेषणसाम्यादप्रकृतस्वैरिणीप्रतीते समासोक्तिः ॥ १९ ॥

**नीते भेदं धौतधाराभिघातादम्भोदाभे शात्रवेणापरस्य ।**
**सासृग्राजिस्तीक्ष्णमार्गस्य मार्गो विद्युद्दीप्तः कङ्कटे लक्ष्यते स्म२०**

**नीत इति** । शात्रवेण शत्रुणा । प्रज्ञादित्वात् स्वार्थेऽण्प्रत्यय । धौताया उत्तेजितायाः धाराया खड्गधाराया अभिघातात् भेद नीते विदारिते अम्भोदाभे मेघश्यामे अपरस्य भटस्य कङ्कटे कवचे । 'उरश्छद· कङ्कटको जगर कवचोऽस्त्रियाम्' इत्यमरः । सहासृग्राज्या सासृग्राजि सरक्तरेखः तीक्ष्णमार्गस्य खड्गस्य मार्ग· प्रहारो विद्युद्दीप्तस्तडिदुज्ज्वलो लक्ष्यते स्म उपमालङ्कारः ॥ २० ॥

**आमूलान्तात्सायकेनायतेन स्यूते बाहौ सण्डुकश्लिष्टमुष्टेः ।**
**प्राप्यासह्यां वेदनामस्तधैर्यादप्यभ्रश्यच्चर्म नान्यस्य पाणेः॥२१॥**

**आमूलान्तादिति** । अन्यस्य भटस्य बाहौ आयतेन दीर्घेण सायकेन आमूलान्तात् मूलप्रदेशपर्यन्तम् आकक्षमित्यर्थ । विकल्पादसमास· । स्यूते प्रोते सति असह्या वेदना व्यथा प्राप्य अत एवास्तधैर्यात्त्यक्तधैर्यादपि धारयितुमक्षमादपि मण्डुके सङ्ग्राहे श्लिष्टा सादष्टा मुष्टिर्यस्य तस्मात्पाणेश्चर्म्म फलकम् । 'फलकोऽस्त्री फल चर्म्म सङ्ग्राहो मुष्टिरस्य य.' इत्यमरः । नाभ्रश्यन्नापतत् । अत्र सायकप्रोतमुष्टिश्लेषयोर्विशेषणगत्या धैर्यत्यागचर्म्मभ्रंशौ प्रतिहेतुत्वात्काव्यलिङ्गभेद ॥ २१ ॥

**भित्त्वा घोणामायसेनाधिवक्षः स्थूरीपृष्ठो गार्ध्रपक्षेण विद्धः ।**
**शिक्षाहेतोर्गाढरज्ज्वेव बद्धो हर्तुं वक्त्रं नाशकद्दुर्मुखोऽपि ॥ २२ ॥**

**भित्त्वेति** । आयसेनायोमयेन गार्ध्रो गृध्रसम्बन्धी पक्षः पत्रं यस्य तेन गार्ध्रपक्षेण बाणविशेषेण घोणा नासा भित्त्वा । 'घोणा नासा च नासिका' इत्यमरः । अभिवक्षो वक्षसि । विभक्त्यर्थेऽव्ययीभावः । विद्धः प्रहृतः । व्यधेः कर्म्मणि क्तः "ग्रहिज्या" इत्यादिना सम्प्रसारणम् । स्थूरीपृष्ठो नवारूढोऽश्वः शिक्षैव हेतुः तस्य शिक्षाहेतोः शिक्षया निमित्तेन शिक्षार्थमिति यावत् । "षष्ठी हेतुप्रयोगे" इति षष्ठी । गाढरज्ज्वा गाढपाशेन बद्ध इवेत्युत्प्रेक्षा । दुर्म्मुखोऽप्यशिक्षितमुखोऽपि वक्त्रं हर्त्तुमपाक्रष्टुं नाशकत् न शक्तः । शकेर्लुङि पुषादित्वात् च्लेरङादेशः । शिक्षितो हि शिक्षावशादबद्धोऽपि बद्धवदास्ते अशिक्षितस्तु निबद्धोऽपि झटिति मुखमपहरतीति भावः । अपिर्विरोधे । अत एव विरोधाभासोऽलङ्कारः ॥ २२ ॥

**कुन्तेनोच्चैः सादिना हन्तुमिष्टान्नाजानेयो दन्तिनस्त्रस्यति स्म ।**
**कर्मोदारं कीर्त्तये कर्त्तुकामान्कि वा जात्याः स्वामिनो ह्रेपयन्ति २३**

**कुन्तेनेति** । आजानेयः कुलीनाश्वः । 'आजानेयाः कुलीनाः स्युः' इत्यमरः । "शुभ्रादिभ्यश्च" इति ढक्प्रत्ययः । सादिना अश्वारोहेण कर्त्रा । उच्चैरुन्नतेन कुन्तेन प्रासेन करणेन । हन्तुं प्रहर्त्तुमिष्टादभिप्रेतात् दन्तिनो न त्रस्यति स्म न त्रस्तः । "वा भ्राश" इत्यादिना श्यन्प्रत्ययः । तथा हि जात्याः कुलीनाः भवार्थे यत्प्रत्ययः । कीर्त्तये उदारं कर्म्म महापौरुषं कर्त्तुं कामो येषां तान् कर्त्तुकामान् । "तुं काममनसोरपि" इति मकारलोपः । स्वमेषामस्तीति स्वामिनो भर्तॄन् । "स्वामिन्नैश्वर्ये" इति निपातः । ह्रेपयन्ति लज्जयन्ति किं न ह्रेपयन्तीत्यर्थः । "अर्तिह्री" इत्यादिना पुगागमः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २३ ॥

**जेतुं जैत्राः शेकिरे नारिसैन्यैः पश्यन्तोऽधोलोकमस्तेषुजालाः ।**
**नागारूढाः पार्वतानि श्रयन्तो दुर्गाणीव त्रासहीनास्त्रसानि २४**

**जेतुमिति** । जेतार एव जैत्राः जयशीलाः जेतृशब्दात्. प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः । लोकं जनमधः पश्यन्तः स्वयमुपर्य्यवस्थानात् लोकमधोदेशे पश्यन्तः अवज्ञया मन्यमानाश्च । अस्तेषुजालाः क्षिप्तशरनिकराः त्रासहीना दुर्गस्थत्वान्निर्भीकाः । नागारूढाः गजारोहाः त्रस्यन्ति गच्छन्तीति त्रसानि जङ्गमानि । 'चरिष्णुजङ्गमचरत्रसमिङ्गं चराचरम्' इत्यमरः । पार्वतानि पर्वतसम्बन्धीनि दुर्गाणि । गिरिदुर्गाणीत्यर्थः । श्रयन्तोऽधितिष्ठन्त इत्युत्प्रेक्षा । तेऽप्येवंभूता एवेति भावः । अरिसैन्यैः कर्तृभिः । जेतुं न शेकिरे अशक्ता बभूवुरित्यर्थः । शकेः कर्म्मणि लिट् । अत्र मनुः । 'धनुर्दुर्गं महीदुर्गमब्दुर्गं वनमेव च । नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेन्नृपः । सर्वेणैव प्रकारेण गिरिदुर्गं समाश्रयेत् । तेषां हि बहुगुण्येन गिरिदुर्गं विशिष्यते' इति ॥ २४ ॥

**विष्वद्रीचीर्विक्षिपन् सैन्यवीचीराजावन्तः क्वापि दूरं प्रयातम् ।**
**वभ्रामैको बन्धुमिष्टं दिदृक्षुः सिन्धौ वाद्यो मण्डलङ्गोर्वराहः ॥२५॥**

**विष्वगिति** । एकः कोऽपि वीरः विष्वगञ्चन्तीति विष्वद्रीचीः सर्वव्यापिनीः । " विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये " इति टेरद्र्यादेशः । धातोरप्यञ्चतेरुपसख्यानात् " उगितश्च " इति ङीप् " अचः " इत्यकारलोपे "चौ" इति दीर्घः । सैन्यानि वीचीरिव सैन्यवीचीरित्युपमितसमासः । सिन्धौ वेति लिङ्गात् विक्षिपन्नपाकुर्वन् । अन्तः आजिमध्ये क्वापि दूर प्रयातम् इष्ट बन्धुं दिदृक्षुर्द्रष्टुमिच्छु' सन् । दृशेः सन्नन्तादुप्रत्ययः । क्वापि प्रयात मग्न गोभूमेर्मण्डल भूगोल दिदृक्षुराद्यो वराहः सिन्धौ वा समुद्रे इव । ' उपमाया विकल्पे वा ' इत्यमरः । आजौ वराम् एकवीरस्य कुतो भयमित्यर्थः ॥ २५ ॥

**यावच्चक्रे नाञ्जनं बोधनाय व्युत्थानज्ञो हस्तिचारी मदस्य ।**
**सेनास्वानाद्दन्तिनामात्मनैव स्थूलास्तावत्प्रावहन्दानकुल्याः २६**

**यावदिति** । व्युत्थान गजोत्थापनम् जानातीति व्युत्थानज्ञः हस्तिनि चरतीति हस्तिचारी यन्ता । मदस्य बोधनायोत्थापनायाञ्जनमुद्दीपन कर्म्म यावन्न चक्रे तावत् प्रागेव । असमाप्ते विधावित्यर्थः । सेनास्वानात्सेनाकलकलश्रवणादित्यर्थः । दन्तिनामात्मना स्वयमेव स्थूलाः महत्यो दानकुल्या मदसरितः प्रावहन् इति दन्तिनामुत्साहातिरेकोक्तिः अञ्जनात् । प्राग्दानसम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

**क्रुध्यन् गन्धादन्यनागाय दूरादारोढारं धूतमूर्द्धावमत्य ।**
**घोरारावध्वानिताशेषदिक्के विष्के नागः पर्यणंसीत्स्व एव ॥ २७ ॥**

**क्रुध्यन्निति** । दूरात् दूरत एव गन्धात् मदगन्धाघ्राणात् अन्यनागाय प्रतिगजाय क्रुध्यन् तं जिघांसुरित्यर्थः । "क्रुधद्रुह" इत्यादिना सम्प्रदानत्वम् । नागो धूतमूर्द्धा विधूतमस्तकः सन् । आरोढारम् यन्तारम् अवमत्य अवधूय । घोरारावैर्दारुणक्रन्दनैः ध्वानिता अशेषदिशो येन तस्मिन् तथा उच्चैराक्रोशतीत्यर्थः । शैषिकः कप्रत्ययः । स्वे स्वकीय एव स्वपुत्र एवेत्यर्थः । " पूर्वादिभ्यो नवभ्योवा " इति विकल्पान्न स्मिन्नादेशः । अत एव स्वे स्वपुत्रे विष्के इति श्लिष्टतया व्याख्याय पुत्रस्यापि ज्ञातित्वान्न सर्वनामसञ्ज्ञेति वल्लभोक्तिः प्रामादिकी । विष्क विंशतिः वर्षके डिम्भे । ' विष्को विंशतिवर्षकः ' इति वैजयन्ती । पर्य्यणंसीत् तिर्य्यक् प्रजहारेत्यर्थ । ' तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः ' इति हलायुध । " यमरमनमातां सक् च " इति नमेर्लुङि सगिडागमौ 'नेटि' इति वृद्धिप्रतिषेधः ॥ २७ ॥

**प्रत्यासन्ने दन्तिनि प्रातिपक्षे यन्त्रा नागः प्रास्तवक्त्रच्छदोऽपि ।**
**क्रोधाक्रान्तः क्रूरनिर्दारिताक्षः प्रेक्षाञ्चक्रे नैव किञ्चिन्मदान्धः २८**

**प्रत्यासन्ने इति** । प्रातिपक्षे प्रतिपक्षसम्बन्धिनि । " तस्येदम् " इत्यण् । दन्तिनि गजे प्रत्यासन्ने सति यन्त्रा सादिना प्रास्तवक्त्रच्छदोऽपि निरस्तमुखपटोऽपि क्रोधाक्रान्तः अत एव क्रूरं घोरं निर्दारिताक्षः तथापि मदान्धो नागो गजो न किञ्चिदेव प्रेक्षाञ्चक्रे । किमपि पुरोगत

प्रतिपक्षमन्यद्वा न ददर्शेत्यर्थः । आवरणान्तराभावेऽपि मदावरणस्यानपायादिति भावः । ' इजादेश्च गुरुमतोऽनृच्छः " इत्याम्प्रत्ययः । अत्रानावृतोन्मीलिताक्षस्याप्यदर्शनविरोधस्य मदान्धेनाविरोधाद्विरोधाभासोऽलङ्कारः ॥ २८ ॥

**तूर्णं यावन्नापनिन्ये निषादी वासश्चक्षुर्वारणं वारणस्य ।**
**तावत्तूर्णैरन्यनागाधिरूढः कादम्बानामेकपातैरसीव्यत् ॥२९॥**

तूर्णमिति । निषादी यन्ता वारणस्य गजस्य चक्षुर्वारणं नेत्रावरणं वासो मुखपटं यावत्तूर्णं नापनिन्ये नापचकार तावदन्यनागाधिरूढः प्रतिगजाधिरोहः एकः एककालीनः पातो येषां तैरेकपातैर्युगपत्पत्तिभिरिति शीघ्रतोक्तिः । कादम्बाना शराणाम् । 'कादम्बमार्गणशराः' इत्यमरः । पूगैर्व्रातैरसीव्यत् । चक्षुषा सह तद्वासः स्यूतवानित्यर्थः । सीव्यतेर्लङ् । अत्र चक्षुषः सीवनासम्बन्धेऽपि सदन्धोक्तेरतिशयोक्तिः ॥ २९ ॥

**आस्थद्दृष्टेराच्छदस्त्रं प्रमत्तो यन्ता यातुः प्रत्यरीभं द्विपस्य ।**
**मग्नस्योच्चैर्बर्हसारेण शङ्कोरावव्राते वीक्षणे च क्षणेन ॥ ३० ॥**

आस्थदिति । यन्ता प्रमत्तः सन् प्रत्यरीभमरिगजं प्रति । आभिमुख्येऽव्ययीभावः । यातुर्गन्तुः । यातेस्तृच् । द्विपस्य दृष्टेराच्छदमावरणम् । "पुंसि संज्ञायां घः " । आस्थत् निरस्तवान् । " अस्यतिवक्तिख्यातिभ्योऽङ् " इति च्लेरङादेशः, " अस्यतेस्थुक् " इति थुगागमः । मग्नस्य मुखनिमग्नस्य शङ्कोः शल्यायुधस्य । ' वा पुंसि शल्यं शङ्कुर्ना ' इत्यमरः । उच्चैर्बर्हसारेण पिच्छपटलेन वीक्षणे चक्षुषी क्षणेनाव्राते आवृते । वृणोतेः कर्मणि लिट् । अन्योन्यसमुच्चयचकाराभ्याम् आवरणनिरासे पुनरावरणयोरेककाले सम्बन्धोक्तेरतिशयोक्तिः ॥ ३० ॥

**यत्नाद्रक्षन्सुस्थितत्वादनाशं निश्चित्यान्यश्चेतसा भावितेन ।**
**अन्त्यावस्थाकालयोग्योपयोगं दध्रेऽभीष्टं नागमापद्धनं वा ३१**

यत्नादिति । अन्यः गजारोहः भावितेनालोचितेन चेतसा सुस्थितत्वादनपायि देशत्वादनाशमनपायं निश्चित्य यत्नाद्रक्षन् वञ्चकेभ्यस्त्रायमाणः सन् अन्त्यावस्थाकाले साधनान्तरकाले नाशकाले योग्योपयोगम् अत एवाभीष्टं नागं गजमापद्धनं वापद्धनमिव दध्रे अन्यतोपसार्य्य धारयामास । धरतेः स्वरितेत्त्वात्कर्त्तरि लिट् तङ् ॥ ३१ ॥

**अन्योन्येषां पुष्करैरामृशन्तो दानोद्भेदानुच्चकैर्भुग्नबालाः ।**
**उन्मूर्द्धानः सन्निपत्यापरान्तैः प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ३२**

अन्योन्येषामिति । इभा गजाः अन्योन्येषां परस्परेषाम् । " कर्मव्यतीहारे सर्वनाम्नो द्वे भवतः " इति वक्तव्यात् द्वित्वम् । " समासवच्च बहुलम् " इति विकल्पादसमासवत्त्वपक्षे पूर्वपदस्य प्रथमैकवचनं वक्तव्यम् । उद्भिद्यन्ते एष्विति उद्भेदाः । " अकर्त्तरि कारके च संज्ञायाम् "

इत्यविकरणार्थे घञ्प्रत्ययः । दानोद्भेदान्कटादिमदस्थानानि पुष्करैर्हस्ताग्रैः । 'पुष्करं करिहस्ताग्रम्' इत्यमरः । आमृशन्तो जिघ्रन्त उच्चकैरुन्नता भुग्नवालाः मही्कृतपुच्छाः । 'वालः केशे शिशौ मूर्खे वालो वाजीभपुच्छयोः' इति विश्वः । उन्मूर्द्धानः उन्नतमस्तकाः सन्तः स्पष्टदन्तध्वनि यथा तथा सन्निपत्यापरान्तैः सह प्रायुध्यन्त । दिवादि... लङ् । स्वभावोक्तिः ॥ ३२ ॥

**द्राघीयांसः संहताः स्थेमभाजश्चारूदग्रास्तीक्ष्णतामत्यजन्तः ।**
**दन्ता दन्तैराहताः सामजानाम्भङ्गं जग्मुर्न स्वयं सामजाताः ३३**

**द्राघीयांस इति** । द्राघीयांसो दीर्घतराः । 'प्रियस्थिर' इत्यादिना दीर्घस्य ईयसुनि द्राघादेशः । संहता सुघटिता अत एव स्थेमभाजः स्थैर्यभाज । "प्रियस्थिर" इत्यादिना स्थिरशब्दस्येमनिचि स्थादेशः । चारवो रम्या उदग्रा उन्नताश्च ते चारूदग्राः । विशेषणसमासः । तीक्ष्णतां नैशित्यम् अत्यजन्तः सामजाना गजाना दन्तादन्तैः प्रतिगजविषाणैराहता सन्तो भङ्ग भेदं जग्मु बभञ्जुः । सामजाताः दन्तिनस्तु स्वयं भङ्गं पराजयं न जग्मुः, दंतभङ्गेऽपि स्वयं न परावर्तन्त इत्यर्थः । अत्रापरावर्त्तित्वेन वर्ण्यतया प्रकृतत्वादुपमेयाना दान्तिनामुपमानदन्तापेक्षया अभग्नत्वेनाधिक्योक्तेर्व्यतिरेकस्तुल्ययोगिताया बाधक इति गमयितव्यम् ॥ ३३ ॥

**मातंगानां दन्तसंघट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः ।**
**लग्नोऽप्यग्निश्चामरेषु प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ३४**

**मातङ्गानामिति** । मातगाना दन्तिना दन्तसंघट्टजन्मा दन्तसंघर्षोत्थः हेमच्छेदच्छायानि कनकपरागवर्णानि चञ्चन्ति चलन्ति च शिखाग्राणि ज्वालाग्राणि यस्य सोऽग्निः मञ्जिष्ठया ओषधिविशेषेण रक्तेषु माञ्जिष्ठेषु । "तेन रक्तं रागात्" इत्यण्प्रत्ययः । 'मञ्जिष्ठया विकसा जिंगी' इत्यमरः । चामरेषु लग्नोऽपि सैन्यैः प्रकामं न व्यज्यते न विविच्यते स्म । सावर्ण्यादिति भावः । अतः सामान्यालंकारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । स च विशेषणोत्थकाव्यलिङ्गसंकीर्णः ॥ ३४ ॥

**ओषामासे मत्सरोत्पातवाताश्लिष्यद्दन्तक्ष्मारुहां घर्षणोत्थैः ।**
**यौगान्तैर्वा वह्निभिर्वारणानामुच्चैर्मूर्द्धव्योम्नि नक्षत्रमाला ॥ ३५ ॥**

**ओषामासे इति** । मत्सरो वैरमेवोत्पातवातः आकस्मिकवायुस्तेनाश्लिष्यतो संयुज्यमानाना दन्तानामेव क्ष्मारुहा वृक्षाणा घर्षणेनोत्था जन्म येषां तैर्वह्निभिर्यौगान्तैर्वा युगान्तभवैर्वह्निभिरिव वारणानामुच्चैरुन्नतैः मूर्द्धा व्योमेव तस्मिन्मूर्द्धव्योम्नि नक्षत्रमाला हारविशेषः । 'सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकः' इत्यमरः । ज्योतिर्मण्डलं च ओषामासे उवोष दग्धेत्यर्थः । 'उष दाहे' इति धातोः कर्म्मणि लिट् । "उषविदजागृभ्योऽन्यतरस्याम्" इत्याम्प्रत्ययः ।

रूपणगुणः "कृञ्चानुप्रयुज्यते लिटि" इत्यस्तेश्चानुप्रयोगः । अत्र नक्षत्रमालयोरभेदाध्यवसायेन निर्देशात् रूपकश्लेषसङ्कीर्णेयमुपमा ॥ ३५ ॥

**सान्द्राम्भोदश्यामले सामजानां वृन्दे नीताः शोणितैः शोणिमानम् । दन्ताः शोभामापुरम्भोनिधीनां कन्दोद्भेदा वैद्रुमा वारिणीव ॥ ३६ ॥**

**सान्द्राम्भोदेति ।** सान्द्रं च तदम्भोदश्यामलं च तस्मिन् सामजानां गजानां वृन्दे शोणितैः शोणिमानमारुण्यं नीता दन्ता अम्भोनिधीनां वारिनिधीनां वारिणीव विद्रुमाणां प्रवालानां इमे वैद्रुमाः 'विद्रुमः पुंसि प्रवालं पुनपुंसकम्' इत्यमरः । कन्दो मूलपिण्डः तस्योद्भेदाः प्ररोहा इव शोभामापुरित्युपमा ॥ ३६ ॥

**आकम्प्राग्रैः केतुभिः सन्निपातं तारोदीर्णग्रैवनादं व्रजन्तः । मग्नानङ्गे गाढमन्यद्विपानां दन्तान्दुःखादुत्खनन्ति स्म नागाः॥३७**

**आकम्प्राग्रैरिति ।** आकम्प्राणि दन्तोत्खननसंक्षोभाद्भृशं कम्प्राण्यग्राणि येषां तैः केतुभिर्ध्वजैः सन्निपातं सवर्गं व्रजन्त इति दुःखहेतूक्तिः । नागाः गजास्तारमुच्चैरुदीर्णः उत्पन्नः ग्रैवाणां ग्रीवासूत्पन्नानां शृङ्खलभूषणादीनां नादो यस्मिन् कर्म्मणि तत्तथा अन्यद्विपानां प्रतिगजानाम् अङ्गे गाढं मग्नान् अन्तः प्रविष्टान् दन्तान् दुःखादुत्खनन्ति स्म तेषां गाढमग्नत्वात्स्वयं केतुभाराक्रान्तत्वाच्च कृच्छ्रादुज्जहुरित्यर्थः । अत्रोक्तभारमज्जनयोर्विशेषणगत्या दुःखोत्खननहेतुत्वात्काव्यलिङ्गम् ॥ ३७ ॥

**उत्क्षिप्योच्चैः प्रस्फुरन्तं रदाभ्यामीषादन्तः कुञ्जरं शात्रवीयम् । शृङ्गप्रोतप्रावृषेण्याम्बुदस्य स्पष्टम्प्रापत्साम्यमुर्वीधरस्य ॥ ३८ ॥**

**उत्क्षिप्येति ।** ईषे लाङ्गलदण्डाविव दन्तौ यस्य स ईषादन्तो महादन्तो दन्ती । 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः । प्रस्फुरन्तं प्राणोत्क्रमणदुःखादुल्लसन्तं शात्रवस्येदं शात्रवीयं कुञ्जरं रदाभ्यां दन्ताभ्याम् उच्चैरुत्क्षिप्योन्नमय्य शृङ्गे शिखरे प्रोतः स्यूतः प्रावृषेण्यः प्रावृषि भवोऽम्बुदो यस्य तस्य । "प्रावृष एण्यः" इत्येण्यप्रत्ययः । उर्वीधरस्य गिरेः साम्यं सादृश्यं स्पष्टं प्रापत् । आप्नोतेर्लुङि पुषादित्वात् च्लेरङादेशः । उपमा ॥ ३८ ॥

**भग्नेऽपीभे स्वे परावर्त्य देहं योद्धा सार्द्धं व्रीडया मुञ्चतेषून् । साकं यन्तुः सम्मदेनानुबन्धी दूनोऽभीक्ष्णं वारणः प्रत्यरोधि॥३९.**

**भग्नेऽपीति ।** स्वे स्वकीये इभे गजे भग्नेऽपि देहं स्वाङ्गं परावर्त्य प्रतिपक्षाभिमुखमावर्त्य । वृत्तेर्ण्यन्ताल्ल्यप् । अण्यन्तत्त्वपपाठः अकर्म्मकस्य कर्म्मानन्वयात् । व्रीडया सार्द्धमिषून् मुञ्चता

इषुमोक्षणेन स्वगजभग्नव्रीडा निरस्यतेत्यर्थः । योद्धा भग्नेभस्थेन भटेन । कर्त्रा । अभीक्ष्णं द्रुतः इषुभिस्ततः । "ल्वादिभ्यः" इति निष्ठानत्वम् । अनुबध्नातीत्यनुबन्धी वारणो यन्तुः प्रतिगजारोहस्य सम्मदेन साकं स्वेभजयजन्येन हर्षेण सह । "प्रमदसम्मदौ हर्षे" इति निपातः । प्रत्यरोधि प्रतिरुद्धः तत्प्रतिरोधेन तत्सम्मदस्यापि प्रतिरोधव्याप्तेरिति भावः । 'साकं सार्द्धं समं सह' इत्यमरः । अत्र व्रीडितेषुमोक्षयोः सम्मदयन्तृप्रतिरोधयोश्च कार्य्यकारणयोस्तत्पौर्वापर्य्यविपर्ययः रूपातिशयोक्त्या सहभावोक्तेः सहोक्तिः सङ्कीर्य्यते ॥ ३९ ॥

**व्याप्तं लोकैर्दुःखलभ्यापसारं संरम्भित्वादेत्य धीरो महीयः ।**
**सेनामध्यं गाहते वारणः स्म ब्रह्मेव प्रागादिदेवोदरान्तः ॥ ४० ॥**

**व्याप्तमिति** । वारणः कश्चिद्दन्ती संरम्भित्वात् क्रोधित्वात् । 'संरम्भः सम्भ्रमे कोपे' इति विश्वः । धीरो निर्भीकः सन् एत्यागत्य महीयो विपुलं लोकैः जनैः अन्यत्र भुवनैश्च व्याप्तम् । 'लोकस्तु भुवने जने' इत्यमरः । अतो दुःखलभ्योऽपसारोऽपसरणं यत्र तत्सेनामध्यं प्राक् पुरा आदिदेवस्य विष्णोः उदरान्तरुदराभ्यन्तरं ब्रह्मा स्रष्टेव गाहते स्म प्रविवेश । यथा पुरा किल बाह्यं सिसृक्षुः ब्रह्मा पूर्वसृष्टिदिदृक्षया विष्णोः कुक्षिं प्रविशदिति पौराणिकी कथा । केचित् ब्रह्मा ब्राह्मणो मार्कण्डेय इति व्याचक्षते सोऽपि भगवन्महिमावलोकनकौतुकात्तदनुज्ञया महाप्रलये तदुदरं प्रविश्य बभ्रामेत्यागमः । 'ब्रह्मा विप्रः प्रजापतिः' इत्यमरः । उपमालङ्कारः ॥ ४० ॥

**भृङ्गश्रेणीश्यामभासां समूहैर्नाराचानां विद्धनीरन्ध्रदेहः ।**
**निर्भीकत्वादाहवेनाहतेच्छो हृष्यन्हस्ती हृष्टरोमेव रेजे ॥ ४१ ॥**

**भृङ्गेति** । भृङ्गश्रेणीव श्यामभासां कृष्णवर्णानां नाराचानामयोमयेषुविशेषाणां समूहैः विद्धो नीरन्ध्रो निर्विवरो देहो यस्य सः तथापि निर्भीकत्वादाहवेनाहतेच्छः अव्याहतोत्साहः अत एव हृष्यन् मोदमानो हस्ती हृष्टरोमेव हर्षात्पुलकित इवेत्युत्प्रेक्षा । "हृषेर्लोमसु" इति विकल्पादिडभावः । रेजे शुशुभे । "फणां च सप्तानाम्" इति विकल्पादेत्वाभ्यासलोपौ ॥ ४१ ॥

**आताम्राभा रोषभाजः कटान्तादाशूत्खाते मार्गणे धूर्गतेन ।**
**निश्च्योतन्ती नागराजस्य जज्ञे दानस्याहो लोहितस्येव धारा ॥**

**आताम्रेति** । रोषभाजः क्रुद्धस्य नागराजस्य महेभस्य कटान्तात् गण्डस्थलान्निश्च्योतन्ती प्रागेव स्रवन्ती दानस्य मदस्य धारा आताम्राभा क्रोधादरुणवर्णा जज्ञे जाता । अहो धूर्गतेन पुरोगतेन यन्त्रा मार्गणे शरे आशूत्खाते लोहितस्य क्षतजस्येव धारा जज्ञे । जनेः कर्त्तरि लिट् । किमियं क्रोधारुणा मदधारा शरोद्धरणजन्या रक्तधारा वेत्युभयकारणसम्भवात् सादृश्याच्च संशयः, स च विकल्पितसादृश्यमूल इत्यलङ्कारः ॥ ४२ ॥

**क्रामन्दन्तौ दन्तिनः साहसिक्यादीषादण्डौ मृत्युशय्यातलस्य ।**
**सैन्यैरन्यस्तत्क्षणादाशशङ्के स्वर्गस्योच्चैरर्द्धमार्गाधिरूढः ४३**

**क्रामन्निति** । मृत्युशय्यातलस्यान्तकपर्य्यङ्करूपस्य । 'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः । ईषादण्डौ दारुविशेषौ तत्सदृशावायतावित्यर्थः । दन्तिनो दन्तौ सहसा वर्त्तेत इति साहसिकः "ओजःसहोम्भसा वर्तते" इति ठक्प्रत्ययः तस्य भावात्साहसिक्यात् क्रामन् साहसवानित्यर्थः । अन्यस्तत्क्षणादुच्चरूर्ध्वस्य स्वर्गस्य अर्धश्चासौ मार्ग्गश्चेति तदर्द्धमार्ग्गं तदधिरूढ इति सैन्यैराशशंके उत्प्रेक्षित इत्युत्प्रेक्षा ॥ ४३ ॥

**कुर्वञ्ज्योत्स्नाविप्रुषां तुल्यरूपस्तारस्ताराजालसारामिव द्याम् ।**
**खड्गाघातैर्दारिताद्दन्तिकुम्भादाभाति स्म प्रोच्छलन्मौक्तिकौघः ॥**

**कुर्वन्निति** । ज्योत्स्नाविप्रुषा तुल्यरूपः चन्द्रिकाबिन्दुस्वरूपः तारः शुद्धः । 'तारो मुक्तादिसंशुद्धौ' इति विश्वः । खड्गाघातैर्दारिताद्दन्तिकुम्भात् प्रोच्छलन्नुत्पतन् मौक्तिकौघो मुक्तापुञ्जो द्यामाकाशं ताराजालसारां नक्षत्रशबलितां तारकितां कुर्वन्नित्युत्प्रेक्षा 'सारः शबलपीतयोः' इति विश्वः । आभाति स्म बभौ ॥ ४४ ॥

**दूरोत्क्षिप्तक्षिप्रचक्रेण कृत्तम्मत्तो हस्तं हस्तिराजः स्वमेव ।**
**भीमम्भूमौ लोलमानं सरोषः पादेनासृक्पङ्कपेषम्पिपेष ॥ ४५ ॥**

**दूरोत्क्षिप्तेति** । मत्तो हस्तिराजः करीन्द्रः दूरादुत्क्षिप्तेन प्रास्तेन अत एव क्षिप्रेण सत्वरेण चक्रेण कृत्तम् अत एव भूमौ लोलमानम् लुण्ठमानम् । लोलतेरनात्मनेपदित्वात् "ताच्छील्यवयोवचनशक्तिषु चानश्" इति ताच्छील्ये चानश्प्रत्ययः । अतएव 'लोलमानादयश्चानशि' इति वामनः । भीमं भयङ्करं स्वं स्वकीयमेव हस्तं सरोषः सन् पादेनाङ्घ्रिणा असृक्पङ्केन पङ्कीभूतेनासृजा पिनष्टीति असृक्पङ्कपेषम् । "स्नेहने पिषः" इति णमुल् । पिपेष । कषादित्वादनुप्रयोगः । रक्तपङ्केन स्नेहद्रव्येण ममर्देत्यर्थः । क्रुद्धमत्तयोः कुतो विवेक इति भावः । अत्र पेषणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४५ ॥

**आपस्काराल्लूनगात्रस्य भूमिन्निःसाधारं गच्छतोऽवाङ्मुखस्य ।**
**लब्धायामं दन्तयोर्युग्ममेव स्वं नागस्य प्रापदुत्तम्भनत्वम् ॥ ४६ ॥**

**आपस्कारादिति** । गात्रमूलमापस्कारम् आपस्कारादामूलात् । आङो विकल्पादसमासः । लूनगात्रस्य छिन्नजङ्घस्य । 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्राऽवरे क्रमात्' इत्यमरः । अतएवावाङ्मुखस्य सतः साधारं सावलम्बनं न भवतीति निःसाधारं यथा तथा भूमिं गच्छतः पततः इत्यर्थः । नागस्य लब्धायामं प्राप्तदैर्घ्यम् आयतमित्यर्थः । स्वं स्वकीयं दन्तयोर्युग्ममेवोत्तम्भनत्वमवलम्बनत्वं प्रापत् । जङ्घाच्छेदेऽपि दन्तावष्टम्भादपतित इत्यर्थः । अत्र स्वभावातिशयोक्त्योः संसृष्टिः ॥ ४६ ॥

**लब्धस्पर्शम्भूव्यथादव्यथेन स्थित्वा किञ्चिद्दन्तयोरन्तराले ।**
**ऊर्ध्वार्द्धासिच्छिन्नदन्तप्रवेष्टं जित्वोत्तस्थे नागमन्येन सद्यः ॥ ४७ ॥**

**लब्धस्पर्शमिति** । भूव्यधाद्दन्ताभ्यां भुवो विद्धत्वादित्यर्थः । "व्यवजपोरनुपसर्गे" इत्यप्प्रत्ययः । अव्यथेन स्वयमविद्धत्वादव्यथेन सताऽन्येन केनचिद्भटेन दन्तयोरन्तराले किञ्चित् लब्धः स्पर्शो यस्मिन् कर्म्मणि तद्दन्ताभ्यां भटस्पर्शं यथा तथा स्थित्वा ऊर्ध्वं प्रसारितेनार्द्रासिना खङ्गैकदेशेन छिन्नः चूर्णितो दन्तप्रवेष्टो दन्तवेष्टनं यस्य तं नागं जित्वा सद्य एव उत्तस्थे उत्थितम् । भावे लिट् । अत्रापि तथोत्थानाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४७ ॥

**हस्तेनाग्रे वीतभीतिं गृहीत्वा कश्चिद्व्यालः क्षिप्तवानूर्ध्वमुच्चैः ।**
**आसीनानां व्योम्नि तस्यैव हेतोर्दिव्यस्त्रीणामर्प्पयामास नूनम् ॥**

**हस्तेनेति** । व्यालो दुष्टदन्ती । 'व्यालो दुष्टगजे सर्पे' इति विश्वः । अग्रे वीतभीतिं निर्भीकं भीरो. स्वर्गाभावादिति भावः । कञ्चिद्वीरं हस्तेन गृहीत्वा ऊर्ध्वमुपर्य्युच्चैः क्षिप्तवान् । उत्प्रेक्ष्यते तस्यैव हेतोस्तेनैव हेतुना । तद्वरणार्थमेवेत्यर्थ. । "सर्वनाम्नस्तृतीया च" इति चकारात् षष्ठी । व्योम्नि आसीनानामवस्थितानाम् । "ईदास." इति शानच ईकार. । स्वर्गस्त्रीणाममरनारीणामर्पयामास नूनम् ॥ ४८ ॥

**कश्चिद्दूरादायतेन द्रढीयः प्रासप्रोतस्रोतसान्तःक्षतेन ।**
**हस्ताग्रेण प्राप्तमेवाग्रतोऽभूदानैश्वर्य्यं वारणस्य ग्रहीतुम् ॥ ४९ ॥**

**कश्चिदिति** । दूरादायतेनान्त.क्षतेन विक्षतेन अत एव द्रढीयसा प्रासेन प्रोतं स्रोतो यत्र तेन हस्ताग्रेण करेणन । अग्रत प्राप्तमपि कञ्चिद्भट ग्रहीतुम् आदातु वारणस्य अनीश्वरस्य भावः आनैश्वर्य्यम् असामर्थ्यमभूत् । "नञ शुचीश्वर" इत्यादिना नञ् पूर्वपदोभयपदवृद्धिः । अत्रापि आनैश्वर्य्यसम्बन्धोक्तरतिशयोक्तिः ॥ ४९ ॥

**तन्वाः पुंसो नन्दगोपात्मजायाः कंसेनेव स्फोटितायाः गजेन ।**
**दिव्या मूर्त्तिर्व्योमगैरुत्पतन्ती वीक्षामासे विस्मितैश्चण्डिकेव ॥ ५० ॥**

**तन्वा इति** । गजेन स्फोटितायाः विदारितायाः पुसः कस्यचिद्वीरस्य तन्वाः शरीरात् कंसेन स्फोटिताया नन्दगोपात्मजाया नन्दकन्याया इवोत्पतन्ती दिव्या मूर्तिः चण्डिकेव नन्दकन्याशरीरादाविर्भवन्ती कालिकेव विस्मितैर्व्योमगै' खेचरैः वीक्षामासे वीक्षिता । ईक्षतेः कर्म्मणि लिट्, "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः । मनुष्यभावमुत्सृज्य देवभाव गतेत्यर्थः । उपमा व्यक्ता । पुरा किल दुरात्मनः कंसस्य प्रतारणाय भगवदाज्ञया तन्माया शक्तिर्नन्दगोपाज्जाता कंसेन हिसितेति पौराणिकाः ॥ ५० ॥

**आक्रम्यैकामग्रपादेन जंघामन्यामुच्चैराददानः करेण ।**
**सास्थिस्वानं दारुवद्दारुणात्मा कश्चिन्मध्यात्पाटयामास दन्ती ॥ ५१ ॥**

**आक्रम्येति** । दारुणात्मा क्रुद्धचित्तो दन्ती एकां जंघामग्रपादेनाक्रम्यान्यां जघामुच्चैरुन्नतेन करेणाददान. आकर्षयन् । सास्थिस्वानं भज्यमानास्थिचटचटाशब्दयुक्तं यथा तथा

कश्चिद्वीर दारुवत्काष्ठवत् मध्यात्पाटयामास मध्य विभज्य पाटयामासेत्यर्थः । ल्यब्लोपे पञ्चमी । उपमा ॥ ५१ ॥

**शोचित्वाग्रे भृत्ययोर्मृत्युभाजोरर्घ्यः प्रेम्णा नो तथा वल्लभस्य ।**
**पूर्वं कृत्वा नेतरस्य प्रसादं पश्चात्तापादाप दाहं यथान्तः ॥५२॥**

**शोचित्वेति** । ऋच्छतीत्यर्यः । "अर्यः स्वामिवैश्ययोः" इति यत्प्रत्ययान्तो निपातः । अग्रे समःअंग मृत्युभाजोर्मरण गतयोर्भृत्ययोः शोचित्वा वल्लभस्यैतयोर्मध्ये प्रियभृत्यस्य सम्बन्धिना प्रेम्णा । तद्गतप्रेम्णेत्यर्थ । तथा तेन प्रकारेणान्तर्दाह सताप नो आप । यथा येन प्रकारेण इतरस्यावल्लभस्य पूर्वं जीवनकाले प्रसाद प्रीतिदानाद्यनुग्रह न कृत्वा पश्चात्तापाद्धतोऽयमस्माभिरप्रीणित एव प्राणान् प्रादादित्यनुशयात् दाहमाप । प्रियभृत्यमरणादप्यसम्मानितमरणमेव स्वामिनो तु सहदुःखहेतुरासीदित्यर्थः । स्वभावोक्ति ॥ ५२ ॥

**उत्प्लुत्याराद्र्धचन्द्रेण लूने वक्त्रेऽन्यस्य क्रोधदष्टोष्ठदन्ते ।**
**सैन्यैः कण्ठच्छेदलीने कबन्धाद्भूयो बिभ्ये वल्गतः सासिपाणेः॥५३॥**

**उत्प्लुत्येति** । अर्धचन्द्रेण बाणेन लूने छिन्ने तथापि क्रोधेन दष्टौ ओष्ठौ यैस्ते दन्ता यस्य तस्मिन् अन्यस्य योधस्य वक्त्रे आरादनतिदूरमुत्प्लुत्य । 'आराद्दूरसमीपयोः' इत्यमरः । भूयः पुनरपि कण्ठस्य छेद छिन्नदेशः तत्र लीने स्थिते सति वल्गतो नृत्यतः सासिः पाणिर्यस्य तस्मात्कबन्धादपमूर्द्धकलेवरात् "भीत्रार्थाना भयहेतुः " इति पञ्चमी । सैन्यैर्बिभ्ये भीतम् । भावे लिट् । लूनस्यापि वक्त्रस्य पुन. स्वस्थानपातित्वाद्वल्गनासिधारणाभ्यां कबन्धादप्यकबन्धभ्रान्त्या सैन्यैर्बिभ्युरित्यर्थः । अत एव भ्रान्तिमदलङ्कारः ॥ ५३ ॥

**तूर्यारावैराहितोत्तालतालैर्गायन्तीभिः काहलं काहलाभिः ।**
**नृत्ते चक्षुःशून्यहस्तप्रयोगं काय कूजन्कम्बुरुच्चैर्जहास ॥५४॥**

**तूर्यारावैरिति** । आहिताः सम्पादिता उत्तालाः प्रस्फुटाः तालाः करपुटादिक्रियामानानि येषु तैः । 'ताल कालक्रियामानम्' इत्यमरः । तूर्यारावैर्मृदङ्गादिवाद्यघोषैस्तथा काहलं भृश गायन्तीभिः ध्वनन्तीभिः काहलाभिः शुष्कैर्वाद्यविशेषैश्च करणैः । 'काहल भृशशुष्कयोः । वाद्यभाण्डविशेषे तु काहल' काहला खले' इति विश्वः । काये अपमूर्ध्नि कलेवरे । अतएव चक्षुश्शून्यो दृष्टिरहितः हस्तप्रयोगो यस्मिन् कर्मणि तत्तथा नृत्ते नृत्यति सति । कर्त्तरि क्तः । कूजन् ध्वनन् कम्बुः शङ्खस्तटस्थ इवेत्यर्थः । उच्चैस्तर्गं जहास । दृष्टिशून्याभिनयस्य नाट्यशास्त्रविरोधात् अट्टहासमकरोदित्यर्थः । व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा । 'अङ्गैरालापयेद्गीतं हस्तेनार्थं प्रदर्शयेत् । दृष्टिभ्या भावयेद्भाव पादाभ्यां तालनिर्णयः' इति नाट्यविदः ॥ ५४ ॥

**प्रत्यावृत्तं भङ्गभाजि स्वसैन्ये तुल्यं मुक्ता किरन्ति स्म कश्चित् ।**
**एकौघेन स्वर्णपुङ्खैर्द्विषन्तः सिद्धा माल्यैः साधुवादैर्द्वयेऽपि ९५॥**

**प्रत्यावृत्तमिति** । स्वसैन्ये भङ्गभाजि सति प्रत्यावृत्तमभ्यमित्र कश्चिद्वीर तुल्यमेककाल मुक्तैः स्वर्णपुङ्खैः शरविशेषैः एकौघेन एकप्रहारेण द्विषन्त आकिरन्ति स्म । सिद्धाः खेचराः माल्यैर्दिव्यमालाभि । चातुर्वर्ण्यादित्वात् ष्यञ् प्रत्ययः । आकिरन्ति स्म । द्वयेऽपि द्विषन्तः सिद्धाश्च साधुवादैः साधुसाध्विति वाक्यैराकिरन्ति स्म । एतच्चितयमपि युगपत् प्रवृत्तमित्यर्थः । अत्र स्वर्णपुङ्खसुरमाल्यसाधुवादाना प्रकृतानामेव तुल्यकालैकौघप्रवृत्तिसाम्यादौपम्यावगमात्केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९५ ॥

**बाणाक्षिप्तारोहशून्यासनानां प्रक्रान्तानामन्यसैन्यग्रहीतुम् ।**
**संरब्धानां भ्राम्यतामाजिभूमौ वारीवारैः सस्मरे वारणानाम् ९६**

**बाणेति** । बाणैराक्षिप्ताः पातिताश्च रोहाः सादिनो येभ्यस्तानि अत एव शून्यानि रिक्तान्यासनानि आस्तरणानि येषाम् । अत एवान्यैः सैन्यैः परसैनिकैर्ग्रहीतुं प्राक्रान्तानामारब्धाना समन्तादवरुध्यमानानामित्यर्थः । अत एव संरब्धाना क्षुभितानाम् अत एव आजिभूमौ भ्राम्यताम् अनवतिष्ठमानाना वारणाना वारैर्वृन्दैः वारी बन्धनस्थानम् । 'वारः सूर्यादिदिवसे वारो वरणवृन्दयोः । वारी कटीभबन्धन्योः' इति विश्वः । सस्मरे स्मृता । तद्धर्मयोगादिति भावः । कर्मणि लिट् । अत्र शून्यासनत्वादीना विशेषणगत्या वारीस्मरणहेतुत्वात्काव्यलिङ्गम ॥ ९६ ॥

**पौनःपुन्यादस्रगन्धेन मत्तो मृद्नन्कोपाल्लोकमायोधनोर्व्याम् ।**
**पादे लग्नामत्र मालामिभेन्द्रः पाशीकल्पामायतामाचकर्ष॥९७॥**

**पौनःपुन्यादिति** । अत्र आयोधनोर्व्यां युद्धभूमौ पौनःपुन्यात्पुनः पुनरावृत्तेरित्यर्थः । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । "अव्ययानां भमात्रे टिलोपस्य साथ प्रातिपदिकाद्यर्थउपसंख्यानम्" इति टिलोपः । अस्रगन्धेन । रक्तगन्धाघ्राणादित्यर्थः । मत्त इभेन्द्रो महागजः कोपाल्लोकजन मृद्नन् क्षुभ्नन् पादे लग्नाम् ईषदसमाप्ता पाशी पाशीकल्पा पाशबन्धनसदृशीम् । 'पाशस्त्वश्वादिबन्धनम्' इति विश्वः । "बह्वादिभ्यश्च" इति विकल्पादीकारः, अभाषितपुंस्कत्वात् "घरूप" इत्यादिना ह्रस्वो न भवति । आयता दीर्घा मालामाचकर्ष । पाशीकल्पेत्यत्र तद्धितगता पूर्णोपमा ॥ ९७ ॥

**कश्चिन्मूर्छामेत्य गाढप्रहारः सिक्तः शीतैः शीकरैर्वारणस्य ।**
**उच्छ्वास प्रस्थिता तज्जिघृक्षुर्व्यर्थाकूता नाकनारी मुमूर्छ ९८**

**कश्चिदिति** । गाढः प्रहारो यस्य सः कश्चिद्वीरो मूर्च्छामेत्य वारणस्य शीतैः शीकरैः पुष्करतुषारैः सिक्तः सन् उच्छ्वास उज्जीवति स्म किन्तु त मूर्च्छामागत जिघृक्षुर्ग्रहीतुमिच्छुः । ग्रहेः सन्नन्तादुप्रत्ययः । प्रस्थिता त वरीतुमागतेत्यर्थः । नाकनारी व्यर्थाकूता तदुज्जीवना-

द्विफलमनोरथा नती मुमूर्च्छ । अत्राकूतवैयर्थ्यस्य विशेषणगत्या नाकनारीमूर्च्छाहेतुत्वात्काव्यलिङ्ग मूर्च्छासम्बन्धातिशयोक्त्या सकीर्य्यते ॥ ५८ ॥

**लूनग्रीवात्सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः ।**
**त्रेसे मुग्धैः सैंहिकेयानुकाराद्रौद्राकारादप्सरोवक्त्रचन्द्रैः ॥ ५९ ॥**

**लूनग्रीवादिति** । अपरस्य सायकेन लूनग्रीवाच्छिन्नकण्ठात् अत एव द्यामाकाशं प्रति आशु उच्चैरुत्पतिष्णोरुत्पतनशीलात् । "अलङ्कृञ्" इत्यादिना इष्णुच् प्रत्ययः । अत एव सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः । "स्त्रीभ्यो ढक्" । तमनुकरोतीति तदनुकारात्तत्सदृशादित्यर्थः । कर्म्मण्यण्प्रत्ययः । रौद्राकाराद् भीषणाकृतेरस्य वीरस्य आननात् मुग्धैः सुन्दरैः अप्सरसां वक्त्रैरेवचन्द्रैरिति रूपकं सिद्धम् । तस्य सैंहिकेयानुकारादिति स्पष्टोपमापेक्षत्वात् सङ्करः ॥ ५९ ॥

**वृत्तं युद्धे शूरमाश्लिष्य काचिद्रन्तुं तूर्णं मेरुकुंजं जगाम ।**
**त्यक्त्वा नाग्नौ देहमेति स्म यावत्पत्नी सद्यस्तद्वियोगासमर्था ६०**

**वृत्तमिति** । काचिदमरनारी युद्धे वृत्तं मृतम् । 'वृत्तोऽतीते दृढे ख्याते वर्त्तुलेऽपि वृते मृते' इति विश्वः । शूरमाश्लिष्य रन्तुं तूर्णं मेरोः कुञ्जं गह्वरं जगाम । यावत्तद्वियोगासमर्था तद्विरहासहा पत्नी सद्योऽग्नौ देहं त्यक्त्वा नैति स्म नाजगाम । अत्र मेरुकुञ्जासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६० ॥

**त्यक्तप्राणं संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः ।**
**प्राप्याखण्डं देवभूयं सतीत्वादाशिश्लेष स्वैव कञ्चित्पुरन्ध्री ॥ ६१ ॥**

**त्यक्तेति** । संयुगे युद्धे त्यक्तप्राणं कञ्चिद्वीरं हस्तिन्यां तिष्ठतीति हस्तिनीस्था करिणीमारूढा सती वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुर्गतप्राणा । स्वैव पुरन्ध्री स्वभार्य्यैव सतीत्वात्पतिव्रतात्वादखण्डमक्षयं देवभूयं देवत्वम् । "भुवो भावे" इति क्यप् । प्राप्याशिश्लेष स्त्रीणां पातिव्रत्यमेव पतिसालोक्यनिदानं नाग्निप्रवेशादिकमिति भावः । अत्र सतीत्वस्य विशेषणगत्या देवभूयहेतुत्वानुक्तेर्न काव्यलिङ्गम् । अतिशयोक्त्यादिकं तु यथासम्भवमूह्यम् ॥ ६१ ॥

**स्वर्गेवासं कारयन्त्या चिराय प्रत्यग्रत्वं प्रत्यहं धारयन्त्या ।**
**कश्चिद्भेजे दिव्यनार्य्या परस्मिन्लोके लोकं प्रीणयन्त्येह कीर्त्या ॥**

**स्वर्गे इति** । कश्चिद्वीरश्चिराय चिरकालं स्वर्गेवासम् "शयवासवासिष्वकालात्" इति विकल्पादलुक् । कारयन्त्या अनुभावयन्त्या अहन्यहनि प्रत्यहम् । "नपुंसकादन्यतरस्याम्" इत्यव्ययीभावे समासान्तष्टच्प्रत्ययः "अव्ययानां भमात्रे टिलोपः" इत्युक्तम् । प्रत्यग्रत्वं नूतनत्वं धारयन्त्या । परप्रेमास्पदत्वादिति भावः । लोकं प्रीणयन्त्या अद्भुतत्वं प्रापयन्त्या ।

प्रीञो ण्यन्तालटः शतरि ङीप् 'धूञ्प्रीञोर्नुग्वक्तव्यः" इति नुगागमः । दिव्यनार्य्या परस्मिँल्लोके इह लोके कीर्त्या च भेजे प्राप्तः । भजे. कर्म्मणि लिट् । रणमरणाल्लोकद्वयमपि जिगायेत्यर्थः । अत्र दिव्याङ्गनाकीर्त्योः प्रकृतयोरेव तुल्यधर्मसंबन्धात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ६२ ॥

**गत्वा नूनं वैबुधं सद्म रम्यं मूर्च्छाभाजामाजगामान्तरात्मा ।**
**भूयो दृष्टप्रत्ययाः प्राप्तसंज्ञाः साधीयस्ते यद्रणायाद्रियन्ते ॥६३॥**

**गत्वेति** । मूर्च्छाभाजामन्तरात्मा जीवः रम्य वैबुधं सद्म दिव्यभवनं गत्वा आजगाम । मूर्च्छासमये सुरलोकरामणीयकं दृष्ट्वा आजगाम । नूनमुत्प्रेक्षायाम् । कुत । यद्यस्मात्प्राप्तसंज्ञा' लब्धबोधाः सन्तः दृष्टप्रत्ययाः दृढविश्वासाः भूयः पुनरपि साधीयो बाढतरम् । बाढादीयसुनि "अन्तिकबाढयोर्नेदसाधौ" इति साधादेशः । रणाय रण कर्तुमाद्रियन्ते उत्सेहिरे इत्यर्थ. । कर्त्तरि लट् श्यन् प्रत्यय' । कथञ्चिदुज्जीवितानां पुनर्मृत्युप्राप्तिः श्रेयोदर्शनहेतुकेति भावः ॥ ६३ ॥

**कश्चिच्छस्त्रापातमूढोऽपबोढुर्लब्ध्वा भूयश्चेतनामाहवाय ।**
**व्यावर्तिष्ट क्रोशतः सख्युरुच्चैस्त्यक्तश्चात्मा का च लोकानुवृत्तिः॥**

**कश्चिदिति** । शस्त्रापातमूढः प्रहारमूर्च्छितः कश्चिद्वीरश्चेतनां सज्ञां लब्ध्वा अपबोढुर्मूर्च्छासमये युद्धभूमेरपनेतुः सख्युर्मित्रस्योच्चैः क्रोशतः आगच्छागच्छेत्याक्रोशति । "षष्ठी चानादरे" इति षष्ठी । क्रोशन्तमनादृत्येत्यर्थः । भूय पुनरपि आहवाय रणाय व्यावर्त्तिष्ट । आत्मा देहस्त्यक्तश्च तथाहि लोकानुवृत्तिश्च का नैवेत्यर्थ । सुहृज्जनानुरोधस्तु हितार्थिन' परिच्छेत्तु वृथेत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास ॥ ६४ ॥

**भिन्नोरस्कौ शत्रुणाकृष्य दूरादासन्नत्वात्कौचिदेकेषुणैव ।**
**अन्योऽन्यावष्टम्भसामर्थ्ययोगादूर्ध्वावेवस्वर्गतावप्यभूताम् ६५॥**

**भिन्नोरस्काविति** । शत्रुणा दूरादाकृष्यासन्नत्वात्तयोरित्यर्थः । सन्निकृष्टत्वादेकेषुणैव भिन्नोरस्कौ विदारितवक्षसौ कौचिद्वीरावन्योऽन्यावष्टम्भ एव सामर्थ्यं तस्य योगात्स्वभावदूर्ध्वावेव ऊर्ध्वं तिष्ठन्तावेव स्वर्गतावपि मृतावभूताम् । अपिश्चार्थ' । तत्र मृतयोरूर्ध्वावस्थानासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति ॥ ६५ ॥

**भिन्नानन्यैर्मोहभाजोऽभिजातान्हन्तुं लोलं वारयन्तः स्ववर्गम् ।**
**जीवग्राहं ग्राहयामासुरन्ये योग्येनार्थाः कस्य न स्याज्जनेन ६६॥**

**भिन्नानिति** । अन्ये वीरा अन्यैर्भिन्नान् विदारितान् अत एव मोहभाजो मूर्च्छाभाजो मूर्च्छागतानभिजातान्कुलीनान् । 'अभिजातः स्थितौ न्याय्ये कुलीनप्राज्ञयोरपि' इति विश्वः । हन्तुं लोलम् उत्सुक स्ववर्गं वारयन्तः जीव गृहीत्वा जीवग्राह ग्राहयामासुः जीवमेव ग्राहयामासुरित्यर्थः । "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति णमुल्प्रत्ययः । कषादित्वादनुप्रयोगः । जीव-

ग्रहणप्रयोजनमर्थान्तरन्यासेनाह । तथा हि योग्येन जनेन हेतुना कस्य पुंसोऽर्थः कीर्त्यादिप्रयोजनं न स्यात् । स्यादेव सर्वस्यापीत्यर्थः । अतो वीराणा रणेष्वपि अतिपरिक्षतरक्षणमेव श्रेयः । 'नार्त्तं नातिपरिक्षतम्' इति हननिषेधादिति भाव' ॥ ६६ ॥

**भग्नैर्दण्डैरातपत्राणि भूमौ पर्यस्तानि प्रौढचन्द्रद्युतीनि ।**
**आहाराय प्रेतराजस्य रौप्यस्थालानीवस्थापितानि स्म भान्ति॥**

**भग्नैरिति** । भग्नैर्दण्डैः हेतुना । भग्नदण्डत्वादिति भावः । भूमौ पर्यस्तानि उत्तानपतितानि प्रौढचन्द्रद्युतीनि पूर्णेन्दुप्रभाणि आतपत्राणि । श्वेतच्छत्राणीत्यर्थः । प्रेतराजस्यान्तकस्य आहाराय भोजनाय स्थापितानि विहितानि रौप्यस्थालीनि राजतभाजनानीव भान्ति स्मेत्युत्प्रेक्षा ॥ ६७ ॥

**रेजुर्भ्रष्टा वक्षसः कुंकुमाङ्का मुक्ताहाराः पार्थिवानां व्यसूनाम् ।**
**हासाल्लक्ष्याः पूर्णकामस्य मन्ये मृत्योर्दन्ताः पीतरक्तासवस्य ६८**

**रेजुरिति** । व्यसूना मृताना पार्थिवाना वक्षसो भ्रष्टाः पतिताः कुङ्कुमाङ्काः कुङ्कुमारुणिता इत्यर्थः । मुक्ताहाराः पूर्णकामस्य सकलराजकमहारात्सफलमनोरथस्य अत एव पीत रक्तमेवासव येन तस्य मृत्योः हासादट्टहासाल्लक्ष्या दृश्या दन्ता रेजुरिति मन्ये इत्युत्प्रेक्षा ॥ ६८ ॥

**निम्नेष्वोघीभूतमस्रक्षतानामस्रं भूमौ यच्चकासाञ्चकार ।**
**रागार्थं तत्किं नु कौसुम्भमम्भःसंव्यानानामन्तकान्तःपुरस्य६९**

**निम्नेष्विति** । भूमौ निम्नेषु निम्नस्थलेषु ओघीभूत राशीभूतम् अस्रक्षताना सम्बन्धि यदस्र रक्त चकासाञ्चकार दिदीपे । 'चकासृ दीप्तौ' इति धातोर्लिट् "कास्यनेकाच आम् वक्तव्य" इत्याम्प्रत्यये कृञोऽनुप्रयोगः । तदस्रमन्तकान्त.पुरस्य कृतान्तावरोधस्य संव्यानानामुत्तरीयाणा रागार्थं रञ्जनार्थं कुसुम्भयस्येद कौसुम्भम् अम्भ. किंनु कुसुम्भद्रवो नु वेत्युत्प्रेक्षा ॥ ६९ ॥

**रामेण त्रिःसप्तकृत्वो ह्रदानां चित्रं चक्रे पञ्चकं क्षत्रियास्रैः ।**
**रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्संख्येऽसंख्याः प्रावहन्द्वीपवत्यः॥**

**रामेणेति** । रामेण भार्गवेण सामर्थ्यात्रीन्वारान् त्रिः । "द्वित्रिचतुर्भ्यः सुच्" इति सुच्प्रत्ययः । त्रिरावृत्ताः सप्त त्रिःसप्तकृत्वः एकविंशतिवारानित्यर्थः । "सख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" इति कृत्वसुच्प्रत्यय. । क्षत्रियास्रै राजन्यरक्तैः चित्रमद्भुत ह्रदानां पञ्चपरिमाणमस्य पञ्चकम् । "सख्यायाः । सञ्ज्ञासङ्घसूत्राध्ययनेषु" इति सङ्घार्थे कन् प्रत्ययः । चक्रे कृत तस्मिन् सङ्ख्ये युद्धे । 'मृधमास्कन्दन सङ्ख्यम्' इत्यमरः । क्षणादेव रक्तैर-

त्राम्भोभिः असख्या द्वीपवत्यो नद्यः प्रावहन् प्रासरन् रामेण बहुकालेन च स्यमन्तपञ्च-काख्य ह्रदपञ्चकमेव कथञ्चित् कृतम् । अत्र तु क्षणमात्रेणासख्या नद्य प्रवृत्ता इत्युपमानादुपमेयस्याधिक्योक्तर्व्यतिरेकालङ्कार ॥ ७० ॥

सन्दानान्तादङ्घ्रिभिः शिक्षितास्त्रैराविश्याधः शातशस्त्रावलूनाः ।
कूर्म्मौपम्यं व्यक्तमन्तर्नदीनामैयाः प्रापन्नङ्घ्रयोऽसृङ्मयीणाम् ॥ ७१ ॥

सन्दानान्तादिति । शिक्षितास्त्रैरभ्यस्तास्त्रैर्विचरद्भिरायुधीयैः अत्रः रथानामधस्तादाविश्य प्रविश्य सन्दानान्तात् बन्धनप्रदेशात् गुल्फदेशमधिकृत्येत्यर्थः । शात शितम् ।"शाच्छोरन्यतरस्याम्" इति विकल्पादीत्वाभाव । तेन शस्त्रेणाव नाः छिन्नाः । इभानामिमे ऐभाः अश्वयश्वरणा. असृङ्मयीणा नदीनामान्तरभ्यन्तरे व्यक्त कूर्म्मौपम्य कमठोपमाम् । स्वार्थे ष्यञ् प्रत्ययः । अत एवौपम्यादन. चातुर्वर्ण्यवदिति गमन. । प्रापन् प्राप्ता । आपो लुङि । पुषादित्वात् च्लेरङादेशः । उपमा । ॥ ७१ ॥

पद्माकारैर्योधवक्त्रैरिभानां कर्णभ्रष्टैश्चामरैरेव हंसैः ।
सोपस्काराः प्रावहन्नस्ततोयाः स्रोतस्विन्यो वीचिपूच्चैस्तरद्भिः ॥ ७२ ॥

पद्माकारैरिति । उच्चैर्वीचिषु तरद्भि· प्लवमानैः पद्माकारैः कमलकल्पैर्योधवक्त्रैर्भटमुखैरिभाना कर्णेभ्यो भ्रष्टैश्चामरैर्हंसै सोपस्काराः सपरिकरा· । ' उपात्प्रतियत्नवैकृत" इत्यादिना सुडागम । अस्रतोय. रक्तजला स्रोतस्विन्यो नद्यः प्रावहन् । अत्र रूपकोपमयोः सङ्करः सुगमः ॥ ७२ ॥

उत्क्रान्तानामामिषायोपरिष्टादध्याकाशम्बभ्रमुः पत्रवाहाः ।
मूर्त्ताः प्राणा नूनमद्याप्यवेक्षामासुः कायन्त्याजिता दारुणास्त्रैः ॥ ७३ ॥

उत्क्रान्तानामिति । पत्राणि वहन्तीति पत्रवाहाः पत्त्रिणः आमिषाय आमिषमत्तुम् । "क्रियार्थोपपदस्य च कर्म्मणि स्थानिन·" इति चतुर्थी । उत्क्रान्ताना मृतानाम् उपरिष्टादध्याकाशमाकाशे । विभक्त्यर्थेऽव्ययीभाव । बभ्रमुः भ्रेमु· । " वा: जॄभ्रमुत्रसाम्" इति विकल्पादेत्वाभ्यासलोपाभावः । अत्रोत्प्रेक्ष्यते । दारुणास्त्रै· घोरास्त्रै काय त्याजिता विसर्जिता· । त्यजेर्ण्यन्तात् द्विकर्म्मकात्कर्म्मणि क्त· । 'ण्यन्ते कर्तुश्च कर्म्मणः' इति वचनात् । मूर्त्ता मूर्त्तिमन्त. । प्राणा अद्येदानीमपि कायमवेक्षामासु· पूर्वाभिमानात् पुन· कायप्रवेशापेक्षिणो मूर्त्ताः प्राणा एव नूनमाराद्भ्रमन्तीत्युत्प्रेक्षार्थ । ' इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्यय " कृञ्चानुप्रयुज्यते लिटि" इत्यस्तेरनुप्रयोग: " आम्प्रत्ययवत्" इत्यत्र कृञ् एवेति नियमाद्स्तेर्नात्मनेपदम् ॥ ७३ ॥

आतन्वद्भिर्दिक्षु पत्त्राग्रनादम्प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखाग्रैः ।
आदौ रक्तं सैनिकानामजीवैर्जीवैः पश्चात्पत्त्रिपूगैरपायि ॥ ७४ ॥

आतन्वद्भिरिति । दिक्षु पत्त्रायनाद पक्षान्तघोषम् आतन्वद्भिर्विस्तृणद्भिर्दूरादाशु प्राप्तैरा-न्तैरजीरन्त्यजीर्णैश्चेतनैः पचाद्यजन्तेन नञ्समासः । पत्त्रिगैर्बाणव्रातैरित्यर्थः । तीक्ष्णैर्मुखाग्रैः करणैः । सैनिकानां रक्तमपायि पीतम् । पिबतेः कर्म्मणि लुङ् " आतो युक्चिण्कृतोः " इति युगागमः । पत्त्राज्जीर्णैश्चेतनैः पत्त्रिगैः पक्षिसङ्घैः कर्तृभिः । तीक्ष्णैर्मुखाग्रैश्चञ्चुपुटैः । करणैः । अपायि अत्रापि पत्त्रिगा प्रकृतत्वात्केवलप्रकृतविषयः श्लेषः ॥ ७४ ॥

ओजोभाजां यद्रणे संस्थितानामादत्तीव्रं सार्द्धमङ्गेन नूनम् ।
ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तारं दीप्तजिह्वा ववाशे॥७५॥

ओजोभाजामिति । दीप्ता ज्वलन्ती जिह्वा यस्याः सा दीप्तजिह्वा शिवा रणे संस्थितानां मृतानामोजोभाजामोजस्विनाम् अङ्गेन गात्रेण सार्द्धं यत्तीव्रं तिग्मं तेज आददभक्षयत् । अदेर्लङ् " अद सर्वेषाम् " इत्यडागमोऽपृक्तस्य । " आडजादीनाम् " इत्याडागमोऽङ्गस्य । " आटश्च " इति वृद्धिः । तदन्तरन्तरेऽन्तरित तेजोज्वालाव्याजान्मुखोल्काच्छलादुद्वमन्ती तारमुच्चैर्ववाशे ररास । ' तिरश्चां वाशितं रुतम् ' इत्यमरः । नूनमित्युत्प्रेक्षायाम् । अत्र व्याजश-ब्देन ज्वालात्वापह्नवेन तेजस्त्वोत्प्रेक्षणे सापह्नवोत्प्रेक्षेति सर्वस्वकारः ॥ ७५ ॥

नैरन्तर्यच्छिन्नदेहान्तरालं दुर्भक्षस्य ज्वालिनावाशितेन ।
योद्धुर्बाणप्रोतमादीप्य मांसम्पाकापूर्वस्वादमादे शिवाभिः ७६॥

नैरन्तर्येति । नैरन्तर्येणाविच्छेदेन छिन्नं देहस्यान्तरालं यस्मिन् कर्मणि तद्यथा तथा बाणैः प्रोतं स्यूतम् अत एव दुर्भक्षस्य भक्षितुमशक्यस्य । कृच्छ्रार्थे खल्प्रत्ययः । योद्धुर्योधस्य सम्बन्धि मांसं ज्वालिना ज्वालावता वाशितेन रुतेन । शिवानां वाशने जिह्वा ज्वलतीति प्रसिद्धिः । आदीप्य प्रज्वाल्य । बाणदाहाय मांसपाकाय चेति भावः । अत एव पाकेनापूर्वोऽभिनवः स्वादो रुचिर्यस्य तत्तथा शिवाभिर्गोमायुभिः । ' स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः ' इत्यमरः । आदे जघसे भक्षितमित्यर्थः । " लिट्यन्यतरस्याम् " इति विकल्पाददेर्न घस्लादेशः । वाशितोत्थया जिह्वाज्वालया दग्धे इष्टप्रतिबन्धेन पाकरुचिरं जघस इत्यर्थः । अत्र पाकापूर्व-स्वादाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ७६ ॥

ग्लानिच्छेदी क्षुत्प्रबोधाय पीत्वा रक्तारिष्टं शोणिताजीर्णशेषम् ।
स्वादुङ्कारं कालखण्डोपदंशं क्रोष्टा डिम्बं व्यष्वणद्व्यस्वनच्च ७७॥

ग्लानीति । क्रोष्टा जम्बुकः क्षुत्प्रबोधाय ग्लानिच्छेदी खेदहारी शोणितो जारितः अजी-र्णशेषो येन तद्रक्तमेवारिष्टं पानविशेष इति रूपकम् । तत्पीत्वा स्वादुङ्कारं स्वादूकृत्य " स्वादुमि णमुल् " इति णमुल् । कालखण्डेन यकृता उपदंशे कालखण्डमुपदंश कृत्वेत्यर्थः । " कालखण्डयकृती तु समे ' इत्यमरः । " उपदंशस्तृतीयायाम " इति णमुल् । कालखण्डस्य

दशनक्रियाकर्मत्वेऽपि भुजिक्रियाकरणत्वात् तृतीयोपपदतया "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति विकल्पेनोपपदसमासः। डिम्भ कलेवरं व्यष्वणत् भुक्तवानित्यर्थः। "वेश्च स्वनो भोजने" इति षत्वम्। व्यस्वनदवादयच्चेति समुच्चयः। अभोजनार्थत्वात् पत्व न ॥ ७७ ॥

क्रव्यात्पूगैः पुष्कराण्यानकानामत्याशाभिर्मेदसो दारितानि।
आभीलानि प्राणिनः प्रत्यवस्यन्कालो नूनं व्याददावाननानि॥

**क्रव्यादिति**। क्रव्यमदन्तीति क्रव्यादो मांसभक्षका कङ्कगृध्रादयः। "क्रव्ये च" इति विट्प्रत्ययः। तेषा पूगै कर्तृभिः। मेदसो वपाया.। 'मेदस्तु वपा वसा' इत्यमरः। प्रत्याशाभिस्तृष्णाभिर्दारितानि मेदरिवत्वभ्रान्त्या पाटितान्यानकाना तूर्याणा पुष्कराणि मुखानि। 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमर.। प्राणिन. करितुरगादीन् प्रत्यवस्यन् अभ्यवहरन्। 'अभ्यवहार. प्रत्यवसान भोजन जग्धि.' इति हलायुध.। कालोऽन्तक. आभीलानि भयङ्कराणि। 'आभील भीमकृच्छ्रयोः' इति विश्वः। आननानि व्याददौ विददार। "आङो दोनास्यविहरणे" इत्यस्य प्रत्युदाहरणमेतत्। यानि विदारितानि पुष्कराण तान्येवाननानि। नूनमित्युत्प्रेक्षायाम् ॥ ७८ ॥

कीर्णा रेजे साजिभूमिः समन्तादप्राणद्भिः प्राणभाजां प्रतीकैः।
बह्वारम्भैरर्द्धसंयोजितैर्वा रूपैः स्रष्टुः सृष्टिकर्मान्तशाला॥७९॥

**कीर्णेति**। अप्राणद्भिरजीवद्भिः छिन्नत्वान्निष्प्राणैरित्यर्थः। 'अन प्राणने' इति धातोर्लटः शत्रादेशः। प्राणभाजा प्राणिना प्रतीकैरवयवै.। 'अङ्ग प्रतीकोऽवयव' इत्यमर'। समन्तात्कीर्णा सा आजिभूमिः ईषदसमाप्तारम्भैरिति बह्वारम्भैः किञ्चिदूनसृष्टैरित्यर्थः। "विभाषा सुपो बहुच् पुरस्तात्तु" इति बहुच्प्रत्ययः। तथार्द्धसयोजितैरर्द्धसृष्टैश्च रूपैः आकारैः। 'रूप स्वरूपे सौन्दर्ये आकारश्लपयोरपि' इति विश्वः। कीर्णा स्रष्टु' धातुः सृष्टिकर्मान्तशाला वा सृष्टिकर्मणो नियतागारमिव रेजे इत्युत्प्रेक्षा ॥ ७९ ॥

आयन्तीनामविरतरयं राजकानीकिनीनामित्थं सैन्यैः सममलघुभिः श्रीपतेरूर्मिमद्भिः। आसीदोघैर्मुहुरिव महद्वारिधेरापगानां दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम् ॥ ८० ॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये संकुलयुद्धवर्णनं नामाष्टादशः सर्गः ॥ १८ ॥

'**आयन्तीनामिति**। इत्थमुक्तरीया अविरतरयमविच्छिन्नवेग यथा तथा आयन्तीनामभिधावन्तीनामौद्धत्यभाजा प्रागल्भ्यभाजा राज्ञा समूहा राजकानि। "गोत्रोक्ष" इत्यादिना वुञ्

अन्वयः । तेषामनीकिन्यः सेनास्तासां राजकानीकिनीनाम् अलघुभिर्महद्भिरूर्म्मिमद्भिस्तरङ्गवद्भिः श्रीपतेः कृष्णस्य सैन्यैः समं सेनाभिः सह अपां समूह आपम् । "भिक्षादिभ्योऽण्" । आपेन गच्छन्तीति आपगानामुक्तविशेषणविशिष्टानां वारिधेरोघैः प्रवाहैरिव कृतो गुरुतरध्वानो महाध्वनिर्यस्मिन् तन्महद्दोलायुद्धम् अनियतजयपराजययुद्धम् मुहुरासीत् । उपमा । मन्दाक्रान्ता वृत्तमेतत् ॥८०॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्येऽष्टादशः सर्गः ॥ १८ ॥

# एकोनविंशः सर्गः ।

तदेवमष्टादशसर्गे तुमुलं युद्धमभिधायेदानीमेकोनविंशे सर्गे द्वन्द्वयुद्धमनुष्टुभेन छन्दसा चित्रबन्धेन वर्णयितुमारभते—

**अथोत्तस्थे रणाटव्याममुहृद्वेणुदारिणा ।**
**नृपाङ्घ्रिपौघसङ्घर्षादग्निवद्वेणुदारिणा ॥ १ ॥**

**अथेत्यादि** । अथैवं तुमुलयुद्धानन्तरं रणोऽटवीवेत्युपमितसमासः । अग्निवदिति तद्धितौपम्यलिङ्गात् । एवमुत्तरत्रापि द्रष्टव्यम् । तस्यां रणाटव्याम् असुहृदः शत्रवो वेणवो वंशा इव । 'वेणुमस्करतेजना' इति वंशपर्यायेष्वमरः । तान्दारयति यस्तेनासुहृद्वेणुदारिणा वेणुदारिणा बाणात्मजेन नृपाः अङ्घ्रिपाः पादपा इव तेषामोघाः सवास्तेषां सङ्घर्षात् मत्सरात् श्लेषाच्च अग्निवदग्नितुल्यम् । "तेन तुल्यम्" इत्यादिना तुल्यार्थे वतिप्रत्ययः। उत्तस्थे उत्थितम् । भावे लिट् । अत्राग्निवदिति तुल्यार्थेन वतिना धर्म्मव्यवधाने सादृश्यप्रतिपादिना उपमानोपमेयसमानधर्म्मसादृश्यप्रतिपादकानां चतुर्णां चोपादानाच्चेयमार्थी तद्धितगता पूर्णोपमा । सा च रणाटव्यादिसमासगतोपमासापेक्षेति सङ्करः । सर्गेऽस्मिन् अनुष्टुप् वृत्तम् । ' पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः । गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम्' इति लक्षणात् । अत्रैकान्तरक्रमेण यमकाद्यन्यतमशब्दालङ्कारनियमः, सर्वत्र यथासम्भवमर्थालङ्कारश्च, तत्र यमकलक्षणमुक्तं दण्डिना—"अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः । यमकं तच्च पादानामादिमध्यान्तगोचरम् । एकद्वित्रिचतुष्पादैर्यमकानां विकल्पना । आदिमध्यान्तमध्यान्तमध्याद्याद्यान्तसर्वतः" इति । अत्रेदं समपादान्तं यमकं द्विपादयमकभेदः ॥ १ ॥

**आपतन्तममुं दूराद्दूरीकृतपराक्रमः ।**
**बलोऽवलोकयामास मातङ्गमिव केसरी ॥ २ ॥**

**आपतन्तमिति** । आपतन्तमाधावन्तम् अमु वेणुदारिण दूरात् ऊरीकृतपराक्रमोऽङ्गीकृतपौरुषस्तेन सहानुगतसप्रहार इत्यर्थ. । बलो वलभद्र. केसरी सिंहो मातङ्ग गजमिवावलोकयामास । अनयोरिव तदन्तरमिति भाव । अतोऽलङ्कारेण वस्तुध्वनि· ॥ २ ॥

## एकाक्षरपादश्लोकः ।

**जजौजोजाजिजिज्जाजी तंततोऽतिततातितुत् ।**
**भाभोऽभीभाभिभूभाभूरारारिररिरीररः ॥ ३ ॥**

**जजाविति** । ततोऽवलोकनानन्तर जजन्तीति जजा· योधाः । 'जज युद्धे' पचाद्यच् । जजानामोजसा जाता जजौजोजा तामाजि जयतीति जजौजोजाजिजित् । जयते क्विप् । जजतीति जाजी योधी । ताच्छील्ये णिनिः । अतिततानत्युद्धतान् अतितुदति अतिव्यथयतीति अतितुत् । तुदतेः क्विप् । भस्येवाभा यस्य स भाभो नक्षत्रकान्ति. । 'नक्षत्रमृक्ष भ तारा' इत्यमरः । नास्ति भीर्येषा तेऽभियो निर्भीका. तानिमान् गजान् अभिभवतीति अभीभाभिभूः । क्विप् । तस्याः भासस्तेजसो भूः स्थानं अभीभाभिभूभाभूः । अरा सन्त्येषामित्यरीणि चक्राणि तैः रीणन्ति गच्छन्तीति अरिर्यो रथा. । 'री गतिश्लेषणयोः' इति धातोः क्विप् । तेषाम् ईर प्रेरण राति अरिरीररो रथिकः । आतोऽनुपसर्गेकः । अरिः शत्रुर्बलभद्र त वेणुदारिणम् आर योद्धुमाससारेत्यर्थः । 'ऋ गतौ' इति धातोर्लिट् द्विर्भावेकृते णलि वृद्धि·, अभ्यासस्योरदत्वे 'अत आदेः" इति दीर्घे पुनः सवर्णदीर्घ. । भिन्नैकाक्षरपादाख्योऽनुप्रासभेदः । भाभ इत्युपमानुप्रासयोरेकवाचकानुप्रवेशलक्षणस्सङ्करः ॥ ३ ॥

**भवन्भयाय लोकानामाकम्पितमहीतलः ।**
**निर्घात इव निर्घोषभीमस्तस्यापतद्रथः ॥ ४ ॥**

**भवन्निति** । लोकाना जनाना जगता च । 'लोकस्तु भुवने जने' इत्यमरः । भयाय भवन् सम्पद्यमान· भय जनयन्नित्यर्थः । "क्लृपेः सम्पद्यमाने चतुर्थी च वक्तव्या"· इति क्लृपेरर्थनिर्देशाच्चतुर्थी । आकम्पितमहीतलो भूकम्प कुर्वन्नित्यर्थः । निर्घोषेण भीमो भयङ्करः तस्य बलभद्रस्य र थो निर्घात इवापतत अधावत् । श्रौती पूर्णोपमा ॥ ४ ॥

**रामे रिपुः शरानाजिमहेष्वास विचक्षणे ।**
**कोपादथैनं शितयामहेष्वा स विचक्षणे ॥ ५ ॥**

**राम इति** । रिपुर्वेणुदारी आजिमहेषु रणोत्सवेष्विति रूपकम् । 'मह उद्धव उत्सवः' इत्यमर. । विचक्षणे प्रगल्भे । विचष्ट इति कर्त्तरि ल्युडिति न्यासकारः । "असनयोश्च प्रतिषेधो वक्तव्य." इति चाक्षिङः ख्याञादेशाभावः । रामे बलभद्रे शरान् आस चिक्षेप अस्यतेर्लिट् "अत आदेः" इत्यभ्यासदीर्घे सवर्णदीर्घ । कोपात्स राम एन वेणुदारिण शितया शातया । "शा-

च्छोरन्यतरस्याम्'' इतीत्वम्। महेष्वा महेषुणा। 'पत्री रोप इषुर्द्वयो' इत्यमरः। विचक्षणे जघान। 'क्षणु हिंसायाम्' इति धातोः कर्त्तरि लिट्। अभिन्नसमपादोनाम पादाभ्यासयमकभेद। एवमुत्तरत्रापि द्रष्टव्यम्॥ ५॥

दिशमर्कमिवावाचीं मूर्च्छागतमपाहरत्।
मन्दप्रतापं तं सूतः शीघ्रमाजिविहायसः ६॥

दिशमिति। मूर्च्छागतं रामेषुपातान्मोहमुपगतम्। अत एव मन्दप्रतापमल्पप्रकाश वेणुदारिणम् अवाचीं दक्षिणा दिशं प्राप्तम्। अत एव मन्दप्रतापमर्कमिव सूतः सारथिरनूरुश्च आजेविहायस आकाशादिवाजिविहायस इत्युपमितसमास। शीघ्रमपाहरत् अपसारितवान्। उपमा॥ ६॥

कृत्वा शिनेः साल्वचमूं सप्रभावा चमूर्जिताम्।
ससर्ज्ज वक्त्रैःफुल्लाब्जसप्रभा वाचमूर्जिताम्॥ ७॥

कृत्वेति। प्रभावेन सह वर्त्तत इति सप्रभावा महानुभावशिने सात्यकिपितामहस्य चमूः सेना साल्वो नाम चैद्यपक्षो राजा तस्य चमू सेना जिता कृत्वा जित्वेत्यर्थः। अत एव वक्त्रैः मुखै। "येनाङ्गविकारः" इति तृतीया। विकासस्यापि विकारत्वात्। फुल्लाब्जस्य प्रफुल्लारविन्दस्य सप्रभा समानप्रभा। हर्षेण विकसितवक्त्रासतीत्यर्थः। ऊर्ज्जितामुदारां वाच समर्ज्ज। के यूयमस्मदग्र इत्याद्युच्चैर्जगर्ज जगादेत्यर्थ.। उपमायमकयो. संसृष्टिः॥ ७॥

उल्मुकेन द्रुमं प्राप्य संकुचत्पत्रसञ्चयम्।
तेजः प्रकिरता दिक्षु सप्रतापमदीप्यत॥ ८॥

उल्मुकेनेति। दिक्षु तेज. प्रभाव प्रकाश च प्रकिरता विक्षिपता उल्मुकेन भागवतेन राज्ञा अलातेन च। सङ्कुचन्ती पत्रसम्पद्वाहनसम्पत्पर्णसमृद्धिश्च यस्य तम्। सप्रताप सपराक्रम प्रकटतापसहित च द्रुमं द्रुमाख्य राजान वृक्ष च प्राप्यादीप्यत प्रजज्वले। भावे लङ्। अत्राभिधायाः प्रकृतार्थे नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव न श्लेषः॥ ८॥

पृथोरध्यक्षिपद्रुक्मी यया चापमुदायुधः।
तयैव वाचापऽगमं ययाचापमुदायुधः॥ ९॥

पृथोरिति। रुक्मी भीष्मकात्मजो रुक्मिणीभ्राता। उदायुध उद्यतायुधः सन् यया वाचा पृथो राज्ञश्चापमध्यक्षिपत् विगिद वृथा कष्टमिति निनिन्द अपगता मुत् यस्यास्तया अपमुदा- निरुत्साहया तयैव वाचा युधो युद्धादपगममपसरण यया च। मां त्राहि पलायमान शरणागतोऽस्मीति प्रार्थयामासेत्यर्थः। याचिरुभयपदी॥ ९॥

समं समन्ततो राज्ञामापतन्तीरनीकिनीः ।
कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥ १० ॥

**सममिति** । समं युगपत्समन्ततः आपतन्तीरागच्छन्ती राज्ञां चैद्यपक्षाणामनीकिनीः सेनाः । कृष्णस्यापत्यं पुमान् कार्ष्णिः प्रद्युम्नः । अत इञ् । निम्नगाः नदीः सरस्वान् समुद्र इवैकोऽसहायः प्रत्यग्रहीत् प्रत्यवरुरोध ॥ १० ॥

दधानैर्घनसादृश्यं लसदायसदंशनैः ।
तत्र काञ्चनसच्छाया ससृजे तैः शराशनिः ॥ ११ ॥

निरोष्ठ्यः ।

**दधानैरिति** । लसन्ति आयसानि अयोमयानि दंशनानि वर्म्माणि येषां तैः । 'तनुत्रं वर्म्म दंशनम्' इत्यमरः । अत एव घनसादृश्यं कार्ष्ण्यान्मेघसाम्यं दधानैस्तैः सैनिकैः तत्र कार्ष्णौ काञ्चनसच्छाया सुवर्णवर्णा शर एवाशनिः विद्युत्ससृजे उत्सृष्टा । उपमारूपकयोः संसृष्टिः । ओष्ठ्यवर्णविरहान्निरौष्ठ्यं चित्रभेदः । शब्दालङ्कारः ॥ ११ ॥

नखांशुमञ्जरीकीर्णामसौ तरुरिवोच्चकैः ।
बभौ बिभ्रद्धनुःशाखामधिरूढशिलीमुखाम् ॥ १२ ॥

**नखेति** । नखांशवो मञ्जर्य इव ताभिः कीर्णां व्याप्ताम् अधिरूढाः शिलीमुखाः बाणा अलयश्च यस्यां ताम् । 'अलिबाणौ शिलीमुखौ' इत्यमरः । धनुः शाखेव तां बिभ्रदसौ कार्ष्णिरुच्चकैरुन्नतस्तरुरिव बभौ । तरुरिवेति लिङ्गात्सर्वत्रोपमितसमासः । शिलीमुखेति श्लिष्टविशेषणेयमुपमा ॥ १२ ॥

प्राप्य भीममसौ जन्यं सौजन्यन्दधदानते ।
विध्यन्मुमोच न रिपूनरिपूगान्तकः शरैः ॥ १३ ॥

**प्राप्येति** । अरिपूगानां शत्रुसङ्घानामन्तकः अरिपूगान्तकोऽसौ कार्ष्णिः भीमं भयङ्करं जन्यं युद्धं प्राप्य । "युद्धमायोधनं जन्यम्" इत्यमरः । आनते नम्रे सौजन्यं सौहार्दं दधत् न तु विध्यन् । 'न क्लीबं न कृताञ्जलिम्' इति निषेधादिति भावः । रिपून् प्रतिपक्षान् शरैर्विध्यन् प्रहरन् न मुमोच न ररक्षेत्यर्थः । सदृशयमकभेदः ॥ १३ ॥

कृतस्य सर्वक्षितिपैर्विजयाशंसया पुरः ।
अनेकस्य चकारासौ बाणैर्बाणस्य खण्डनम् ॥ १४ ॥

**कृतस्येति** । असौ कार्ष्णिः सर्वक्षितिपैर्विजयाशंसया विजयाशङ्कया पुरोऽग्रे कृतस्य नियुक्तस्य प्रयुक्तस्य वा अनेकस्यानेकाकिनः ससहायस्येत्यर्थः । अन्यत्रानेकस्य बहुसङ्ख्यस्य

वाणस्य वाणासुरस्य शरजातस्य च वाणैः खण्डनं छेदं चकार । अत्र बाणयोर्द्वयोरपि प्रकृतत्वात्केवलप्रकृतयोः श्लेषः ॥ १४ ॥

या बभार कृतानेकमाया सेना ससारताम् ।
धनुः स कर्षन्रहितमायासेनाससार ताम् ॥ १५ ॥

येति । या सेना कृतानेकमाया कृतबहुकपटा सती ससारतां सारवत्तां बभार तां सेनां स कार्ष्णिः धनुः कर्षन् धनुषा विध्यन्नित्यर्थः । आयासेन रहितमनायासं यथा तथा आससार अभियुक्तवानित्यर्थः । बाणं भङ्क्त्वा तत्सेना बभञ्जेत्यर्थः ॥ १५ ॥

ओजो महौजाः कृत्वाधस्तत्क्षणादुत्तमौजसः ।
कुर्वन्नाजावमुख्यत्वमनयन्नाम मुख्यताम् ॥ १६ ॥

ओज इति । महौजा महाबलः प्रद्युम्नः उत्तमौजसो नाम राज्ञः ओजस्तत्क्षणादेवाधः-कृत्वाभिभूय आजौ युद्धे अमुख्यत्वमप्रधानत्वं कुर्वन् अथवा अमुख्यत्वम् अमुख्यार्थत्वं तन्नाम्नः कुर्वन् नाम निजं प्रद्युम्ननामधेयं मुख्यतां प्रधानतां प्रसिद्धार्थतां चानयत् । प्रकृष्टं द्युम्नं बलं यस्येति प्रद्युम्न इति स्वामी ॥ १६ ॥

दूरादेव चमूभल्लैः कुमारो हन्ति स स्म याः ।
न पुनः सांयुगीं तास्स्म कुमारोहन्ति सस्मयाः ॥ १७ ॥

दूरादिति । स कुमारः प्रद्युम्नः सस्मयाः सगर्वाः याश्चमूर्दूरादेव भल्लैर्बाणविशेषैर्हन्ति स्म जघान ताश्चम्वः पुनर्भूयः संयुगस्येमां सांयुगीं कुं पृथ्वीं रणभुवमित्यर्थः 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः । न आरोहन्ति स्म नारूढाः ॥ १७ ॥

निपीड्य तरसा तेन मुक्ताः काममनास्थया ।
उपाययुर्विलक्षत्वं विद्विषो न शिलीमुखाः ॥ १८ ॥

निपीड्येति । तेन प्रद्युम्नेन तरसा बलेन कामं निपीड्य अनास्थया अनादरेण मुक्ताः 'आर्त्ता न परिहन्तव्या' इति निषधनावध्या इति जीवन्तो मुक्ता इत्यर्थः । अन्यत्र क्षिप्ताः विद्विषो विलक्षत्वं सत्रपत्वमाययुः । 'विलक्षस्तु त्रपान्विते' इत्यमरः । शिलीमुखा बाणास्तु विलक्षत्वं लक्षभ्रष्टत्वं नाययुः । अत्र द्वयोरपि विलक्षत्वयोरभेदाध्यवसायादयं व्यतिरेको विद्विषां शिलीमुखानां च प्रकृतत्वात्तुल्ययोगितौपम्याश्रित इति सङ्करः ॥ १८ ॥

तस्यावदानैः समरे सहसा रोमहर्षिभिः ।
सुरैरशंसि व्योमस्थैः सह सारो महर्षिभिः ॥ १९ ॥

तस्येति । समरे तस्य प्रद्युम्नस्यावदानैरत्युग्रकर्मभिः करणैः । सहसा सद्यः रोमहर्षिभिः रोमाञ्चवद्भिः व्योमस्थैः सुरैः महर्षिभिः सह सार्द्धं सारो बलमशंसि शंसितः ॥ १९ ॥

सुगन्धयद्दिशः शुभ्रमम्लानि कुसुमं दिवः ।
भूरि तत्रापतत्तस्मादुत्पपात दिवं यशः ॥ २० ॥

**सुगन्धयदिति** । दिशः सुगन्धयत् सुगन्धाः कुर्वत् सुगन्धाः 'तत्करोति' इति ण्यन्ताल्लटः शत्रादेशः । शुभ्रं धवलम् अम्लानि म्लानिरहितं भूरि प्रभूतं कुसुमं दिवोऽन्तरिक्षात्तत्र प्रद्युम्ने अपतत् तस्मात्प्रद्युम्नाद्यशः पूर्वोक्तगुणयुक्तं दिवमन्तरिक्षं प्रति उत्पपात । अत्र प्रद्युम्नयोः कुसुमयशोभ्यामन्योऽन्योपस्कारजननादन्योन्यालङ्कारः । "परस्परं क्रियाजननेऽन्योऽन्यम्" इति लक्षणात् ॥ २० ॥

सोढुं तस्य द्विषो नालमपयोधरवा रणम् ।
ऊर्णुनाव यशश्च द्यामपयोधरवारणम् ॥ २१ ॥

**सोढुमिति** । अपगता भयान्निवृत्ता योधानां रवाः सिंहनादा येषां ते अपयोधरवाः द्विषः शत्रवः तस्य कार्ष्णेः रणं सोढुं नालमशक्ताः । अत एव यशश्च अविद्यमानं पयोधराणां वारणमेवप्रतिघातो यस्य तत् अपयोधरवारणं सत् द्यामूर्णुनाव मेघमण्डलं विलङ्घ्य स्वर्गमाच्छादयामासेत्यर्थः । ऊर्णोतेर्लिट् । "अजादेर्द्वितीयस्य" इति द्वितीयस्यैकाचो द्विर्भावः । नुवद्भावादाम्प्रतिषेधः । यमकवाक्यार्थहेतुकाव्यलिङ्गयोः संसृष्टिः ॥ २१ ॥

केशप्रचुरलोकस्य पर्य्यस्कारि विकासिना ।
शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥ २२ ॥

**केशेति** । विकासिना विविधमार्गचारिणा विकस्वरेण च कुसुमलक्ष्मणा पुष्पकेतुना प्रद्युम्नेन अन्यत्र कुसुमचिह्नं तन्मयेनेत्यर्थः । केशवत्प्रचुराः प्रभूता लोका जना यस्मिन् तस्य युद्धस्य शिरोऽग्रभूमिः अन्यत्र केशैः प्रचुरस्य केशाढ्यस्य लोकस्य जनस्य शिरः मूर्द्धा शेखरेणापीडेनेव शिखामाल्येनेवेत्यर्थः । 'शिखास्वापीडशेखरौ' इत्यमरः । पर्य्यस्कारि परिष्कृतं भूषितमित्यर्थः । परिपूर्वात्करोतेः कर्मणि लिट् "संपरिभ्यां करोतौ भूषणे" इत्यादिना सुडागमः, "अडभ्यासव्यवायेऽपि" इति नियमात् "परिनिविभ्यः" इत्यादिना षत्वे "सिवादीनां वाड्व्यवायेपि" इति विकल्पः । उपमा ॥ २२ ॥

सादरं युध्यमानापि तेनान्यनरसादरम् ।
सादरम्पृतना निन्ये हीयमाना रसादरम् ॥ २३ ॥

**सादरमिति** । सादरं साभिनिवेशं युद्ध्यमानापि सम्प्रहरन्त्यपि अरं द्रुतम् । हठादिति यावत् । रसात् रणे रागात् हीयमाना अपकृष्यमाणा । प्रद्युम्नमहिम्नेति भावः । अत एवात्र विरोधाभासोऽलङ्कारः । जहातेः कर्मणि लटः शानजादेशः । सा पृतना चैद्यसेना तेन प्रद्युम्नेन अन्येषां तटस्थानामपि नराणां सादं निश्चेष्टतां राति ददातीति अन्यनरसादरम् । "आतोऽनुप-

सर्गे कः" इति कप्रत्ययः । दर भयम् । 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः । निन्ये नीता । नयते. प्रधाने कर्मणि लिट् "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति वचनात् । विरोधाभासयमकयोः संसृष्टिः ॥ २३ ॥

**इत्यालिङ्गितमालोक्य जयलक्ष्म्या झषध्वजम् ।**
**क्रुद्धयेव क्रुधा सद्यः प्रपेदे चेदिभूपतिः ॥ २४ ॥**

इत्येति । इतीत्थं जयलक्ष्म्या आलिङ्गितं झषध्वजं मत्स्यकेतुं प्रद्युम्नम् । 'पृथुरोमा झषो मत्स्यः' इत्यमरः । आलोक्य सद्यः क्रुद्धया सपत्न्यागमात्कोपितयेवेत्युत्प्रेक्षा । क्रुधा प्रद्युम्नाश्रितया रुषा कर्त्र्या । चेदिभूपतिः प्रपेदे प्राप्तः । तं विहायेति शेषः । कामिन्यः प्रायेण साहसिक्यः सपत्नीगन्धमसहमानाः सद्यः पुरुषान्तरमाश्रयन्ते इति भावः । विजयिनं प्रद्युम्नं दृष्ट्वा सद्यश्चैद्यश्चुकोपेत्यर्थः ॥ २४ ॥

**अहितानभि वाहिन्या स मानी चतुरङ्गया ।**
**चचाल वल्गत्कलभसमानीचतुरङ्गया ॥ २५ ॥**

अहितानिति । मानी अभिमानवान् स क्रुद्धश्चैद्य. वल्गन्तः प्लवमानाः कलभसमाः कलभप्रमाणाः अत एवानीचा उच्चास्तुरङ्गा यस्या तया वल्गत्कलभसमानीचतुरङ्गया । चत्वार्यङ्गानि हस्त्यादीनि यस्यास्तया चतुरङ्गया वाहिन्या करणेन अहितानभि शत्रून् प्रति चचाल । कलभसमेत्युपमा यमकेन संसृज्यते ॥ २५ ॥

अथ कलापकेन सेना वर्णयति—

**ततस्ततधनुर्मौर्वीविष्फारस्फारनिस्स्वनैः ।**
**तूर्यैर्युगक्षये क्षुभ्यदकूपारानुकारिणी ॥ २६ ॥**

ततस्ततेत्यादि । ततश्चैद्यचलनानन्तरं ततानामाकृष्टानां धनुर्मौर्वीणां विष्फारैः स्फाराः प्रभूताः निस्स्वनाः येषां तैस्तूर्यैः युगक्षये कल्पान्ते क्षुभ्यन्तमुद्वेलन्तमकूपारं समुद्रमनुकरोतीति तदनुकारिणी सा सेनेत्युत्तरेणान्वयः । उपमा ॥ २६ ॥

सर्वतोभद्र. ।

**स का र ना ना र का स**
**का य सा द द सा य का ॥**
**र सा ह वा वा ह सा र**
**ना द वा द द वा द ना ॥ २७ ॥**

सकारेति । पुनः कीदृशी । 'कारो वधे निश्चये च बले यत्ने रतावपि' इति विश्वः । सकाराः सयत्नाः सोत्साहाः नाना नानाविधाश्च ये आरा अरीणां समूहाः । "भिक्षादिभ्योऽ-

णू" । तेषां कासा गतिभिदः काया विग्रहाश्च तेषां सादं ददतीति साददाः नाशकारकाः सायकाः यस्यां सा तथोक्ता रसेन रागेणाह्वो यस्याः सा रसाह्वा रणरागिणीत्यर्थः । वाहसाराणां वाहश्रेष्ठानां ये नादा हेषादिघोषास्तेषां वादं कलहं ददतीति वादनानि तैः सह कलहायमानानि वादनानि वाद्यानि यस्यां सा वाहसारनादवादद्वादना । तूर्यतुल्यवाहघोषेत्यर्थः । अत एव तेषां तुल्यतोक्तेरतिशयोक्तिः । सर्वतोभ्रमणात्सर्वतोभद्राख्यश्चित्रबन्धः । अत एव दण्डी । 'तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः' इति । उद्धारस्तु । चतुःषष्टिकोष्ठे चतुरङ्गबन्धे क्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्कं विलिख्यानन्तरं पङ्क्तिचतुष्टयेऽप्यधः क्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु प्रथमपादः सर्वतो वाच्यते एवं द्वितीयादिषु द्वितीय इत्यादि ॥ २७ ॥

लोलासिकालियकुला यमस्येव स्वसा स्वयम् ।
चिकीर्षुरुल्लसल्लोहवर्मश्यामा सहायताम् ॥ २८ ॥

**लोलेति** । लोलान्यसीनामेव कालियानां कृष्णसर्पविशेषाणां कुलानि यस्यां सा उल्लसद्भिर्लोहवर्मभिरयःकञ्चुकैः श्यामा अतएव यमस्यान्तकस्य सहायतां भ्रातृस्नेहादस्मिन् सेनासंहारे साहाय्यं चिकीर्षुः स्वयं साक्षात्स्वसा तस्यैव भगिनी यमुनेव स्थितेत्युत्प्रेक्षा ॥ २८ ॥

मुरजबन्धः ।

सा से ना ग म ना र म्भ
र से ना सी द ना र ता ।
ता र ना द ज ना म त्त
धी र ना ग म ना म या ॥ २९ ॥

**सा सेनेति** । तारोऽत्युच्चैर्नादः सिंहनादो येषां ते जना यस्यां सा तारनादजना अनामया अव्यथा सा पूर्वोक्ता सेना मत्ता धीरा अदुष्टाश्च नागा गजा यस्मिन् कर्मणि तत्तथा गमनारम्भे रसेन रागेण अनारता अविरता आसीत् अविच्छिन्नरणरागाभूदित्यर्थः । मुरजबन्धः । तस्योद्धारस्तु । 'तिर्यग्रेखा लिखेत्पञ्च नवोर्ध्वास्तत्र पङ्क्तयः । अष्टकोष्ठाश्चतस्रः स्युस्तासु श्लोकं लिखेत् क्रमात् । तत्राद्यद्वित्रितुर्यासु तुर्यत्रिद्व्याद्यपङ्क्तिषु । आद्यद्वित्रिचतुःपञ्चषट्सप्ताष्टमकोष्ठगः । दृश्यते प्रथमः पादश्चतुर्थश्चैवमेव हि । चतुर्थपङ्क्तिप्राथम्यात्प्रथमावधिवीक्षणात् । द्वितीयादावाद्यद्वित्र्योर्द्वितुर्ये त्रितुरीयके । तुर्यद्वित्रोस्तृतीयाद्ये द्रष्टव्योऽन्त्रिर्द्वितीयकः । तृतीयोऽन्त्रिर्द्वितीयान्त्ये आद्यसप्तमषष्ठयोः । द्वित्रिपञ्चमयोस्तुर्यषष्ठसप्तमयोः क्रमात् । तृतीयान्त्यं च लक्ष्योऽयमथान्यः क्रम उच्यते । आद्यन्त्ययुग्मयोः पङ्क्त्योश्चिन्त्यो गोमूत्रिकाक्रमः । कृत्वैकं द्वितयं द्वे च द्वयमेकमिति क्रमात् । यद्वा द्वितयमेकं च द्वयमेकं द्वयं पुनः । स्वपङ्क्तिप्रक्रमादेव विन्यासद्वितयं भवेत् । द्वा प्रथमतुर्याघ्री स्वमङ्क्त्योस्तदनुक्रमात् । द्वितीयोऽङ्घ्रिर्द्वितीयस्यां क्रमादाद्यचतुष्टये । व्युत्क्रमाच्च तृतीयास्य माद्यमेव चतुष्टये । व्युत्क्रमेण द्वितीयस्यां तृतीयस्यां क्रमेण च । द्रष्टव्यो हि

तृतीयोऽङ्घ्रिरन्त्यकोष्ठचतुष्टये । विन्यासभेदास्त्वन्येऽपि सन्त्येव बहवोऽत्र हि । विस्तरात्तु न लिख्यन्ते । स्वयमूह्या विचक्षणै ' इति । कलापकम् ॥ २९ ॥

धूतधौतासयः प्रष्ठाः प्रातिष्ठन्त क्षमाभृताम् ।
शौर्य्यानुरागनिकषः सा हि वेलानुजीविनाम् ॥ ३० ॥

धूतेति । क्षमाभृता राज्ञा प्रतिष्ठन्त इति प्रष्ठा' अग्रेसराः । " सुपि. स्थः " इति कप्रत्ययः । ' प्रष्ठोऽग्रगामिनि " इति पत्वे ष्टुत्वम् । धूता' कम्पिताः धौता उत्तेजिताः असयो यैस्ते धूतधौतासय' सन्तः प्रातिष्ठन्त प्रस्थिता' । " समवप्रविभ्य' स्थः " इति तङ् । सा वेला अनुजीविना शस्त्रजीविना शौर्य्यानुरागयोः पुरुषकारस्वामिभक्त्योर्निकषः परीक्षास्थान हि । अतोऽग्रे स्थातव्यम् अन्यथा भीरुत्व स्वामिद्रोहश्च स्यातामिति भाव । वाक्यार्थहेतुक काव्यलिङ्गम् ॥ ३० ॥

दिवमिच्छन्युधा गन्तुं कोमलामलसम्पदम् ।
दधौ दधानोऽसिलतां कोऽमलामलसं पदम् ॥ ३१ ॥

दिवमिति । युधा युद्धेन कोमलाश्चाव. अमलाः शीतोष्णादिदोपरहिताः सम्पदो यस्यान्तां कोमलामलसम्पदम् । दिव स्वर्ग गन्तुमिच्छन् कः पुमान् अमला धौताम् असिलतां दधान' अलस पदं दधौ सर्वोऽपि निःशङ्कमात्रामत इत्यर्थः । अत्र स्वर्गेच्छाया विशेषणगत्या निःशङ्कप्रस्थानहेतुत्वात्काव्यलिङ्ग तद्यमकेन ससृज्यते ॥ ३१ ॥

कृतोरुवेगं युगपद्व्यजिगीषन्त सैनिकाः ।
विपक्षं बाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ ३२ ॥

कृतेति । सेनाया समवेता' सैनिका' सैन्या । सेनाया पाक्षिकष्ठक् । बाहुभिः परिघैरिव बाहुपरिघै' बाहुदण्डै विपक्ष शत्रु जङ्घाभिः प्रसृताभिः । ' जङ्घा तु प्रसृता ' इत्यमरः । इतरेतरमन्योऽन्य सयूथीयमेव कृत उरुर्महान् ऊर्वोश्च वेगो यस्मिन् कर्म्मणि तद्यथा तथा युगपद्व्यजिगीपन्त विजेतुमैच्छन् । अहमहमिकया योद्धुमधावन्नित्यर्थः । विपूर्वाज्जयते' सन्नन्ताल्लङि " पूर्ववत्सन' " इत्यात्मनेपदम् । अत्र विपक्षसयूथयोर्बाहुजङ्घयोश्च प्रकृतत्वात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ३२ ॥

वाहनाजनि मानासे साराजावनमा ततः ।
मत्तसारगराजेभे भारीहावज्जनध्वनि ॥ ३३ ॥

वाहनेति । ततोऽनन्तर मानमभिमानम् अस्यति क्षिपतीति तस्मिन् मानासे पराहङ्कारहारिणि । कर्म्मण्यण् । मत्ताः सारगाः बलभाजश्च राजेभा नृपगजा यस्मिन् मत्तसारगराजेभे साराजौ श्रेष्ठयुद्धे । आजेः पुल्लिङ्गता ज्ञेया । भारी भास्वान् पूर्ण ईहावतामुत्साहवता

जन्माना ध्वनिर्यस्मिन् तत् मारीहात्रजनध्वनि यथा तथा न नमतीत्यनमा अभङ्गुरा । पचाद्यन्तेन नञ्समासः । वाहना निर्वाहयितृत्वम् । " ण्यास श्रन्थो युच् " अजनि जाता । सैनिकानामित्यर्थात् सिद्धम् । जने कर्त्तरि लुङि " दीपजन " इत्यादिना चिण् ॥ ३३ ॥

एतत्प्रातिलोम्येन श्लोकान्तरमाह—

श्लोकप्रतियमकम् ।

**निध्वनज्जवहारीभा भेजे रागरसात्तमः ।**
**ततमानवजारासा सेना मानिजनाहवा ॥ ३४ ॥**

**निध्वनदिति** । निध्वनन्तो वहन्तो जवा जवनाः हारिणो मनोहराश्चेभा यस्या सा निध्वनज्जवहारीभा ततो विस्तृतो मानवजो मनुष्यजातः आरासः कलकलो यस्या सा ततमानवजारासा मानिना मानवता जानानामाहवो यस्या सा मानिजनाहवा सेना रज्यतेऽनेनेति रागः क्रोधः स एव रसस्तस्मात् रागरसात् तमो मोह भेजे । क्रोधान्धाजनीत्यर्थ. । अत्र प्रातिलोम्येन पूर्वश्लोकावृत्तेः श्लोकप्रतिलोमयमकम् । तदुक्त दण्डिना । ' आवृत्तिः प्रातिलोम्येन पादार्द्धश्लोकगोचरा । यमक प्रतिलोमत्वात्प्रतिलोममिति स्मृतम् ' इति ॥ ३४ ॥

**अभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ।**
**चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ॥ ३५ ॥**

**अभग्नेति** । अभग्ना अभङ्गुरा वृत्ता वर्त्तुलाश्च यास्ता अभग्नवृत्ताः । विशेषणसमासः । अन्यत्राचलितचरित्राः । बहुव्रीहि. । मुष्टिग्राह्य मुष्टिधार्यं मध्य यासा ताः धनुर्लताः अन्यत्र मुष्टिमेयमध्याः यौवनेनोद्धतैर्धृष्टैर्दृप्तैश्च प्रसभाद्बलादाकृष्टाः सत्यः एकत्र गुणेऽन्यत्र कचेषु चेति भावः । उच्चैस्तरा चक्रन्दुष्टङ्कारध्वनिं चक्रुर्धनुलता अन्यत्र चुक्रुशुश्च । अत्र प्रस्तुतधनुर्लताविशेषणादप्रस्तुतधूर्त्तास्कन्दितपतिव्रताप्रतीते समासोक्तिः । तथा च आकर्षणस्य विशेषणगत्याक्रन्दनहेतुत्वात्काव्यलिङ्गमङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ३५ ॥

**करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सहस्रशः ।**
**करेऽणुः शीकरो जज्ञे रेणुस्तेन शमं ययौ ॥ ३६ ॥**

**करेणुरिति** । अनेको बहुः करेणु. करेणवः प्रस्थित जातावेकवचनम् । असख्याताः करिणो योद्धु ययुरित्यर्थः । ' करेणुरिभ्या स्त्री नेभे ' इत्यमर. । सहस्रशो घण्टाः करिकण्ठस्था रेणुर्दध्वनुः । " अत एकहल्मध्येऽनादेशादेर्लिटि " इत्येत्वाभ्यासलोपौ । करे पुष्करे अणुरल्पः शीकरोऽम्बुकणो जज्ञे । जातावेकवचनम् । करेष्वणवः शीकरा जाता इत्यर्थः । जनेः कर्त्तरि लिट् । तेनाणुना शीकरेण रेणु· रज· शमं ययौ । एतेन करिणां बाहुल्यं व्यज्यते ॥ ३६ ॥

धृतप्रत्यग्रशृङ्गाररसरागैरपि द्विपैः ।
सरोषसम्भ्रमैर्बभ्रे रौद्र एव रणे रसः ॥ ३७ ॥

धृतेति । धृतः प्रत्यग्र शृङ्गाररस एव रागो यैस्तैरपीति विरोधः । रौद्रशृङ्गारयोर्विरोधित्वात् । धृतसिन्दूररञ्जनैरित्यविरोध । अत एव विरोधाभासोऽलङ्कारः । 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने । शृङ्गारं चूर्णसिन्दूरे लवङ्गकुसुमेऽपि च' इति विश्वः । सरोषसम्भ्रमैः द्विपैः रणे रौद्ररस एव क्रोधरस एव बभ्रे भृतः । कर्म्मणि लिट् ॥ ३७ ॥

न तस्थौ भर्तृतः प्राप्तमानसम्प्रतिपत्तिषु ।
रणैकसर्गेषु भयं मानसं प्रति पत्तिषु ॥ ३८ ॥

नेति । भर्तृत स्वामिनः प्राप्ते मानसम्प्रतिपत्ती पूजासौमनस्ये यैस्तेषु प्राप्तमानसम्प्रतिपत्तिषु रणे एकसर्गेषु नियतोत्साहेषु नियतनिश्चयेषु वा 'सर्गास्तु सर्जनाध्यायस्वभावोत्साहनिश्चयाः' इति वैजयन्ती । पत्तिषु पदातिषु मानसम्प्रति पत्तीना मानसेष्वित्यर्थः । "कर्म्मप्रवचनीययुक्ते द्वितीया" भयं न तस्थौ पूर्वोपकारस्मारिणो रणाय निर्भीका प्रतिष्ठन्तेत्यर्थः । अन्यथा 'यस्तु भीतिपरावृत्तः सङ्ग्रामे हन्यते परैः । भर्त्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते । यदस्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् । भर्त्ता तत्सर्व्वमादत्ते परावृत्तहतस्य तु' इति निषेधस्मरणादिति भावः । अत्र मानसम्प्रतिपत्त्योर्विशेषणगत्या भयानवस्थानहेतुत्वात्पदार्थहेतुक काव्यलिङ्गं यमकेन संसृज्यते ॥ ३८ ॥

बाणाहिपूर्णतूणीरकोटरैर्धन्विशाखिभिः ।
गोधाश्लिष्टभुजाशाखैरभूद्भीमा रणाटवी ॥ ३९ ॥

बाणेति । रणमेवाटवी रणाटवी बाणैरिवाहिभिः पूर्णा तूणीरा निषङ्गा एव कोटरा कुहरा येषां तैः गोधास्तलानि निहाकाश्च । 'गोधा तले निहाकायाम्' इति विश्वः । तल ज्याघातवारणम् । ततो गोधा एव गोधा इति श्लिष्टरूपकम् । ताभिराश्लिष्टाः भुजा एव शाखा येषां तैर्धन्विभिर्धानुष्कैरेव शाखिभिर्वृक्षैर्भीमा भयङ्करा अभूत् । समस्तवस्तुवर्णनात्सावयवरूपकम् ॥ ३९ ॥

प्रतिलोमानुलोमपाद ।

नानाजावजानाना सा जनौघघनौजसा ।
परानिहाहानिराप तान्वियाततयाऽन्विता ॥ ४० ॥

नानेति । इहास्यां नानाविधायाम् आजौ चित्रयुद्धे ओजसा तेजसाम् अवजानाना अवज्ञां कुर्वती । "अकर्म्मकाच्च" इत्यात्मनेपदम् । जनौघैर्घना सान्द्रा जनौघघना बहुजनेत्यर्थः । अहानिरभया वियाततया धार्ष्ट्येन धार्ष्ट्येनान्विता धृष्टेत्यर्थः । 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः । सा चैद्यसेना तान्परान् अरीन् आप प्राप । अत्र प्रतिपादं पादार्द्धस्यैवावृत्तेरर्द्धपादप्रतिलोमयमकम् ॥ ४० ॥

विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः ।
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥ ४१ ॥

**विषममिति** । तद्बलं चेद्यसेना सर्वतोभद्रचक्रगोमूत्रिकादिभिः आदिग्रहणान्मुरजबन्धादिसंग्रहः । श्लोकैर्महाकाव्यं शिशुपालवधादिकमिव व्यूहैः सर्वतोभद्रादिभिरेव बलविन्यासैः 'व्यूहस्तु बलविन्यासे' इत्यमरः । विषमं दुरवग्रहमभवत् । नगनगरादिवर्णनयुक्तलक्षणं महाकाव्यम् ॥ ४१ ॥

संहत्या सात्वतां चैद्यं प्रति भास्वरसेनया ।
वबले योद्धुमुत्पन्नप्रतिभा स्वरसेन या ॥ ४२ ॥

**संहत्येति** । भास्वरा तजिष्ठा सेना यस्यास्तया भास्वरसेनया सात्वतां यदूनां संहत्या सङ्घेन चैद्यं प्रति वबले प्रचेले । 'वल चलने इति धातोर्भावे लिट्' 'न शसददवादि' इत्यादिना वकारादित्वादेत्वाभ्यासलोपयोः प्रतिषेधः । या यदूनां संहतिः स्वरसेन स्वभावेन योद्धुमुत्पन्नप्रतिमा सञ्जातप्रतिमा या स्वयं रणकण्डूला सा पराहूता कथं निवर्त्तेत इति भावः ॥ ४२ ॥

अथ यदुसेनायाः प्रतिबलाभियोगं युग्मेनाह—

विस्तीर्णमायामवती लोललोकनिरन्तरा ।
नरेन्द्रमार्गं रथ्येव पपात द्विषतां बलम् ॥ ४३ ॥

**विस्तीर्णमित्यादि** । आयामवती द्राघीयसी लोललोकनिरन्तरा चलज्जनसङ्कुला सा सेनेत्युत्तरश्लोकेनान्वयः सा यदुसेना विस्तीर्णं द्विषतां बलं नरेन्द्रमार्गं राजपथं रथ्या विशिखेव पपात सञ्जगाम । उपमानेऽपि विशेषणं योज्यम् ॥ ४३ ॥

वारणागगभीरा सा साराऽभीगगणारवा ।
कारितारिवधा सेना नासेधा वरितारिका ॥ ४४ ॥

**वारणेति** । कीदृशी सेना वारणैर्नागैरचलैर्गभीरा दुरवगाहा वारणागगभीरा साराणां श्रेष्ठानां न भियं गच्छन्तीत्यभीगाना निर्भीकाणां गणानां जन्तुसङ्घानामारवो यस्याः सा साराभीगगणारवा कारितारिवधा कृतशत्रुवधा । 'रामो राज्यमकारयत्' इतिवदत्र स्वार्थे णिच् । नास्त्यासेधः प्रतिषेधो यस्याः सा नासेधा नञर्थेन नशब्देन बहुव्रीहिः । अनासेधा वा वरितारिका ईप्सितशत्रुका अनेनाहं योत्स्ये इति स्वयंवृतप्रतिभटेत्यर्थः । शैषिकः कप्रत्ययः । सा सेना पपातेति पूर्वेणान्वयः । अत्र प्रातिलोम्येन अर्द्धावृत्तेरर्द्धप्रतिलोमयमकमेतत् । लक्षणं तूक्तं निघ्नदित्यादिश्लोकप्रतिलोमयमके ॥ ४४ ॥ युग्मम् ।

अधिनागं प्रजविनो विकसत्पिच्छचारवः ।
पेतुर्बर्हिणदेशीयाः शङ्कवः प्राणहारिणः ॥ ४५ ॥

अध्वीति । प्रजवन्तीति प्रजविनोऽतिजवनाः । "प्रजोरिनि." इति इनिप्रत्ययः । विकसद्भिः पिच्छैः कला पैश्चारव· अतएव ईषदसमाप्तबर्हिणा बर्हिणदेशीया मयूरकल्पा. । "ईषदसमाप्तौ" इत्यादिना देशीयर् प्रत्यय. । प्राणहारिण शङ्कवः शल्यायुधानि । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमर. । नागेष्वविनागम् । विभक्त्यर्थेऽव्ययीभावः । गजेषु सर्पेषु च निपेतु. सर्पेषु बर्हिणा इत्यर्थः । अत एवोपमालङ्कार. । 'अहो आहिगजा नागा.' इति वैजयन्ती ॥ ४९ ॥

प्र वृ त्ते वि क स द्धा नं सा ध ने ष्व वि षा दि भिः ।
व वृ पे वि क स द्दा नं यु ध मा प्य वि षा णि भिः ॥४६॥

प्रवृत्ते इति । विकसन् जृम्भमाणो ध्वानो ध्वनिर्यस्मिन् तद्यथा तथा साधने सम्प्रहारे प्रवृत्तेऽप्यविषादिभिर्विगादरहितैर्विषाणमिदन्तिभियुवम् आप्य प्राप्य. विकसत्प्रभूत दानं मदो ववृपे युद्धारम्भे धनदान च ध्यन्यते । सत्त्वसम्पन्नत्वात् । साधनेऽपि अविषादस्याविरोधाद्विरोधाभासः गोमूत्रिकाचित्रबन्धोऽयम् । 'वर्णानामेकरूपत्व यद्येकान्तरमर्द्धयो । गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदु.' इति लक्षणात् । षोडशकोष्ठद्वये पङ्क्तिद्वयेऽर्द्धद्वय क्रमेण विलिख्यैकान्तरविविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धार ॥ ४६ ॥

पुरः प्रयुक्तैर्युद्धं तच्चलितैर्लब्धशुद्धिभिः ।
आलापैरिव गान्धर्वमदीप्यत पदातिभिः ॥ ४७ ॥

पुर इति । तद्युद्ध पुर प्रयुक्तः गजादभ्यः प्राक् प्रवर्त्तितैः । अन्यत्र गानात्पूर्वमुच्चारितैः चलितैः मण्डलचारिभिः अन्यत्र मुहुरावर्त्तितैरित्यर्थ. । लब्धशुद्धिभिः । कातर्यकपटादिदोषरहितैरित्यर्थ. । अन्यत्रावृत्तै रागानुगुणैरित्यर्थः । पदातिभि पत्तिभि करणैः । गान्धर्वं गानमालापैरालापिभिरिवाक्षरविशेषैरिवादीप्यताशोभत ॥ ४७ ॥

केनचित्स्वासिनान्येषां मण्डलाग्रानऽवद्यता ।
प्रापे कीर्तिप्लुतमहीमण्डलाग्राऽनवद्यता ॥ ४८ ॥

केनचिदिति । स्वासिना स्वखड्गेन अन्येषा मण्डलाग्रान् अवद्यता खण्डयता । द्यतेर्लटः शत्रादेश. । केनाचद्वीरेण कीर्तिप्लुत यशोव्याप्त महीमण्डलाग्र भूपृष्ठ यस्या· सा कीर्त्तिप्लुतमहीमण्डलाग्रा अनवद्यता अनिन्द्यता प्रापे प्राप्ता ॥ ४८ ॥

विहन्तुं विद्विषस्तीक्ष्णः सममेव सुसंहतेः ।
परिवारात्पृथक्चक्रे खड्गश्चात्मा च केनचित् ॥ ४९ ॥

विहन्तुमिति । केनचिद्वीरेण विद्विषो विहन्तु तीक्ष्णो निशितः परिच्छेत्ता च खड्गः सुसंहते. सुघटितात् सुष्ठु सङ्घीभूताच परिवारात्कोशात् परिजनाच 'परिवार. परिजने खड्गकोशे परि-

च्छदे' इति विश्वः । सममेव पृथक् चक्रे उद्धृतः । आत्मा च पृथक् चक्रे विमक्तः । खड्गमुत्क्षिप्य स्वसैन्यान्निर्गत्यारिमध्ये पपातेत्यर्थः । अत्र खड्गात्मनोः प्रकृतयोः समानक्रियायोगात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ४९ ॥

**अन्येन विदधेऽरीणामतिमात्राविलासिना ।**
**उद्गूणेन चमूस्तूर्णमतिमात्राविलाऽसिना ॥ ५० ॥**

**अन्येनेति** । अन्येन वीरेण विलासिना विलसनशीलेन उद्गूर्णेन उद्यतेन असिना खड्गेन मात्र मानमतिक्रान्तातिमात्रा अपरिमिता अरीणा चमूः सेना तूर्णं शीघ्रम् अतिमात्रमत्यन्तमाविला कलुषा अतिमात्राविला अत्याविला विदधे कृता ॥ ५० ॥

**सहस्रपूरणः कश्चिल्लूनमूर्द्धाऽसिना द्विषः ।**
**तथोर्द्ध्व एव काबन्धीमभजन्नर्तनक्रियाम् ॥ ५१ ॥**

**सहस्रेति** । पृणातीति पूरणः । 'पॄ पालनपूरणयोः' कर्त्तरि ल्युट् । सहस्राणां पूरणः पालयिता पूरयिता वा सहस्रपूरणः सहस्ररक्षी सहस्रहन्ता वा कश्चिद्भटः । कबन्धस्तु सहस्रपूरणः सहस्रसंख्यापूरकः सहस्रादेकः कबन्धो नृत्यतीति प्रसिद्धिः । असिना स्वासिना द्विषो लूनमूर्द्धा लूनशत्रुमूर्द्धा सापेक्षत्वेऽपि गमकत्वात्समासः । कबन्धस्तु द्विषोऽसिना लूनमूर्द्धा तथा कबन्धवदेवोर्द्ध्व एव तिष्ठते । कबन्धस्येमा काबन्धीं नर्त्तनक्रियामभजत् । निजप्रहर्षात्स्वयमपि कबन्धवन्ननर्त्तेत्यर्थः । अत एव सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धात्मको निदर्शनाभेदः । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्' इत्यमरः ॥ ५१ ॥

**शस्त्रव्रणमयश्रीमदलङ्करणभूषितः ।**
**ददृशेऽन्यो रावणवदलङ्करणभूषितः ॥ ५२ ॥**

**शस्त्रेति** । शस्त्रव्रणमयानि तद्रूपाणि । स्वार्थे मयट् । तैरेव श्रीमद्भिः शोभावद्भिरलङ्करणैरलङ्कारैर्भूषितोऽलङ्कृतः । शस्त्रव्रणालङ्कृत इत्यर्थः । अन्यः कश्चित् अविद्यमाना लङ्का यस्याः सा अलङ्केति बहुव्रीहिः अत एव "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावः । सा रणभूश्च तस्यामुषितः स्थितोऽलङ्करणभूषितः । वसेर्निवासार्थात्कर्त्तरि क्तः, "वचिस्वपि" इत्यादिना सम्प्रसारणम् । रावणवत् ददृशे दृष्टः सर्वाङ्गीणव्रणभूषणत्वेन रावण एवायं लङ्कासम्बन्धविरहात्तु व्यतिरेक इत्यर्थः । उपमाव्यतिरेकयमकानां सङ्करः ॥ ५२ ॥

**द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ।**
**सिक्तश्चास्रैरुभयथा बभूवारुणविग्रहः ॥ ५३ ॥**

**द्विषदिति** । द्विषद्विशसनम् । 'निर्वापणं विशसनं मारणं प्रतिघातनम्' इत्यमरः । तस्मिञ्छेदेनारिशस्त्रप्रहारेण निरस्तमूरुयुगं यस्य सः अत एवास्रैरसृग्भिश्च सिक्तोऽपरो वीरः उभयथा उभाभ्यां प्रकाराभ्याम् । "प्रकारे गुणवचनस्य" इति थाल् । अरुणस्यानूरोरिव अरुणोऽरुण

र्णश्च विग्रहो यस्य सोऽरुणविग्रहो बभूव । 'अरुणोऽर्कोऽर्कसारथ्योररुणो लोहितेऽन्यवत्' इति विश्वः । अत्रोरुच्छेदास्त्रसिक्तयोर्विशेषणगत्योभयथारुणविग्रहमात्रहेतुत्वात्काव्यलिङ्गमुपमाश्लेषाभ्यां सङ्कीर्यते ॥ ९३ ॥

**भीमतामपरोऽम्भोधिसमेऽधित महाहवे ।**
**दाक्षे कोपः शिवस्येव समेधितमहा हवे ॥ ९४ ॥**

भीमेति । अम्भोधिसमे सागरसदृशे महान् आहवस्तस्मिन् महाहवे सम्यगेधितमहाः सम्वर्द्धिततेजाः अपरो वीरः दक्षप्रजापतेरयं दाक्षस्तस्मिन्दाक्षे हवे यज्ञे । 'हवो यज्ञे तथाह्वाने ' इति विश्वः । समेधितमहाः सन्दीपिततेजाः शिवस्य कोप इव वीरभद्र इवेत्यर्थः । भीमता भयङ्करताम् अधित धृतवान् । बिभेत्यस्मादिति भीमः । "भियः षुग्वा" इत्यौणादिके मप्रत्यये भीमो भीष्मश्च । "भीमादयोऽपादाने" इति निपातनादपादानार्थता । उपमायमकयोः संसृष्टिः ९४

**दन्तैश्चिच्छिदिरे कोपात्प्रतिपक्षगजा इव ।**
**परनिस्त्रिंशनिर्लूनकरवालाः पदातयः ॥ ९५ ॥**

दन्तैरिति । परेषां निस्त्रिंशैः खङ्गैर्निर्लूनकरवालाः छिन्नखङ्गाः पादाभ्यामतन्तीति पदातयः पत्तयः 'अज्यतिभ्यां पादे च' इत्यौणादिक इण्, "पादस्य पदाज्यातिगोपहतेषु" इति पदादेशः । कोपात् गजा इव प्रतिपक्ष शत्रु दन्तैर्दशनैर्विषाणैश्च चिच्छिदिरे चिच्छिदुः ॥ ९५ ॥

**रणे रभसनिर्भिन्नद्विपपाटविकासिनि ।**
**न तत्र गतभीः कश्चिद्विपपाट विकासिनि ॥ ९६ ॥**

रण इति । 'रभसो वेगहर्षयोः' इति विश्वः । रभसेन वेगेन निर्भिन्नद्विपाः पाटितगजाः पाटविकानां पाटववताम् असयो यस्मिन् । पाटवशब्दान्मत्वर्थीयठक्प्रत्ययः । विकासिनि प्रवृद्धे तत्र तस्मिन् रणे गतभीर्निर्भीकः अत एव कश्चित्कोऽपि न विपपाट न पाटयामास न पलायत । अत्र गतभीकत्वस्य विशेषणगत्या अपलायनहेतुत्वात्काव्यलिङ्गम् । द्विपदलनेऽपि रणे निर्भीक इति विरोधश्च यमकेन संसृज्यते ॥ ९६ ॥

**यावन्न सत्कृतैर्भर्तुः स्नेहस्यानृण्यमिच्छुभिः ।**
**अमर्षादितरैस्तावत्तत्यजे युधि जीवितम् ॥ ९७ ॥**

यावादिति । सत्कृतैः स्वस्वामिना पूर्वसंमानितैः अत एव भर्तुः स्नेहस्य स्वामिप्रेम्णः आनृण्यमनृणत्वमिच्छुभियावीरैरिति शेष. । युधि जीवितं यावन्न तत्यजे त्यक्त तावदितरैरसत्कृतैः रमर्षादसत्कारक्रोधाज्जीवित तत्यजे । अथ वास्मान्पश्येति स्वामिनमुपालभ्य स्वयमेव प्राक् प्राणान् प्रजह्रुरित्यर्थः । सत्कारादिविशेषणोत्थकाव्यलिङ्गं सुगमम् ॥ ९७ ॥

अथैवंविधानां मरणस्यैव कर्त्तव्यतामुपपादयति—

समुद्गयमकम् ।

अयशोभिदुरालोके कोपधामरणादृते ।
अयशोभिदुरा लोके कोपधा मरणादृते ॥ ५८ ॥

अयश इति । अयः शुभावहो विधिरिति अयशोभी भाग्यवान् सचासौ दुरालोकस्तेजस्वित्वाद्दुर्दर्शश्चेति विशेषणसमासः तस्मिन् अयशोभिदुरालोके । कोपधाम कोपाश्रयः कुपित इत्यर्थः । अथाप्यकोपे भीरुत्वापातात् । अत एव रणमादृत. रणादृतः रणार्थीत्यर्थः । कर्त्तरि क्तः । कोपधाम चासौ रणादृतश्च तस्मिन् कोपधामरणादृते लोके एवंविधे वीरलोके अयशोभिदुरा स्वाग्यनादरनिमित्तापकीर्तिनिवर्तिका । "विदिभिदिच्छिदेः कुरच्" उपधा उपायो मरणादृते प्राणत्यागं विनेत्यर्थः । का न कापीत्यर्थः । "अन्यारादितरर्त्ते" इति पञ्चमी । अत्रायशोभित्यादीनां लोकविशेषणद्वारा तद्वर्त्तितामुपजीव्येनामवसरे जीवत्यागहेतुत्वात् काव्यलिङ्गं यमकेन सङ्कीर्यते । समुद्गयमकभेदोऽयम् 'अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मता.' इति लक्षणात् ॥ ५८ ॥

स्खलन्ती न क्वचित्तैक्ष्ण्यादभ्यग्रफलशालिनी ।
अमोचि शक्तिः शाक्तीकैर्लोहजा न शरीरजा ॥ ५९ ॥

स्खलन्तीति । शक्ति. प्रहरण येषा ते शाक्तीकै. । 'शाक्तीकः शक्तिहेतिकः' इत्यमर. । "शक्तियष्ट्योरीकक्" इति प्रहरणार्थे ईकक् प्रत्यय. । तैक्ष्ण्यात नैशित्यात क्वचिदपि न स्खलन्ती प्रतिहतिं न प्राप्नुवती । अभ्यग्र समग्र यत् फल शल्य तेन शालते । अन्यत्र अभ्यग्रेणासन्नेन फलेन श्रेयसा शालत इति अभ्यग्रफलशालिनी । लोहजा अयोमयी शक्तिरायुधविशेषः । अमोचि शत्रुषु मुक्ता । शरीरजा शक्तिः सामर्थ्याख्या तु नामोचि । अतिव्यायामेऽप्यक्षीणशक्तिका एवायुध्यन्तेत्यर्थः । अत्र द्वयोरपि प्रकृतत्वात्केवलप्रकृतश्लेषः ॥ ५९ ॥

आपदि व्यापृतनयास्तथा युयुधिरे नृपाः ।
आप दिव्या पृतनया विस्मयञ्जनता यथा ॥ ६० ॥

आपदीति । नृपाः राजानः आपदि व्यसनेऽपि व्यापृतनयाः प्रवृत्तनीतिका एव सन्तः न तु श्वापदवृत्त्येति भावः । पृतनया सेनया साधनेन । वाक्यान्तरस्थस्यापि पृतनाशब्दस्यात्रान्वयः चित्र सोढव्यः । तथा तेन प्रकारेण युयुधिरे सम्प्रजह्रुः । यथा दिव्या जनता अन्तरिक्षवर्त्तिसिद्धविद्याधरसघो विस्मयमाप । अमानुष युद्ध चक्रुरित्यर्थः । अयं च पादाभ्यासयमकभेदः ॥ ६० ॥

स्वगुणैराफलप्राप्तेराकृष्य गणिका इव ।
कामुकानिव नालीकांस्त्रिणताः सहसामुचन् ॥ ६१ ॥

स्वगुणैरिति । त्रिषु स्थानेषु मध्येषु नताः त्रिणताः शार्ङ्गाणि । "पूर्वपदात्संज्ञायाम्" इति णत्वम् । गणिका वेश्या इव ता अपि त्रिणता मध्य भ्रवोश्च नतत्वात् । नालीकान् इषुविशेषान् ।'नालीकः शरशल्योः' इति विश्वः । कार्मुकानिव स्वगुणैर्ज्याभि. रूपलावण्यादिभिश्च । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' । इति वैजयन्ती । आफलप्राप्तेराशल्यस्पर्शादाधनलाभाच्च आकृष्य कर्णान्तिकं नीत्वा वशीकृत्य च सहसा अमुचन् अत्याक्षुः । मुचेर्लुङि "पुषादि" इति च्लेरङादेशः । अनेकैवोपमा ॥ ६१ ॥

**वाजिनः शत्रुसैन्यस्य समारब्धनवाजिनः ।**
**वाजिनश्च शरा मध्यमविशन्द्रुतवाजिनः ॥ ६२ ॥**

वाजिन इति । द्रुत व्रजन्तीति द्रुतवाजिनः शीघ्र गामिनः । 'व्रज गतौ' इति धातोर्णिनिः । वाजिनोऽश्वाः । वाजिनः पक्षवन्तः शराश्च । 'पक्षो वाजस्त्रिषूत्तरे' इत्यमरः । समारब्धा नवा अपूर्वा आजिर्युद्धं येन तस्य समारब्धनवाजिनः शत्रुसैन्यस्य मध्यमविशन् । अत्र वाजिना शराणा च प्रवेशाख्यतुल्ययोगिताभेदो यमकेन संसृज्यते ॥ ६२ ॥

**पुरस्कृत्य फलं प्राप्तैः सत्पक्षाशयशालिभिः ।**
**कृतपुंखतया लेभे लक्षमप्याशु मार्गणैः ॥ ६३ ॥**

पुरस्कृत्येति । फलं शल्य पुरस्कृत्य पुरोधाय । अन्यत्र फल लाभ पुरस्कृत्य सम्भाव्येत्यर्थः। प्राप्तैरागतैः सत्पक्षाश्रयेण साधुकङ्कादिपत्रग्रन्थनेन । अन्यत्र साधुसहायावलम्बेन शालन्ते इति तथोक्तैः मार्गणैः सायकैरर्थिभिश्च । 'मार्गणौसायकार्थिनौ' इत्यमरः । कृतपुंखतया सुबुद्धकर्त्तरीकतया । 'मुखमथकर्त्तरी पुखः' इति यादव. । अन्यत्र कुशलतयेत्यर्थः । लक्ष शरव्यम् अन्यत्र लक्षसंख्यमपि धन लेभे शतादिकं किमु वक्तव्यमिति भावः । 'लक्षं शरव्ये संख्यायाम्' इति विश्वः । अत्राभिधायाः प्रकृतार्थनियन्त्रणादर्थान्तरप्रतीतेर्ध्वनिरेव ॥ ६३ ॥

**रक्तस्रुतिं जपासूनसमरागामिषुं व्यधात् ।**
**कश्चित्पुरः सपत्नेषु समरागामिषु व्यधात् ॥ ६४ ॥**

रक्तेति । कश्चिद्वीरः पुरोऽग्रे समरागामिषु समरमागतेषु सपत्नेषु इषुं व्यधात् बाणप्रहारात् । "व्यधजपोरनुपसर्गे" इत्यप्रत्ययः । जपासूनसमरागां रक्तस्रुतिं रक्तस्राव व्यधात् विहितवान् । दधातेर्लुङि "गातिस्था-"इत्यादिना सिचो लुक् । उपमायमकयो संसृष्टिः ॥ ६४ ॥

**रयेण रणकाम्यन्तौ दूरादुपगताविभौ ।**
**गतासुरन्तरा दन्ती वरण्डक इवाभवत् ॥ ६५ ॥**

रयेणेति । रणमात्मनः इच्छन्तौ रणकाम्यन्तौ । "काम्यच" इति रणशब्दात्काम्यच्प्रत्यये सनाद्यन्तधातुत्वाल्लटि शत्रादेशः । रयेण दूरादुपगतौ । इभावन्तरा इभयोर्मध्ये । "अन्तरान्तरेण युक्ते" इति द्वितीया । गतासुर्मृतो दन्ती द्वैवोन्मध्यवर्ती हस्तिकुमा इत्यर्थः । वरण्ड-

कोऽन्तरावेदिरिवाभवत् । 'वरण्डकोऽन्तरावेदौ सन्दोहमुखरागयोः' इति विश्वः । अभ्यासकाले काञ्चन वेदिमन्तर्द्धाय दन्तिनौ योधयत इति प्रसिद्धम् । उपमा ॥ ६५ ॥

द्व्यक्षरः ।

भूरिभिर्भारिभिर्भीराभूभारैरभिरेभिरे ।
भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ ६६ ॥

**भूरिभिरिति** । भूरिभिः भूयोभिः भारिभिः पताकास्तरणादिभारवद्भिः । मत्वर्थीय इनिप्रत्ययः । भियं रान्तीति भीरास्तैर्भीरैः भयदैः । 'रा दाने' "आतोऽनुपसर्गे कः" इति कः । भूभारैः महाकायत्वाद्भुवो भारायमाणैः भेर्य इव रेभन्ते ध्वनन्तीति भेरीरेभिभिः 'रेभृ शब्दे', ताच्छील्ये णिनिः । अभ्राभैर्मेघमेचकैरिति चोपमाद्वयम् । अभीरुभिर्निर्भीकैः इभैर्गजैः इभाः प्रतिगजाः तादृशा इव अभिरेभिरे अभियुक्ताः । उपमानुप्रासयोः सङ्करः । द्व्यक्षरानुप्रासः ॥ ६६ ॥

निशितासिलतालूनैस्तथा हस्तैर्न हस्तिनः ।
युध्यमाना यथा दन्तैर्भग्नैराणुर्विहस्तताम् ॥ ६७ ॥

**निशितेति** । युध्यमानाः सम्प्रहरन्तः हस्ता येषां सन्तीति हस्तिनः "हस्ताज्जातौ" इतीनिप्रत्ययः । यथा भग्नैर्दन्तैः विषाणैः विहस्तता हस्तहीनत्वमिति कर्त्तव्यतामूढत्वं चापुः । 'विहस्तव्याकुलौ समौ' इत्यमरः । तथा निशिताभिरसिलताभिर्लूनैश्छिन्नैर्हस्तैः शुण्डादण्डैर्विहस्ततां नापुः । हस्तेभ्योऽपि दन्तानां प्रहारसाधनत्वादिति भावः । अत्र हस्तस्याच्छेदे वैहस्त्यं न हस्तच्छेदे इति विरोधः । प्रतिपत्तिमूढतया समाहित इति विरोधाभासोऽलङ्कारः ॥ ६७ ॥

असयोगः ।

निपीडनादिव मिथो दानतोयमनारतम् ।
वपुषामदयापातादिभानामभितोऽगलत् ॥ ६८ ॥

**निपीडनादिति** । इभानां वपुषाम् अदयापातान्निर्दयाभियोगाद्धेतोः मिथो निपीडनादिव वस्त्रादिनिपीडनादिवेत्युत्प्रेक्षा । अनारतमश्रान्तं दानतोयमभितोऽगलत् वस्त्रवत् निर्दयापातेऽपि मा ।ति॰क इति गजानामुत्साहातिशयोक्तिः । अत्र सयोगाभावादसयोगश्चित्रभेदः । "हलोनऽ =। संयोगः" ॥ ६८ ॥

रणाङ्गणं सर इव प्लावितं मदवारिभिः ।
गजः पृथुकराकृष्टशतपत्रमलोडयत् ॥ ६९ ॥

**रणेति** । गजो मदवारिणा प्लावितमुक्षितं रणाङ्गणं सर इव पृथुना करेणाकृष्टानि शतपत्राणि अमितवाहनानि अन्यत्र कुशेशयानि च यस्मिन् कर्म्मणि तत्तथा रणाङ्गणमलोडयत् उदक्षोभयत् । श्लेषविशेषणेयमुपमा ॥ ६९ ॥

शरक्षतेगजे भृङ्गैः सविषादिविषादिनि ।
रुतव्याजेन रुदितं तत्रासीदतिसीदति ॥ ७० ॥

**शरक्षते इति** । गजे शरेण क्षते प्रहृते अत एव विषादिना विषादवता विषादिना यन्त्रा सह वर्तते इति तस्मिन् सविषादिविषादिनि तत्र रणे अतिसीदति अतिसन्ने सति मृते सतीत्यर्थः । सदेर्लटः शत्रादेशः । भृङ्गैः कर्तृभिः । " न लोका " इत्यादिना षष्ठीप्रतिषेधः । रुतव्याजेन रुतच्छलेन रुदितं रोदनमासीत् । स्वाश्रयनाशदुःखाद्रोदनं कृतमिवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । सा च रुतव्याजेनेत्यपह्नवपूर्वकत्वात्सापह्नवेति सर्वस्वकारः ॥ ७० ॥

अन्तकस्य पृथौ तत्र शयनीय इवाहवे ।
दशनव्यसनादीयुर्मत्कुणत्वं मतङ्गजाः ॥ ७१ ॥

**अन्तकस्येति** । अन्तकस्य मृत्योः सम्बन्धिनि शेतेऽस्मिन्निति शयनीये तल्प इव स्थित इत्यर्थः । " कृत्यल्युटो बहुलम् " इत्यधिकरणेऽनीयर् । पृथौ विशाले तत्राहवे मतङ्गजाः दन्तव्यसनाद्विषाणभङ्गाद्धेतोः मत्कुणत्वमीयुः मत्कुणा इव दृष्टा इत्यर्थः । सुप्तरक्तपायिनः खट्वाश्रयाः कीटविशेषा मत्कुणाः । ' कालेऽप्यजातदन्ते च शय्याजन्तौ च मत्कुणः ' तत्सादृश्याददन्तेषु दन्तिषु तथात्वरूपकम् अन्तकस्य शयनीय इवेत्युत्प्रेक्षासापेक्षमिति सङ्करः ॥ ७१ ॥

अथ युग्मेनाह—

अर्धभ्रमकः ।

अ भी क म ति के ने द्धे
भी ता न न्द स्य ना श ने ।
क न त्स का म से ना के
म न्द का म क म स्य ति ॥ ७२ ॥

**अभीकेत्यादि** । अभीका निर्भीका मतिर्यस्य तेनाभीकमतिकेन निर्भयचित्तेन शैषिकः कप्प्रत्ययः । इद्धे दीप्ते । भीतानामानन्दस्य नाशने । नशेर्ण्यन्तात्कर्तरि ल्युट् । कनन्ती दीप्यमाना सकामा विजयित्वात्पूर्णकामा सेना यत्र तस्मिन् कनत्सकामसेनाके । पूर्ववत्कप् । मन्दकामकं मन्दोत्साहम् । पूर्ववदेव कप् । अस्यति निराकुर्वाणे रण इत्युत्तरेण सम्बन्धः । अत्र सर्वतोभद्रवत्सर्वभागाद्भ्रमणाभावात्पादार्द्धानमेव भ्रमणादर्द्धभ्रमकम् । उद्धारस्तु सर्वतोभद्रवत्स्यादेव ॥ ७२ ॥

दधतोऽपि रणे भीममभीक्ष्णं भावमासुरम् ।
हताः परैरभिमुखाः सुरभूयमुपाययुः ॥ ७३ ॥

दधत इति । रणे पूर्वोक्तप्रकारे अभीक्ष्णमत्यन्त भीम भयङ्करम् आसुरमसुरसम्बन्धिन भाव पुरुषकारलक्षणम् । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु ' इति वैजयन्ती । असुरत्वं च दधत. दधाना अपि परैः शत्रुभिः अभिमुखा एव स्थिताः हताः । वीरा इति शेषः । अत एव सुराणा भाव सुरभूय सुरत्व देवत्वमुपाययुः । ' स्वर्गं मान्त्यपराङ्मुखाः ' इति स्मरणादिति भावः । ' भुवो भावे " इति क्यप् । अत्रासुरभावेऽपि सुरभूयमुपाययुरिति विरोधस्य भावशब्द-स्यार्थान्तरत्वेन परिहाराद्विरोधाभासः ॥ ७३ ॥

**येनाङ्गमूहे व्रणवत्सरुचा परतोमरैः ।**
**समत्वं स ययौ खड्गत्सरुचापरतोऽमरैः ॥ ७४ ॥**

**येनाङ्गमिति** । रुचा सह वर्त्तते यस्तेन सरुचा तेजस्विना येन वीरेण परतोमरैः शत्रु-शस्त्रैः व्रणवत्सव्रणमङ्गमूहे ऊढम् । वहेः कर्म्मणि लिट् सम्प्रसारणम् । खड्गत्सरौ खड्गमुष्टौ चापे च रत. खड्गत्सरुचापरत' खड्गेषुप्रहारेण युद्ध कुर्व्वन्नित्यर्थः । ' त्सरुः खड्गादिमुष्टौ स्यात् ' इत्य-मर । स वीरोऽमरैः समत्व ययौ पौरुषेणेति भावः । उपमायमकयोः संसृष्टिः ॥ ७४ ॥

**निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।**
**पाणिनीयमिवालोकि धीरैस्तत्समराजिरम् ॥ ७५ ॥**

**निपातितेति** । निपातिता वीरशय्या गमिताः सुहृदादयो यत्र तत्तथोक्तम् अभिमुख-बन्धोरपि रणे वध्यत्वादिति भावः । अन्यत्र निपातिताः लक्षणाभावे शब्दसाधुत्वाय सूत्रकृता सूत्रस्वरूपेणोच्चारिताः सुहृदादिशब्दाः यत्र तदित्यर्थः । अत एव तत्समराजिर रणाङ्गण पाणि-निना प्रोक्त पाणिनीयम् अष्टाध्यायीव्याकरणमिव " तेन प्रोक्तम् " इति छप्रत्ययः । धीरैर्धृष्टैरेवा-लोकि दृष्टम् । उभयत्राप्यधीरैर्दुरवगाहत्वादिति भावः । शोभन हृदय यस्य स सुहृत् । " सुहृ-द्दुर्हृदौ मित्रामित्रयोः " इति हृदयशब्दस्य हृद्भावो निपातितः । स्वमस्यास्तीति स्वामी ईश्वरः । " स्वामिन्नैश्वर्य्ये " इति मत्वर्थीयनिपातः । ' पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ' इत्यमरः । " पितृव्यमातुलमातामहपितामहाः " इति व्यड्डुलजन्तानिपाता' । बिभर्त्तीति भ्राता नप्तृनेष्ट्रादिसूत्रादौणादिको निपातः ॥ ७५ ॥

**अभावि सिन्ध्वा सन्ध्याभ्रसदृग्रुधिरतोयया ।**
**हते योद्धुं जनः पांसौ स दृग्रुधि रतो यया ॥ ७६ ॥**

**अभावीति** । सन्ध्याभ्रसदृक् सन्ध्यामेघसदृश रुधिरमेव तोय यस्यास्तया सिन्ध्वा रक्त-नद्या अभावि भूतम् । भावे लुङि चिण् । यया सिन्ध्वा दृशो रुणद्धीति दृग्रुधि दृष्टिरोधके । रुधेः क्विप् । पांसौ रजसि हते सति स जनो वीरलोको योद्धुं रतः उत्सुकः अभूदिति शेषः । उपमायमकयोः संसृष्टिः ॥ ७६ ॥

विदलत्पुष्कराकीर्णाः पतच्छङ्खकुलाकुलाः ।
तरत्पत्ररथा नद्यः प्रासर्पन्रक्तवारिजाः ॥ ७७ ॥

विदलदिति । विदलद्भिर्विदीर्य्यमाणैः पुष्करैः करिहस्ताग्रैः अन्यत्र विकसद्भिः पद्मैरा-कीर्णाः व्याप्ताः पतद्भिः शङ्खकुलैः ललाटास्थिसङ्घैः कम्बुसङ्घैश्चाकुलाः तरन्ति प्लवमानानि पत्राणि वाहनानि रथाश्च अन्यत्र पत्ररथा अण्डजा यासु ताः रक्तवारिजा रुधिरतोयजन्याः अन्यत्र रक्तानि वारिजानि यासु ताः नद्यः प्रासर्पन् प्रावहन् । अत्र नदीनां रक्तनदीनां च श्लेषः ॥ ७७ ॥

असृग्जनोऽस्त्रक्षतिमानवमज्जवसादनम् ।
रक्षःपिशाचं मुमुदे नवमज्जवसादनम् ॥ ७८ ॥

असृगिति । अस्त्रक्षतिमान् अस्त्रप्रहारवान् जनो वीरजनोऽसृग्रक्त जवसादन जवस्य चेष्टावेगस्य सादन सादक यथा स्यात्तथा अभवत् । नवयोर्मज्जवसयोर्मेदोरसयोरदनं भक्षकम् । कर्त्तरि ल्युट् । रक्षांसि च पिशाचाश्च रक्षःपिशाचम् । समाहारे द्वन्द्वैकवद्भावः । मुमुदे जहर्ष । अत्र मोदस्य वमनवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुक काव्यलिङ्ग तच्च यमकेन संसृज्यते ॥ ७८ ॥

चित्रं चापैरपेतज्यैः स्फुरद्रक्तशतह्रदम् ।
पयोदजालमिव तद्वीराशंसनमाबभौ ॥ ७९ ॥

चित्रमिति । अपेतज्यैरपगतमौर्वीकैः । "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । चापै-श्चित्र विचित्र स्फुरन्ति रक्तान्येव शतह्रदाः शम्पा यस्मिन् तत् । 'शम्पा शतह्रदा ह्रादिनी' इत्यमरः । तत्प्रकृत वीरः आशंस्यते अत्रेति वीराशसन भयङ्करा युद्धभूमिः । ' सा वीराशसनं युद्धभूमिर्याति भयप्रदा' इत्यमरः । पयोदजालमिवाबभौ ॥ ७९ ॥

बन्धौ विपन्नेऽनेकेन नरेणेह तदन्तिके ।
अशोचि सैन्ये घण्टाभिन रेणे हतदन्तिके ॥ ८० ॥

बन्धाविति । इह सैन्ये बन्धौ विपन्ने मृते सति अनेकेन नरेण अनेकैर्नरैरित्यर्थः । जाता-वेकवचनम् । तदन्तिके तस्य मृतस्य बन्धोरन्तिके अशोचि किञ्च हता दन्तिनो यत्र तस्मिन् हतदन्तिके सैन्ये घण्टाभिर्न रेणे न दध्वने रणतेर्भावे लिट् । अत्र हतदन्तिके इति विशेषणगत्या घण्टानामरणनहेतुत्वात्पदार्थहेतुक काव्यलिङ्गं यमकेन संसृज्यते ॥ ८० ॥

कृत्तैः कीर्णा मही रेजे दन्तैर्गात्रैश्च दन्तिनाम् ।
क्षुण्णलोकासुभिर्मृत्योर्मुसलोलूखलैरिव ॥ ८१ ॥

कृत्तैरिति । कृत्तैः छिन्नैः दन्तिना दन्तैर्गात्रैश्च कीर्णा मही रणभूमिः क्षुण्णाः पिष्टाः लोकासवो जनप्राणा यैस्तैः मृत्योर्मुसलोलूखलैः कीर्णेव रेजे । 'अयोग्र मुसलोऽस्त्री स्यादुदूखलमुलूखलम्'

इत्यमरः । अत्र मुसलोलूखलैरिति राजदन्तादिपाठेऽपि "सर्वकूलाभ्र" इत्यादिसूत्रादेव व्यभिचारज्ञापकात्परनिपातव्यत्ययः ॥ ८१ ॥

**युद्धमित्थं विधूतान्यमानवानभियो गतः ।**
**चैद्यः परान्पराजिग्ये मानवानभियोगतः ॥ ८२ ॥**

**युद्धमिति** । मानवानभिमानवान् चैद्यो युद्धं गतः प्राप्तः सन् इत्थं विधूता अभिभूता अन्ये चैद्यातिरिक्ता मानवा यैस्तान् विधूतान्यमानवान् अभियः निर्भीकान् परानरीन् अभियोगतोऽभियोगादभ्यवरोधात् पराजिग्ये जिगायेत्यर्थः । "विपराभ्या जेः" इत्यात्मनेपदम् । 'सन्लिटोर्जेः" इति कुत्वम् ॥ ८२ ॥

अथ भगवदभियोग पञ्चभिः कुलकेनाह-

**अथ वक्षोमणिच्छायाच्छुरिता पीतवाससा ।**
**स्फुरदिन्द्रधनुर्भिन्नतडितेव तडित्वता ॥ ८३ ॥**

**अथेत्यादि** । अथ चैद्यजयानन्तर वपुषा राजन् परः पुमान् अदृश्यतेति पञ्चमेन सम्बन्धः । तद्वपुस्तावन्त्रिभिर्विशिनष्टि । वक्षोमणेः कौस्तुभस्य छायया छुरितानि व्याप्तान्यापीतवासासि पीताम्बराणि यस्य तेन अत एव स्फुरता इन्द्रधनुषा भिन्नाः सङ्गतास्तडितो यस्य तेन तडित्वता मेघेनेव स्थितेनेत्यर्थः ॥ ८३ ॥

द्व्यक्षरः ।

**नीलेनानालनलिननिलीनोल्लनालिना ।**
**ललनालालनेनालं लीलालोलेन लालिना ॥ ८४ ॥**

**नीलेनेति** । पुनः कीदृशेन वपुषा नीलेन श्यामलेन तथा अनाल नालरहित यन्नलिनं तत्र निलीना आसन्नाः उल्ललन्तीत्युल्ललनाश्चलाश्चालयो यस्य तेन अनालनलिननिलीनोल्लनालिना मुखसौरभलोभपरिभ्रमद्भ्रमरेणेत्यर्थः । ललनानां विलासिनीनां स्त्रीणा लालनेन उपलालनेन वशीकरणेनेत्यर्थः । अलमत्यन्त लीलालोलेन क्रीडालोलुपेन 'लीलालानेन' इति पाठे लीलानां विलासानामालानेनालयेनेत्यर्थः । लालयति भक्तानिति लालिना । भक्तानुकम्पिनेत्यर्थ । द्व्यक्षरानुप्रासोऽलङ्कारः ॥ ८४ ॥

**अपूर्वयेव तत्कालसमागमसकामया ।**
**दृष्टेन राजन्वपुषा कटाक्षैर्विजयश्रिया ॥ ८५ ॥**

**अपूर्वयेति** । किञ्च अपूर्वयेव अपूर्वसमागममेव तत्कालसमागमे सकामया साभिलाषया विजयश्रिया चैद्यविरक्तयेति भावः । कटाक्षैरपाङ्गैर्दृष्टेनालोकितेन वपुषा राजन् दीप्यमानः । अत्र प्रस्तुतजयश्रीविशेषणसाम्यादप्रस्तुतानुरक्तमानिनीप्रतीतेः समासोक्तिः । प्रतीयमानाभेदाध्यवसायादपाङ्गदर्शनोत्प्रेक्षा च ॥ ८५ ॥

द्व्यक्षरः ।

**विभावी विभवी भाभो विभाभावी विवो विभीः ।**
**भवाभिभावी भावावो भवाभावो भुवो विभुः ॥ ८६ ॥**

**विभावीति** । विभावोऽस्यास्तीति विभावी प्रभावसम्पन्नः विभवोऽस्यास्तीति विभवी ऐश्वर्य्यवान् भम्याभेवाभा यस्य सभाभो नक्षत्रवदुज्ज्वल इत्यर्थः । विभा विशिष्टाभा भावयति सम्पादयति विश्वस्येति विभाभावी । 'तस्य भासा सर्व्वमिद विभाति' इति श्रुतेः । भुवो ण्यन्ता-ण्णिनि' । विना पक्षिणा वाति गच्छतीति विवः । पक्षिवाहन इत्यर्थः । 'आतोऽनुपसर्गे कः' । विभीर्निर्भीक. । भव ससारम अभिभवतीति भवाभिभावी । भक्तानां ससारनिवर्त्तक इत्यर्थः । भुवो णिनिः भावान् जन्तून् अवतीति भावावः विश्वत्राता । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती । अवतेः कर्म्मण्यण् । भवाभावोऽस्यास्तीति ससारदुःखैरस्पृष्ट इत्यर्थः । अर्श-आदित्वादच् प्रत्ययः भुवो भूमेर्विभुर्भर्त्ता ॥ ८६ ॥

**उपैतुकामैस्तत्पारन्निश्चितैर्य्योगिभिः परैः ।**
**देहत्यागकृतोद्योगैरदृश्यत परः पुमान् ॥ ८७ ॥**

**उपैत्विति** । एवम्भूतः परः पुमान् परमपुरुषो हरिः । तत्पार तस्य हरेः पारम् अन्तमुपै-तुकामैस्त जिगीषुभिः अन्यत्र दिदृक्षुभिरित्यर्थः । "तुङ्काममनसोरपि" इति मकारलोपः । निश्चितैर्योद्धु कृतनिश्चयैरित्यर्थः । अन्यत्र निश्चिततत्त्वैः । सकर्म्मकादप्यविवक्षिते कर्म्मणि क्तः । यद्वा पीता गाव' विभक्ता भ्रातर इत्यादिवदूहयितव्यम् । स्फुटीकृत चैतत् घण्टापथे 'स वर्णि-लिङ्गी विदित' इत्यत्र । देहत्यागकृतोद्योगैर्मरणोद्यतैः अन्यत्र मुमुक्षुभिरित्यर्थः । योगिभिः सन्ना-हवद्भिरुपायवद्भिर्वा । अन्यत्र ध्यानवद्भि' । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । परैः शत्रुभिः अन्यत्र परमयोगिभिः अदृश्यत परेषामग्रेऽतिष्ठतेत्यर्थः । अन्यत्र साक्षात्कृतः 'तमेव विदित्वातिमृत्युमेति' इति श्रुतेः । अर्थान्तरप्रतीतिर्ध्वनिरेव न श्लेषः अभिधायाः प्रकृतार्थे नियन्त्रणात् ॥ ८७ ॥

युग्मेनाह—

गतप्रत्यागत. ।

**तं श्रिया घनयाऽनस्तरुचा सारतया तया ।**
**यातया तरसा चारुस्तनयाऽनघया श्रितम् ॥ ८८ ॥**

**तमिति** । घनया आनन्दसान्द्रया । अनस्तरुचा अक्षीणकान्त्या सारतया सारत्वेन सर्वो-त्कर्षणगुणेन यातया व्याप्तया । चारुस्तनया रम्यकुचया । "स्वाङ्गाच्चोपसर्जनादसयोगोपधात्" इति विकल्पादनीकारः । अनघया निर्दोषया तया प्रसिद्धया श्रिया रमया तरसा त्वरया श्रितमालि-ङ्गित त हरिमुद्वीक्ष्येत्युत्तरेण सम्बन्धः । अत्रापि प्रातिलोम्येनार्द्धावृत्तेरर्द्धप्रतिलोमयमकम् । एत-ल्लक्षण तु प्रागेवोक्तम् ॥ ८८ ॥

युग्मम् ।

विद्विषोऽद्विषुरुद्वीक्ष्य तथाप्यासन्निरेनसः ।
अरुच्यमपि रोगघ्नं निसर्गादेव भेषजम् ॥ ८९ ॥

**विद्विष इति** । तं पूर्वोक्तं हरिम् उद्वीक्ष्य विद्विषः शत्रवः अद्विषुः द्विषन्ति स्म लङि । "द्विषश्च" इति विकल्पेन झेर्जुसादेशः । तथापि द्विषन्तोऽपि निरेनसो निष्पापा आसन् द्वेषवीक्षण-स्याप्येनोनिवर्त्तकत्वं दृष्टान्तेनाह । अरुच्यमिति रोचत इति रुच्यम् "राजसूय" इत्यादिना क्यबन्तो निपातितः । अरुच्यमरोचमानमपि भेषजमौषधम् । 'भेषजौषधभैषज्यानि' इत्यमरः । निसर्गात् स्वभावशक्तेरेव रोगं हन्तीति रोगघ्नम् आरोग्यकारी । 'हरिर्हरति पापानि' इति वचनादिति भावः । "अमनुष्यकर्तृके च' इति टक्प्रत्ययः ॥ ८९ ॥

प्रतिलोमेनायमेवार्थः ।

विदितं दिवि केऽनीके तं यातं निजिताजिनि ।
विगदं गवि रोद्धारो योद्धा यो नतिमेति न ॥ ९० ॥

**विदितमिति** । किञ्च योद्धा वीरो यो हरिः नतिं परेषां नम्रतां नैति नापैति । नितरां जिता आजयो येन तस्मिन् निजिताजिनि अनेकाजिविजयिन्यपि अनीके सैन्ये 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । यातं योद्धुमागतम् । दिवि स्वर्गेऽपि विदितं प्रख्यातं विगदं निरामयं तं हरिं गवि भुवि रोद्धारो जेतारः के । न केऽपीत्यर्थः । प्रातिलोम्येऽप्येत एव पदार्थवाक्यार्थाः । एतदपि श्लोकप्रतिलोमयमकमेव पदपदार्थादिसंवादस्तु । वैचित्रीविशेषः । लक्षणं तु निध्वनदित्यत्रैवोक्तमनुसन्धेयम् ॥ ९० ॥

नियुज्यमानेन पुरः कर्म्मण्यतिगरीयसि ।
आरोप्यमाणोरुगुणं भर्त्रा कार्मुकमानमत् ॥ ९१ ॥

**नियुज्यमानेनेति** । पुरोऽग्रे अतिगरीयसि कर्म्मणि रणकर्मणि अन्यत्र दुष्करे कस्मिंश्चित्कृत्यव-स्तुनि नियुज्यमानेन व्यापारयिष्यता आज्ञापयिष्यता च भर्त्रा स्वामिना आरोप्यमाणोऽधिक्रियमाणः उरुर्महान् गुणो ज्या यस्मिन् तत् । अन्यत्र वर्ण्यमानसौन्दर्य्यादिकः । कर्म्मणे प्रभवतीति कार्म्मुकं धनुः । "कर्म्मण उकञ्" इत्युकञ्प्रत्ययः । आनमत् गुणाकर्षणादाकुञ्चितकोटिकमभूत् अन्यत्र प्रणत इत्यर्थः । अत्र प्रकृतकार्म्मुकविशेषणसाम्यादप्रस्तुतनियोज्यपुरुषप्रतीतेः समा-सोक्तिः ॥ ९१ ॥

तत्र बाणाः सुपरुषः समधीयन्त चारवः ।
द्विषामभूत्सुपरुषस्तस्याकृष्टस्य चाऽरवः ॥ ९२ ॥

**तत्रेति** । तत्र कार्म्मुके शोभनानि परूंषि येषां ते सुपरुषः सुपर्वाणः । अतएव चारवोऽतिरम्या बाणाः समधीयन्त निहिताः आकृष्टस्य तस्य कार्म्मुकस्यारवश्च द्विषां सुष्ठु परुषः सुपरुषोऽतिकर्कशोऽभूत् । यमकविशेषालङ्कारः ॥९२॥

**पश्चात्कृतानामप्यस्य नराणामिव पत्त्रिणाम् ।**
**यो यो गुणेन संयुक्तः स स कर्णान्तमाययौ ॥ ९३ ॥**

**पश्चादिति** । नराणां पुंसामिव पश्चात्कृतानां निषङ्गसङ्गितया पृष्ठस्थापितानामपि अन्यत्रावधीरितानामपि । पत्त्रिणामिषूणां मध्ये इत्यर्थः । यो यः पत्त्री नरश्च गुणेन ज्यया दाक्षिण्यादिना च संयुक्तः सबद्धः स स पत्री नरश्चास्य हरेः कर्णान्तं कर्णसमीपमाययौ आगतः गुणयोगादाकर्णमाकृष्टः अन्यत्रान्तिकमागत इत्यर्थः । श्लेषसङ्कीर्णोपमा॥ ९३ ॥

द्व्यक्षरः ।

**प्रापे रूपी पुराऽरेपाः परिपूरी परः परैः ।**
**रोपैरपारैरुपरि पुपूरेऽपि पुरोऽपरैः ॥ ९४ ॥**

**प्राप इति** । पुरा पूर्वं रूपी मत्स्यकूर्माद्यनेकरूपवान् अरेपाः निष्पापः परिपूरयति कामैर्भक्तानिति परिपूरी भक्तवरदः । पूरयतेर्णिनिः । परः परमपुरुषो हरिः परैः शत्रुभिः प्रापे प्राप्तः अवरुद्ध इत्यर्थः । अपरैरन्यैः शत्रुभिः कर्तृभिः । अपारैरनन्तैरोपैरिषुभिः । 'पत्त्री रोप इषुर्द्वयोः' इत्यमरः । पुरोऽग्रे उपरि च पुपूरे पूरितः । पृणातेः कर्म्मणि लिट् । द्व्यक्षरानुप्रासोऽलङ्कारः ॥ ९४ ॥

**दिङ्मुखव्यापिनस्तीक्ष्णान्ह्लादिनो मर्मभेदिनः ।**
**चिक्षेपैकक्षणेनैव सायकानहितांश्च सः ॥ ९५ ॥**

**दिगिति** । स हरिर्दिङ्मुखव्यापिनो दिगन्तव्यापकान् । अतितीक्ष्णान् निशितान् क्रूरांश्च । ह्लादन्ते इति ह्लादिनः पक्षनादवतः सिंहनादवतश्च मर्म्मभेदिनो मर्म्मस्थानविदारकान् सायकानिषून् अहितानरींश्च एकक्षणेनैव चिक्षेप निरास । अत्र सायकानामहितानां च प्रकृतानामेकतुल्यधर्म्मयोगादौपम्योपगमात्तुल्ययोगिताभेदः ॥ ९५ ॥

गूढचतुर्थः ।

**शरवर्षी महानादः स्फुरत्कार्मुककेतनः ।**
**नीलच्छविरसौ रेजे केशवच्छलनीरदः ॥ ९६ ॥**

**शरेति** । शरवर्षी बाणवर्षी नीरवर्षी च । 'शर नीरे शरो बाणे' इति विश्वः । महान् नादः सिंहनादो गर्जितं च यस्य स महानादः स्फुरन्ती कार्म्मुककेतने धनुर्ध्वजौ यस्य सः । अन्यत्रेन्द्रचापचिह्न इत्यर्थः । नीलच्छविः श्यामकान्तिः । केशवस्य छलं कपटं यस्य स नीरदः

केशवच्छलनीरदो हरिमेघोऽसौ रेजे रणरङ्गे सर्वोत्कर्षेण दिदीपे इत्यर्थः । अत्र छलशब्देन हरित्वापह्नवेन मेघत्वारोपणाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । त्रिपाद्यन्तर्गतचतुर्थपादाक्षरत्वाद्गूढचतुर्थाख्यश्चित्रविशेषः । शब्दालङ्कारश्चेति सङ्करः ॥ ९६ ॥

न केवलं जनैस्तस्य लघुसन्धायिनो धनुः ।
मण्डलीकृतमेकान्ताद्बलमैक्षि द्विषामपि ॥ ९७ ॥

नेति । लघु शीघ्रं सन्धत्ते यस्तस्य लघुसन्धायिनस्तस्य हरेः धनुरेव केवलम् एकान्तात् मण्डलीकृतं शीघ्रकर्षान्नियमेन वलयीकृतं जनैरैक्षि । कर्म्मणि लुङ् । किन्तु द्विषां बलमपि मण्डलीकृतं त्रासादेकत्र पुञ्जीकृतमैक्षि । अत्र धनुर्बलयोः प्रकृतयोरेव तुल्यधर्म्मयोगात् केवलमकृतास्पदा तुल्ययोगिता ॥ ९७ ॥

युग्मेनाह—

द्व्यक्षरः ।

लोकालोकी कलोऽकल्ककलिलोऽलिकुलालकः ।
कालोऽकलोऽकलिः काले कोलकेलिकिलः किल ॥ ९८ ॥

लोकालोकीति । लोकानालोकत इति लोकालोकी त्रैलोक्यदर्शी कलो मधुरभाषी कल्केन पापेन दम्भेन वा कलिलो न भवतीति अकल्ककलिलः । 'कल्कः पापाशये पापे दम्भे' इति विश्वः । अलिकुलालकः अलिकुलनीलमूर्द्धज इत्यर्थः । कालो नीलो नीलवर्णः कालात्मको वा नास्ति कला यस्य सोऽकलः निरंश इत्यर्थः । अकलिरकलहः स्वयमकलहशील इत्यर्थः । काले प्रलयकाले कोलकेल्या वराहलीलया किलति क्रीडति कोलकेलिकिलः । किलशब्दस्तु खल्वर्थे । विव्याधेत्युत्तरेण सम्बन्धः । द्व्यक्षरानुप्रासः ॥ ९८ ॥ युग्मम् ॥

अक्षितारासु विव्याध द्विषतः स तनुत्रिणः ।
दानेषु स्थूललक्ष्यत्वं नहि तस्य शरासने ॥ ९९ ॥

अक्षीति । स पूर्वोक्तगुणविशिष्टो हरिः तनुत्राणि एषां सन्तीति तनुत्रिणो वर्म्मिणः । 'तनुत्रं वर्म्म दंशनम्' इत्यमरः । तान् द्विषतः शत्रून् अक्षितारासु नेत्रकनीनिकासु विव्याध प्रजहार । तथा हि तस्य हरेः दानेषु वितरणेषु एव स्थूललक्ष्यत्वं विपुलविषयत्वम् । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः । शरासने शरक्षेपे तु न । किन्तु सूक्ष्मलक्षत्वमेव । अतोऽक्षितारावेधित्वमस्य युक्तमित्यर्थः । अतो वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ९९ ॥

द्व्यक्षरः ।

वररोऽविवरो वैरिविवारी वारिरारवः ।
विववार वरो वैरं वीरो रविरिवौर्वरः ॥ १०० ॥

**वरर इति** । वरान् रातीति वररो वरप्रदः 'रा दाने' "आतोऽनुपसर्गे कः" इति कः । अविवरो निर्विवरो नीरन्ध्रः वैरिणः शत्रून् विवारयति वैरिविवारी । वारीणि रातीति वारिरः । पूर्ववत्कः । तस्येवारवो यस्य स वारिरारवः वरः श्रेष्ठो वीरः शूरः स कृष्णः उर्वरा भूमिः 'उर्वरासर्वशस्याढ्यभूमौ स्याद्भूमिमात्रके' इत्यमरः । तस्या भवः और्वरः पृथ्वीभवः रविरिव वैर वैरिणा वृन्द विववार विवारयामास जघानेत्यर्थः । द्व्यक्षरानुप्रासः ॥ १०० ॥

**मुक्तानेकशरं प्राणानहरद्भूयसां द्विषाम् ।**
**तदीयं धनुरन्यस्य न हि सेहे सजीवताम् ॥ १०१ ॥**

**मुक्तेति** । मुक्तानेकशर क्षिप्तबहुबाण तस्य हरेरिदं तदीय धनुः भूयसा द्विषा प्राणानहरत् तथा हि अन्यस्य परस्य सजीवता न सेहे । अथ वा अन्यस्य धनुषः सजीवतां सज्याकत्वं न सेहे । 'त्रिपु जीवति जीवः स्यान्मौर्व्यां स्त्री' इति वैजयन्ती । वाक्यार्थहेतुक काव्यलिङ्गम् ॥ १०१ ॥

द्व्यक्षरः ।

**राजराजी रुरोजाजेरजिरेऽजोऽजरोऽरजाः ।**
**रेजारिजूरजोर्जार्जी रराजर्जुरजर्जरः ॥ १०२ ॥**

**राजेति** । न जायते इत्यजोऽनादिः । "अन्येष्वपि दृश्यते" इति जनेर्डप्रत्ययः । न जीर्य्यते इत्यजरः अनन्तः पचाद्यच् । नास्ति रजो यस्येत्यरजा रजोगुणरहितः । रेजन्तीति रेजास्तेजिष्ठाः । 'रेजृ दीप्तौ' पचाद्यच् । ते च ते अरयश्च तेषा जूरो हिंसन तेन जात रेजारिजूरज तदूर्ज्ज वल अर्ज्जयतीति रेजारिजूरजोर्जार्जी । अर्जोर्णिनिः । ऋजुरार्जवान् । जर्जरो न भवतीत्यजर्जरो दृढः स हरिः आजेरजिरे रणाङ्गणे राजराजीः राजश्रेणी रुरोज बभञ्ज । 'रुजो भङ्गे' लिट् अत एव रराज दिदीपे । द्व्यक्षरानुप्रासः ॥ १०२ ॥

**उद्धतान्द्विषतस्तस्य निघ्नतो द्वितय ययुः ।**
**पानार्थ रुधिरं धातौ रक्षार्थे भुवनं शराः ॥ १०३ ॥**

**उद्धतानिति** । उद्धतान् दृप्तान् द्विषतः शत्रून् निघ्नतो हिंसतः "जासिनिप्रहणन" इत्यादि सूत्रे निप्रेतिसंघातविपर्य्यस्तव्यस्तग्रहणोपदेशान्निहन्तेरशेषकर्म्मणि द्वितीयैव । तस्य हरेः शराः पानार्थे धातौ 'पा पाने' इति धातौ सति रुधिर रक्षार्थे धातौ 'पा रक्षणे' इति धातौ सति भुवन जगच्चेति द्वितय ययुः । रुधिरमपिबन् भुवनमरक्षंश्चेति श्लेषार्थः । अत्र पानयोरभेदाध्यवसायेन रुधिरभुवनयोस्तुल्ययोगितालङ्कारः तत्र पानार्थइत्यादिवाक्यस्य शत्रुवधेन भुवनमरक्षन्निति सूक्ष्मार्थगर्भत्वात् सौक्ष्म्य नाम गुणः । 'अतः सङ्कल्परूपत्व शब्दानां सौक्ष्म्यमुच्यते' इति लक्षणात् ॥ १०३ ॥

अथ युग्मेनाह—

द्व्यक्षरः ।

क्रूरारिकारी कोरेकक्कारकः कारिकाकरः ।
कोरकाकारकरकः करीरः कर्करोऽर्करुक् ॥ १०४ ॥

क्रूरेति । क्रूरान् अरीन् किरति विक्षिपति इति क्रूरारिकारी किरतेर्णिनिप्रत्ययः । कोर्भूमेरेकक्कारकः एककर्त्ता करोतेर्ण्वुल् । कारिका यातनाः करोति दुष्टानामिति कारिकाकरः । 'कारिका यातनावृत्त्योः' इत्यमरः । "कृञो हेतु" इत्यादिना ताच्छील्ये टप्रत्ययः । कारिका क्रियाः । धात्वर्थनिर्देशे ण्वुल् । तत्कर इति केचित् । कोरकाकारौ करौ यस्य स कोरकाकारकरकः । कमलमुकुलरमणीयपाणिरित्यर्थः । शैषिकः कप्रत्ययः । करिणो गजान् ईरयति क्षिपतीति करीरः । 'कर्मण्यण्' कर्करो रणकर्कश इत्यर्थः । 'कर्करो दर्पणे दृढे' इति शाश्वतः । अर्कस्येव रुक् यस्य सोऽर्करुगित्युपमा । द्व्यक्षरानुप्रासः ॥ १०४ ॥

त्रिधातुमवतीर्णोऽपि लघिमानमसौ भुवः ।
अनेकमरिसंघातमकरोद्भूमिवर्द्धनम् ॥ १०५ ॥

त्रिधातुमिति । भुवो भूमेर्लघिमानं लघुत्वं भारापहरणं त्रिधातुमवतीर्णोऽपि भुवि जातोऽप्यसौ पूर्वोक्तगुणो भगवान् हरिः अनेकं बहुमरिसंघातं भूमिवर्द्धनं भूभारमकरोत् । इति विरोधः । मृतमकरोदित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः ॥ १०५ ॥

द्व्यक्षरः ।

दारी दरदरिद्रोऽरिदारूदारोऽद्रिदूरदः ।
दूरादरौद्रोदददरद्रोदोरुद्दारुरादरी ॥ १०६ ॥

दारीति । दारी बहुदारवान् । भूमार्थे मत्वर्थीयः । दरेण भयेन दरिद्रो निर्भीकः 'दरोऽस्त्रिया भये श्वभ्रे' इत्यमरः । उदारो महान् दाता वा । 'उदारो दातृमहतोः' इत्यमरः । अद्रिवत् दुःखेन रदने दूरदो दुर्भेदोऽद्रिदूरदः 'रद विलेखने' खल् प्रत्ययः । अरौद्रः साधूनां सौम्यः रोदसी रुणद्धीति रोदोरुत् विश्वव्यापी । रुधेः क्विप् । ददातीति दारुर्दाता । ददातेरौणादिको रुप्रत्ययः । आदरोऽस्यास्तीति आदरी सन्मार्गादरवान् स हरिः अरिरेव दारु काष्ठमरिदारु दूरादेव अददरत् दारयति स्म । दारयतेर्णौ चङि "अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्" इत्यभ्यासस्यात्त्वम् । अरिदार्विति रूपकमर्थालङ्कारो द्व्यक्षरानुप्रासश्च ॥ १०६ ॥

एकेषुणा संघतिथान्द्विषोऽभिन्दन्द्रुमानिव ।
सजन्मान्तररामस्य चक्रे सदृशमात्मनः ॥ १०७ ॥

एकेषुणेति । स हरिरेकेषुणा एकेनैव शरेण सघानां पूरणान् संघतिथान् संघशः स्थिता-नित्यर्थः।"बहुपूगगणसंघस्य तिथुक्" इति तिथुगागमादेव ज्ञापकादसङ्ख्यात्वेऽपि सघात्तद् प्रत्ययः । द्विषः शत्रून् द्रुमानिवेत्युपमा भिन्दन् विदारयन् । जन्मान्तरे रामस्य दाशरथेरात्मनः सदृशं चक्रे । एकशरेणानेकारिद्रुमभेदस्तु जन्मान्तरभावनया जात इति भावः । 'बिभेद च पुनस्तालान् सप्तैकेन महेषुणा ' इति रामायणे ॥ १०७ ॥

द्व्यक्षरः ।

शूरः शौरिरशिशिरैराशाशैराशु राशिशः ।
शारारुः श्रीशरीरेशः शुशूरेऽरिशिरः शरैः ॥ १०८ ॥

शूर इति । शृणातीति शरारुः दुष्टघातुकः 'शरारुर्घातुको हिंस्रः' इत्यमरः । "शॄवन्द्योरारुः" इत्यारुप्रत्ययः । श्रीशरीरस्येशः श्रीशरीरेशः लक्ष्मीप्राणनाथः । शूरो वीरः शौरिः कृष्ण अशिशिरै-स्तीक्ष्णैः आशा दिशोऽश्नुवत इत्याशाशैर्दिगन्तव्यापकैः।अश्नोतेः कर्मण्यण् । शरैर्बाणैः अरिशिरः शत्रुशिरांसि । जातावेकवचनम् । राशिशः सघशः आशु शीघ्र शुशूरे जघान । 'शूर हिंसास्त-म्भनयोः ' इति धातोर्लिट् । द्व्यक्षरानुप्रासः ॥ १०८ ॥

व्यक्तासीदरितारीणां यत्तदीयास्तदा मुहुः ।
मनोहृतोऽपि हृदये लेगुर्नैषान्न पत्रिणः ॥ १०९ ॥

व्यक्तेति । तदा तस्मिन्समये एषाम् अरीणामरिता शत्रुता मुहुर्व्यक्ता आसीत् । यद्यस्मा-त्तस्य हरेरिमे तदीया पत्रिणो बाणाः मनो हरन्ति कायादुद्धरन्ति इति मनोहृतो मारका इत्यर्थः । हरतेः क्विप् । मनोज्ञाः प्रतीयन्ते । अत एव मनोहृतोऽपि हृदये मनसि न लेगुर्न लग्नाः इति विरोधः । वक्षो निर्भिद्य निर्जग्मुरित्यर्थः । ' हृदय वक्षसि स्वान्ते' इति विश्वः । विरोधाभासोऽलङ्कारः ॥ १०९ ॥

अतालव्यः ।

नामाक्षराणां मलिता मा भूद्भर्तुरतः स्फुटम् ।
अगृह्णत पराङ्गानामसूनस्रं न मार्गणाः ॥ ११० ॥

नामेति । भर्तुः स्वामिनो नामाक्षराणा फलेषु लिखितानां मलिता मालिन्य तिरोधानं मा भूदिति बुद्ध्येत्यर्थः । अतः मार्गणाः हरिशराः पराङ्गानाम् अरिशरीराणाम् । असून् प्राणान् अगृह्णत । ग्रहेर्लङ् । न अस्रं रक्तं रक्ताविलेपस्य आशुभावनिमित्तस्य स्वामिनामा-क्षरमालिन्यपरिहारार्थत्वमुत्प्रेक्ष्यते । स्फुटमिति । अत्र तालव्यवर्णाभावाददतालव्य इति चित्रभेदः । ' इचुयशानां तालु' इति इवर्णस्यापि तालुत्वेऽपि व्यञ्जनापेक्ष एवाय नियम इति न दोषः ॥ ११० ॥

आच्छिद्य योधसार्थस्य प्राणसर्व्वस्वमाशुगाः ।
ऐकागारिकवद्भूमौ दूराज्जग्मुरदर्शनम् ॥ १११ ॥

आच्छिद्येति । आशुगाः बाणाः योधसार्थस्य वीरवर्गस्य प्राणसर्व्वस्वम् आच्छिद्य ऐकागारिकाश्चौराः । 'चौरैकागारिकस्तेनाः' इत्यमरः । "ऐकागारिकट् चौरे" इत्यर्थे निपात्यते इत्येके । 'इकट्प्रत्यये वृद्धिश्च निपात्यते' इत्यपरे । तैस्तुल्यमैकारिकवत् । तुल्यार्थे वतिः । दूराद्भ्रमादर्शनमदृश्यता जग्मुः ॥ १११ ॥

भीमास्त्रराजिनस्तस्य बलस्य ध्वजराजिनः ।
कृतघोराजिनश्चक्रे भुवः सरुधिरा जिनः ॥ ११२ ॥

भीमेति । जिनो हरिः अवतारान्तरनाम्ना व्यपदेशः भीमा अस्त्रराजयो यस्य तस्य भीमास्त्रराजिनः । "इकोऽचि विभक्तौ" इति नुमागमः । ध्वजैराजते यत्तस्य ध्वजराजिनः । ताच्छील्ये णिनिः । कृता घोरा आजिर्युद्ध येन तस्य कृतघोराजिनः । पूर्ववन्नुमागमः । तस्य बलस्य सैन्यस्य सम्बन्धिनीर्भुवस्तद्रणभूमीः सरुधिराः सास्राश्चक्रे । चतुष्पादयमकम् ॥ ११२ ॥

मासव्यधोचितमुखैः शून्यतां दधदक्रियम् ।
शकुन्तिभिः शत्रुबलं व्यापि तस्येषुभिर्नभः ॥ ११३ ॥

मासेति । मासव्यधो मासखण्डनम् । "व्यधजपोरनुपसर्गे" इत्यप्प्रत्ययः । तत्रोचितानि परिचितानि मुखानि चञ्चवः शल्यानि च येषां ते शकुन्तिभिः । कर्त्तृभिः । शून्यताम् अचेतनत्वम् अन्यत्र तुच्छत्वममूर्त्तत्वं वा दधत् अत एव अक्रियमस्पदं शत्रुबलं व्यापि व्याप्तम् । आप्नोतेः कर्म्मणि लुङ् । तस्य हरेरिषुभिः नभो व्यापि । अत्रेषुपक्षिणा नभोबलयोर्व्याप्तितुल्यधर्म्मयोगित्वात्तुल्ययोगितामेदः ॥ ११३ ॥

एकाक्षरः ।

दाददो दुद्दुद्दादी दादादो दूददीददोः ।
दुद्दादं दददे दुद्दे ददाददददोऽददः ॥ ११४ ॥

दाददइति । दद्यते इति दादः दानम् । 'दद दाने' इति धातोः कर्म्मणि घञ् । दादन्ददातीति दाददो दानप्रदः । "आतोऽनुपसर्गे कः" । दुद्दुद्दादी दुत् उपताप । 'टुदु उपतापे' क्विप् । तद्दुतमुपतापं ददति साधूनामिति दुद्दाः खलाः । पूर्ववत्कः । तेषां दुतमुपतापं ददत् इति दुद्दुद्दादी । 'दद दाने' इति धातोर्णिनिः । दादादः । दाः शुद्धिः । 'दैप् शोधने' क्विप् । ता ददत इति दादादः।'दद दाने' कर्म्मण्यण् । दूददीददोः । दूः परितापः 'दूङ् परितापे' क्विप् । तां ददातीति दूदाः दुष्टाः दीः क्षयः । 'दीङ् क्षये' क्विप् । ता दत्त इति दीदौ नाशदौ । उभयत्र "आतोऽनुपसर्गे कः" दूदाना दीदौ दुष्टमर्दकौ दोषौ भुजौ यस्य

सः दूददीददोः दुष्टभञ्जकभुज इत्यर्थः । ददाददददः । ददन्ते इति ददा. दातारः न ददन्ते इति अददाः अदातारः तेषां द्वयानामपि ददो दाता ददाददद: । सर्वत्र 'दद दाने' पचाद्यच् । अदन्तीत्यदा बकासुरपूतनाप्रभृतयः । अदः पचाद्यच् । तान् द्यति खण्डयति इति अददः 'दोऽवखण्डने' "आतोऽनुपसर्गे कः" । एवम्भूतो हरिः दुतं ददातीति दुद्दः दुःखदः तस्मिन् दुद्दे शत्रौ दुत ददत इति दुद्दाद शस्त्रम् । 'दद दाने' "कर्म्मण्यण्" । दददे ददौ प्रयुक्तवानित्यर्थः । "'दद दाने' कर्त्तरि लिट् । एकाक्षरानुप्रासोऽलङ्कारः ॥ ११४ ॥

प्लुतेभकुम्भोरसिजैर्हृदयक्षतिजन्मभिः ।
प्रावर्त्तयन्नदीरस्त्रैर्द्विषां तद्योषितां च सः ॥ ११५ ॥

प्लुतेति । स हरिः प्लुताः उक्षिताः इभकुम्भाः उरसि जाता उरसिजा इव इभकुम्भा इवोरसिजाश्च यैस्तैः । हृदयक्षतिभिर्वक्षः प्रहारैः मनोभङ्गैश्च विषादापादकैः जन्म येषा तैः । 'हृदयं वक्षसि स्वान्ते' इति विश्वः । द्विषां तद्योषिता चास्त्रैः शोणितैरश्रुभिश्च । 'अस्त्रमश्रुणि शोणिते' इति विश्वः । नदीः प्रावर्त्तयत् प्रावाहयत् । अखिवेन तन्नारीररोदयदित्यर्थः । अत्र द्वयानामप्यस्त्राणां प्रकृतत्वात्प्रकृतश्लेष । तैरस्त्रैर्द्विषां तद्योषितां यथासंख्यसम्बन्धाद्यथासंख्यालङ्कारः । तदुपजीवनेन द्विषां तद्योषिता चास्त्रैः शोणितै. श्लेषमूलाभेदातिशयोक्तिमहिम्ना अस्त्ररूपतुल्यधर्म्मयोगित्वात्तुल्ययोगितेत्यङ्गाङ्गिभावेनैषां सङ्करः ॥ ११५ ॥

अर्थत्रयवाची ।

सदामदबलप्रायः समुद्धृतरसो बभौ ।
प्रतीतविक्रमः श्रीमान्हरिर्हरिरिवापरः ॥ ११६ ॥

सदेति । सदा मदो यस्य स सदामदः नित्यमत्तस्त बल बलभद्र प्रीणातीति सदामदबलप्रायः । परत्वात्कर्म्मण्यणप्रत्यय. । समुद्धृता रसा भूर्येन स समुद्धतरसः प्रतीताः प्रसिद्धाः विक्रमाः पादन्यासा यस्य सः । त्रिविक्रम इत्यर्थः । श्रीमान् रमापतिः हरिः कृष्णोऽपरोऽन्यो हरिरिन्द्र इव बभौ सोऽपि सतामामदो दुःखदो यो बलासुरस्तस्य प्रायो नाशस्तं करोतीति सदामदबलप्रायः । "तत्करोति" इति ण्यन्तात्पचाद्यच् । समुद्धृतरसः अमृतपानेन सम्यगपहृतविषः । 'शृङ्गारादौ विषे वीर्य्ये द्रवे रागे गुणे रस' इत्यमरः । प्रतीतविक्रमः प्रसिद्धपराक्रमः श्रीमान् स्वाराज्यलक्ष्मीयुक्तः । तथाऽपरोन्यो हरिः सूर्य्य इव बभौ । सोऽपि आम रोग द्यति खण्डयतीति आमदः । बल पृणातीति बलप्रः । मूलविभुजादित्वात्कः । सता भक्तानामामदो बलप्रश्च अय उदयो यस्य स सदामदबलप्रायः । स्वोदयेन सतामारोग्यबलकारीत्यर्थः । 'उद्यन्नद्य' इत्यादिश्रुतेरिति भाव. । समुद्धृतरसः घर्म्मकालसशोषितसलिलः । प्रतीतविक्रमः प्रसिद्धखगगतिः । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । तदेवमुपमानयोरुपमेये चार्थत्रयवचनादर्थत्रयवाच्येष चित्रभेदः । एतावदेव कवेर्विवक्षितमतोऽन्यत्सुवाच्यत्वोपेक्ष्यमेव । अत्रापरो हरिरिवेत्यपरशब्दप्रयोगादुत्प्रेक्षेय

नोपमा । अन्यस्येन्द्रस्यार्कस्य वाऽप्रसिद्धेः । प्रसिद्धसादृश्यवर्णनमुपमा । प्रसिद्धताद्रूप्यारोपे रूपकम् । प्रसिद्धताद्रूप्यभावनमुत्प्रेक्षा । अत एव लक्षयन्ति । 'अप्रकृतगुणक्रियाभिसन्धानादप्रकृतत्वेन प्रकृतस्य भावनमुत्प्रेक्षा' इति तस्मादपरशब्देन प्रकृतस्याप्रकृतत्वाध्यवसायप्रतीतेरिवशब्देन तस्य साध्यत्वप्रतीतेरुत्प्रेक्षैवेति सर्वस्वकारः । तस्मादिवशब्दमात्रप्रयोग एवोपमा । अपरशब्दमात्रप्रयोगेऽतिशयोक्तिः । उभयोः प्रयोगे तूत्प्रेक्षैवेति विवेकः । अत एवात्रानेकार्थवर्णनव्यवसायिभिरपरशब्दस्यान्यार्थवाच्यतिरेकेणार्थान्तरकल्पनापि नालङ्कारिकाणां पन्था । श्लेषश्चात्रोत्प्रेक्षाबीजभूतमात्रमप्रनिर्वाहमात्रोपक्षीणतया तदङ्गमिति सङ्करः इत्यलमतिप्रसक्त्या ॥ ११६ ॥

द्विधा त्रिधा चतुर्धा च तमेकमपि शत्रवः ।
पश्यन्तः स्पर्द्धया सद्यः स्वयं पञ्चत्वमाययुः ॥ ११७ ॥

द्विधेति । शत्रवः एकमपि तं हरिं द्विधा द्वित्वेन त्रिधा त्रित्वेन चतुर्धा चतुष्टयेन पश्यन्तः भयात्तथा भ्राम्यन्त इत्यर्थः । स्पर्द्धया मत्सरेण सद्यः स्वयं पञ्चत्वं पञ्चधाभावं मरणं चाययुः । मत्सरिणस्तद्विक्रमाचरन्तीति भावः । 'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्' इत्यमरः । पाञ्चभौतिकस्य शरीरस्य पञ्चधाभावः पञ्चता । अत्र स्पर्द्धेति हेतोरुत्प्रेक्षणाद्धेतूत्प्रेक्षा सा च व्यञ्जकाप्रयोगाद्गम्या स्पर्द्धयेवेत्यर्थः ॥ ११७ ॥

समुद्गः ।

सदैव सम्पन्नवपू रणेषु स दैवसम्पन्नवपूरणेषु ।
महोदधेस्तारिमहानितान्तं महो दधेऽस्तारिमहानितान्तम् ॥ ११८ ॥

सदेति । सदैव सर्वदैव सम्पन्नं सर्वलक्षणसमग्रं वपुर्यस्य स सम्पन्नवपुर्नित्यपरिपूर्णमूर्त्तिः । संहितायाम् "ढ्रलोपे पूर्वस्य दीर्घोऽणः" अस्ता निरस्ताः अरीणां महस्तेजो येनासौ अस्तारिमहा महानधिकः स हरिः दैवसम्पद् भाग्यसम्पत्तिः सैव नवं पूरणं प्रत्ययसाधनं येषां तेषु दैवसम्पन्नवपूरणेषु रणेषु दैवसहायेषु महोदधेर्महार्णवस्य इतान्तं प्राप्तपारं समुद्रपारगामि नितान्तं स्तारं विस्तीर्णं महस्तेजो दधे धारयामास । अर्द्धाभ्यासलक्षणसमुद्गयमकभेदः । 'अर्द्धाभ्याससमुद्गः स्यादस्य भेदास्त्रयो मताः' इत्युक्तं दण्डिना । उपेन्द्रवज्रा वृत्तम् ॥ ११८ ॥

इष्टं कृत्वार्थं पत्रिणः शार्ङ्गपाणेरेत्याधोमुख्यं प्राविशन् भूमिमाशु ।
शुद्ध्या युक्तानां वैरिवर्गस्य मध्ये भर्त्रा क्षिप्तानामेतदेवानुरूपम् ॥ ११९ ॥

इष्टमिति । शार्ङ्गं पाणौ यस्य तस्य शार्ङ्गपाणेः कृष्णस्य । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति पाणेः परनिपातः । पत्रिणो बाणा इष्टमर्थं शत्रुवधात्मकं कृत्वा आधोमुख्यम् अधोमुखत्वमेत्य प्राप्य आशु भूमिमाविशन् शुद्ध्या लोहशुद्ध्या पवित्रतया च युक्तानां तथापि

भर्त्रा स्वामिना वैरिवर्गस्य मध्ये क्षिप्ताना पातितानाम् एतदेव आधोमुख्येन कश्चिन्निलयनमेवा-नुरूपमुचितम्। सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासः। जागत वैश्वदेवीवृत्तम्। 'पञ्चाश्वै-श्छिन्ना वैश्वदेवी ममौ यौ' इति लक्षणात् ॥ ११९ ॥

चक्रबन्धः।

सत्त्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो लब्धाघ-क्षयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा। मुक्त्वा काममपास्त-भीः परनृगव्याधः स नादं हरेरेकौघैः समकालमभ्रमुदयी रोपै-स्तदातस्तरे ॥ १२० ॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये एकोनविंशतितमः सर्गः ॥ १९ ॥

सत्त्वमिति। भव्यः कल्याणमूर्त्तिः लब्धोऽघक्षयः शुद्धिश्च येन स लब्धाघक्षयशुद्धिः श्रीवत्सस्य लाञ्छनविशेषस्य भूमिर्वक्षः सा उद्धुरतरा उन्नततरा यस्य स उद्धुरतरश्रीवत्सभूमिः काममपास्तभीः निर्भीकः परे शत्रवस्त एव मृगास्तेषां व्याधःमृगयुरित्यश्लिष्टरूपकम्। 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि च' इत्यमरः। उदयी नित्याभ्युदयवान्। नित्ययोगे मत्व-र्थीयः। स हरिः पुरः पूर्वम् आजिरभसात् रणरागात् मानविशिष्टमहङ्कारोद्धुरं सत्त्वं बलम् आल-म्ब्याऽऽस्थाय मुदा उत्साहेन हरेः सिंहस्य नादं मुक्त्वा सिंहनादं कृत्वेत्यर्थः। समकालमेकका-लम्। अत्यन्तसंयोगे द्वितीया। एक ओघो येषां तैः एकौघैः एकप्रहारैः रोपैरिषुभिरभ्रमाकाशं तदा तस्मिन् काले आतस्तरे आच्छादयामास "ऋच्छत्यृताम्" इति गुण.। चक्रबन्धाख्य-श्चित्रविशेषोऽलङ्कार. पूर्वोक्तरूपकेण संसृज्यते। चक्रबन्धोद्धारस्तु। दशमण्डलरेखात्मके नव-मण्डलान्तरालवति चक्रे नाभिस्थानेन सहैकोनविंशतिकोष्ठं प्रत्येकं द्व्यक्षगतं पङ्क्तित्रयं समरेखयं लिखित्वा तत्रैकस्यां पङ्क्तौ वामपार्श्वक्रमेण आद्यपादमालिख्य तथा प्रादक्षिण्येन द्वितीयतृतीय-योर्द्वितीयतृतीयौ लिखित्वा नेमिस्थाने बाह्यवलये साक्षरकोष्ठषट्केन सहाष्टादशकोष्ठवति तृतीयपा-दान्तकोष्ठवर्तिवर्णमारभ्य प्रादक्षिण्येन चतुर्थपादं लिखित्वा तत्रैव समापयेत्। तत्र तत्राद्यन्त-वर्णैः सह चतुर्थपादोद्धारः। तत्र नाभिस्थाने अद्यपादत्रयदशमाक्षरसंवादः। तृतीयान्तकोष्ठे चतुर्थाद्यन्तवर्णयोः संवादः। तृतीयवलये माघकाव्यमिदं षष्ठे शिशुपालवध इति कविकाव्यनामोद्धारः। शार्दूलविक्रीडितं वृत्तम् ॥ १२० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये एकोनविंशतितमः सर्गः ॥ १९ ॥

# विंशः सर्गः ।



अथ हरिशिशुपालयोर्युद्ध वर्णयितुमुपोद्घात करोति—

**मुखमुल्लसितत्रिरेखमुच्चैर्भिदुरभ्रूयुगभीषणं दधानः ।**
**समिताविति विक्रमानमृष्यन्गतभीराह्वत चेदिराण्मुरारिम् ॥ १ ॥**

**मुखमिति** । इतीत्थ समितावाजौ । 'समित्याजिसमिद्युधः' इत्यमरः । विक्रमान् मुरारेः पराक्रमान् अमृष्यन् असहमान अतएव तिस्रो रेखास्त्रिरेखाः । "दिक्सङ्ख्ये सञ्ज्ञायाम्" इति समास । ता उल्लसिता क्रोधादुद्भूता यस्मिन् तदुल्लसितत्रिरेखम् । क्वचित्त्रिलोकमित्यपि पाठ । तथा भिदुरेण ग्रन्थिलेन भ्रूयुगेन भीषण भयङ्करम् उच्चैरुन्नत मुख दधान चेदिषु राजते चेदिराट् । "सम्पदादिभ्य क्विप्" । यद्वा चेदीना राट् चेदिराट् । "अन्येभ्योऽपि दृश्यते" इति क्विप् । 'राजा राट् पार्थिव क्ष्माभृत्' इत्यमरः । गतभीः निर्भीकः सन् मुरारि हरिम् आह्वत । अयमह कासि मामभ्युपैहि इति स्पर्द्धया आमर्यादाकारयामासेत्यर्थः । विनाशकाले विपरीतबुद्धेर्दुर्वारत्वादिति भावः । "स्पर्द्धायामाङ" इति ह्वयतेर्लुङि तङ् 'आत्मनेपदेष्वन्यतरस्याम्" इति च्लेरङादेशः । अत्रामर्षस्य विशेषणगत्या आह्वानहेतुत्वात् काव्यलिङ्गम् । सर्गेऽस्मिन्नौपच्छन्दसिक वृत्तम् । वैतालीये गुर्वाधिक्यात् । तदुक्तम् 'वैतालीय द्वि स्वरा अयुक्पादे युग्वसवोऽन्ते लगौ औपच्छन्दसिकम्' इति ॥ १ ॥

**शितचक्रनिपातसम्प्रतीक्षं वहतः स्कन्धगतं च तस्य मृत्युम् ।**
**अभिशौरि रथोऽथ नोदिताश्वः प्रययौ सारथिरूपया नियत्या ॥ २ ॥**

**शितेति** । अथ आह्वानानन्तर शितचक्रनिपात सितसुदर्शनप्रहार सम्प्रतीक्षत इति शितचक्रनिपातसम्प्रतीक्षम् । ईक्षतेः कर्मण्यण् । स्कन्धगत मृत्युं वहत तस्य चैद्यस्य रथः सारथिरूपया नियत्या विधिनेति रूपकम् । 'भाग्य स्त्री नियतिर्विधिः' इत्यमरः । नोदिताश्वः प्रेरिताश्व. सन् अभिशौरि शौरिमभि । आभिमुख्येऽव्ययीभाव । "अव्ययादाप्सुप." इति सुपो लुक् । प्रययौ प्रतस्थे ॥ २ ॥

**अभिचैद्यमगाद्रथोऽपि शौरेरवनिं जागुडकुङ्कुमाभिताम्रैः ।**
**गुरुनेमिनिपीडनावदीर्णव्यसुदेहस्रुतशोणितैर्विलिम्पन् ॥ ३ ॥**

**अभीति** । अथ शौरेः कृष्णस्य रथोऽपि जागुडो देशविशेषः तत्र यत्कुङ्कुम तद्वदभिताम्रैररुणैरित्युपमा । यावकेति पाठे यावकश्च कुङ्कुम च ताभ्यामभिताम्रैरित्यर्थः । गुरूणा नेमीनाश्चक्रधाराणां निपीडनेन नोदनेनावदीर्णेभ्यो व्यसूना विगतप्राणानां देहेभ्यः स्रुतैः शोणि-

तैरसृग्भिरवनिं विलिम्पन् उपदिहानः सन् । अभिचैद्य चैद्यमभि । समासो व्यासो वा विकल्पात् । अगात् । "इणो गा लुङि" इति गादेश' ॥ ३ ॥

**स निरायतकेतनांशुकान्तः कलनिक्काणकरालकिङ्किणीकः ।**
**विरराज रिपुक्षयप्रतिज्ञामुखरो मुक्तशिखः स्वयं नु मृत्युः ॥ ४ ॥**

स इति । निरायतोऽतिदीर्घः केतनांशुकान्तः ध्वजपटाञ्चलो यस्य स. कलनिक्काणैः मधुरस्वरैः कराला कुशला प्रगल्भाः किङ्किण्यः क्षुद्रघण्टिका यस्य स. तथोक्तः । "नद्यृतश्च" इति कप् । 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः । स कृष्णस्य रथः रिपुक्षयस्य शिशुपालवधस्य प्रतिज्ञया मुखरो वाचालः अत एव मुक्तशिखो मुक्तकेशः । विरराज नाहमेनमहत्वा शिखाबन्धं करिष्यामीत्युद्घोषयन्नित्यर्थ । स्वय साक्षान्नु मृत्युरन्तकः किमित्युत्प्रेक्षा ॥ ४ ॥

**सजलाम्बुधरारवानुकारी ध्वनिरापूरितदिङ्मुखो रथस्य ।**
**प्रगुणीकृतकेकमूर्द्ध्वकण्ठैः शितिकण्ठैरुपकर्णयाम्बभूवे ॥ ५ ॥**

सजलेति । सजलो योऽम्बुधर तस्यारव गर्जितमनुकरोतीति तथोक्त' तद्वद्गम्भीर इत्यर्थ' । उपमालङ्कारः । आपूरितदिङ्मुखो व्याप्तदिगन्तो रथस्य कृष्णरथस्य ध्वनि ऊर्ध्वाः कण्ठाः येषां तैरूर्द्ध्वकण्ठै । आकस्मिकाननस्वलोभाद्विस्मयहर्षोन्नमितकन्धरैरित्यर्थः । शितिकण्ठैर्नीलकण्ठैः प्रगुणीकृता अतितारीकृताः केका यस्मिन् कर्मणि तद्यथा तथा । 'केका वाणी मयूरस्य' इत्यमर. । उपकर्णयाम्बभूवे । मेघारवभ्रान्त्या दत्तकर्णैरित्यर्थः । एतेन भ्रान्तिमदलङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः ॥ ५ ॥

**अभिवीक्ष्य विदर्भराजपुत्रीकुचकाश्मीरजचिह्नमच्युतोरः ।**
**चिरसेवितयापि चेदिराजः सहसावाप रुषा तदैव योगम् ॥ ६ ॥**

अभीति । चेदिराज शिशुपाल । "राजाहःसखिभ्यष्टच्" इति टच् । विदर्भराजपुत्र्या रुक्मिण्या कुचयोर्यत्काश्मीरज कुङ्कुम तच्चिह्न यस्य तदच्युतोरः कृष्णवक्षः अभिवीक्ष्य चिरसेवितया चिरोपयुजापि रुक्मिणीहरणात्प्रभृति सम्भृतयापीत्यर्थः । रुषा रोषेण तदैव तदानीमिवेत्युत्प्रेक्षा । सहसा योग सम्बन्धमवाप । यथा कामी काम्यन्तरभोगचिह्नदर्शनोद्दीप्त. कान्तया सयुज्यते तद्वदित्यर्थः । परमार्थस्वरूप एव कोपो वैदर्भीस्तनकुङ्कुमदर्शनादुद्दीपित इत्यर्थ । अत्र प्रकृतरुड्विशेषणसाम्यादप्रकृतकान्ताप्रतीतेः समासोक्तिः । उक्तोत्प्रेक्षा त्वङ्गमस्याः ॥ ६ ॥

**जनिताशनिशब्दशङ्कमुच्चैर्धनुरास्फालितमध्वनन्नृपेण ।**
**चपलानिलचोद्यमानकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यम् ॥७॥**

जनितेति । नृपेण चेदिपेन आस्फालित सघट्टितम् अत एव चपलानिलेन तीव्रानिलेन चोद्यमानस्य सवर्द्धमानस्य कल्पक्षयकालाग्नेर्या शिखा ज्वाला तया समाना तन्निभा ।

इति नित्यसमासः । सा स्फुरन्ती दोधूयमाना ज्या मौर्वी यस्य तत्तथोक्त धनुः जनिता उत्पादिता अशनिशब्दशङ्का यस्मिन् कर्म्मणि तत्तथोक्तम् । उच्चैस्तरामध्वनत् । अत्राग्निशिखानिमेत्यु-पमाया अशनिशब्दशङ्केति भ्रान्तिमतः आस्फालितमध्वनदिति पदार्थहेतुककाव्यालिङ्गस्य च सापेक्षत्वात्सङ्करः ॥ ७ ॥

**समकालमिवाभिलक्षणीयग्रहसन्धानविकर्षणापवर्गैः ।**
**अथ साभिसरं शरैस्तरस्वी स तिरस्कर्तुमुपेन्द्रमभ्यवर्षत् ॥ ८ ॥**

**समेति ।** अथ धनुरास्फालनानन्तर तरस्वी बलवान् स चैद्यः समकालमिवेत्यु-त्प्रेक्षा । अत्यन्तसयोगे द्वितीया । अभिलक्षणीया दृश्या ग्रहो ग्रहण सन्धान मौर्व्या योजन विकर्षणमाकर्षणमपवर्गो मोक्षश्च येषा तैः शरैः साभिसर सानुचरम् उपेन्द्र हरिं तिरस्कर्तुमाच्छा-दयितुमभ्यवर्षत् ॥ ८ ॥

**ऋजुताफलशुद्धियोगभाजां गुरुपक्षाश्रयिणां शिलीमुखानाम् ।**
**गुणिना नतिमागतेन सन्धिः सह चापेन समञ्जसो बभूव ॥ ९ ॥**

**ऋजुतेति ।** ऋजुता अवक्रत्वम् अकुटिलबुद्धित्व च फलं शल्य श्रेयश्च तेन योगः शुद्धि-र्लोहशुद्धिर्नैर्विषयत्व च अन्यत्र बाह्याभ्यन्तरशुद्धिस्ता भजन्तीति तद्भाजा गुरोर्महतः पक्षस्य कङ्कादिपत्रस्य सहायस्य चाश्रयः आश्रयणमेषामस्तीति गुरुपक्षाश्रयिणा शिलीमुखानां शराणां गुणिना ज्यावता नतिमागतेन आकर्षणाकुञ्चितकोटित्व विधेयत्व च प्राप्तेन चापेन सह सन्धिः सम्बन्धः समञ्जसः साधीयान् बभूव । अबलवता बलिना नम्रेण सन्धिरेवोचितेति भाव । अत्र प्रस्तुतचापशिलीमुखयोर्विशेषणसाम्यादप्रस्तुतारित्रिजिगीषुवस्तुप्रतीतेः समासोक्ति. । तच्च साम्यं वाच्यप्रतीयमानयोरभेदाध्यवसायात्सिद्धम् । न चात्र समानालङ्कारशङ्का कार्या 'सामानालङ्कृ-तिर्योगे वस्तुनोरनुरूपयो.' इत्यनुरूपयोरेव वस्तुनोर्योगेन तस्योपस्थापनादित्यनुसन्धेयम् । जिगी-षुगुणयोगिनोरिह भेदात् ॥ ९ ॥

**अविषह्यतमे कृताधिकारं वशिना कर्म्मणि चेदिपार्थिवेन ।**
**असरद्धनुरुच्चकैर्दृढार्त्तिप्रसभाकर्षणवेपमानजीवम् ॥ १० ॥**

**अविषह्येति ।** वशिना स्वतन्त्रेण चेदिपार्थिवेन अविषह्यतमे दुष्करे कर्म्मण्यरिजय-व्यापारे कृताधिकार कृतनियोगम् । नियुज्यमानमित्यर्थः । अत एव दृढयोरर्त्योः कोट्योः प्रस-भाकर्षणेन वेपमाना दोधूयमाना जीवा ज्या यस्य तत् । अन्यत्र दृढयार्त्या ताडनेन प्रसभाकर्ष-णेन च वेपमानः कम्पमानो जीवः प्राणो यस्येत्यर्थः । 'अर्त्तिः पीडाधनुष्कोट्यो.' इत्यमरः । 'जीवः प्राणे स्त्रिया ना तु जन्तावात्मनि गीष्पतौ । त्रिषु जीवति मौर्व्यां स्त्री' इति वैजयन्ती । धनु-रुच्चकैरसरत् अध्वनदाक्रन्दत् । यथा राज्ञा नियुक्तः पराधीनः बलादाकृष्यमाणः क्रोशति तद्व-दित्यर्थः । अत्रापि प्रकृतविशेषणसाम्यादप्रकृततत्तापराध्याधिकृतपुरुषप्रतीतेः समासोक्तिः ॥ १० ॥

अनुसन्ततिपातिनः पटुत्वं दधतः शुद्धिभृतो गृहीतपक्षाः ।
वदनादिव वादिनोऽथ शब्दाः क्षितिभर्त्तुर्धनुषः शराः प्रसस्रुः ११

अन्विति । अथाकर्षणानन्तरं क्षितिभर्त्तुश्चैद्यस्य धनुषः सकाशात् अनुसन्तत्या पतन्तीति अनुसन्ततिपातिनोऽविच्छेदवर्त्तिनः पटुत्वं लक्ष्यभेदपाटवं वाचकत्वशक्तिं च दधतः शुद्धिभृतः लोहशुद्धिभृतः निर्विषा वा अन्यत्र सावद्य इत्यर्थः । गृहीतपक्षाः स्वीकृतकङ्कादिपत्राः । अन्यत्र गृहीतनित्यत्वादिसाध्यार्थाः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । शराः वादिनः कथकस्य वदनाच्छब्दाः प्रतिज्ञाहेत्वादय इव प्रसस्रुर्निर्जग्मुः । श्लिष्टविशेषणेयमुपमेति केचित् । श्लेष एव प्रकृताप्रकृतविषय इत्यन्ये ॥ ११ ॥

गवलासितकान्ति तस्य मध्यस्थितघोरायतबाहुदण्डनासम् ।
ददृशे कुपितान्तकोन्नमद्भ्रूयुगभीमाकृति कार्म्मुकं जनेन ॥ १२ ॥

गवलेति । 'गवलं माहिषं शृङ्गम्' इत्यमरः । तद्वदसितकान्ति कृष्णवर्णं मध्ये स्थिता घोरा भीमा आयता च बाहुदण्डो यस्य नासिकेव यस्मिन् तत्तथोक्तम् । कुपितस्यान्तकस्य मृत्योरुन्नतं यद्भ्रूयुगं तद्वद्भीमा आकृतिर्यस्य तत्तस्य चैद्यस्य कार्म्मुकम् । जनेन ददृशे दृष्टं समयविस्मयमिति भावः । उपमालङ्कारः ॥ १२ ॥

तडिदुज्ज्वलजातरूपपुंखैः खमयःश्याममुखैरभिध्वनद्भिः ।
जलदैरिव रंहसा पतद्भिः पिदधे संहतिशालिभिः शरौघैः ॥ १३ ॥

तडिदिति । तडिद्वदुज्ज्वला दीप्ता जातरूपस्य हेम्नः पुंखा कर्त्तर्य्यो येषां तैः । अयोवत् श्याममुखैः श्यामाग्रैरभिध्वनद्भिर्ध्वनिभिः स्वनत्पक्षैर्गर्जद्भिश्च रंहसा वेगेन पतद्भिर्धावद्भिः संहतिशालिभिः सङ्घवाहिभिः शरौघैर्जलदैरिव खमाकाशं पिदधे पिहितम् । कर्म्मणि लिट् । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यपेरकारलोपः । उपमालङ्कारः ॥ १३ ॥

शितशल्यमुखावदीर्णमेघक्षरदम्भःस्फुटतीव्रवेदनानाम् ।
स्रवदश्रुततीव चक्रवालं ककुभामौर्णविषुः सुवर्णपुंखाः ॥ १४ ॥

शितेति । सुवर्णपुंखाः सुवर्णकर्त्तरिकाः शराः शितैर्निशितैः शल्यमुखैः फलाग्रैः अवदीर्णा अवभिन्ना ये मेघास्तेभ्यः क्षरता स्रवता अम्भसा स्फुटा व्यक्ता तीव्रा वेदना यासां तासां ककुभां सम्बन्धि स्रवन्ती अश्रुततिरश्रुसन्ततिर्यस्य तदिव शरप्रहारवेदनया रुदद्दिव स्थितमित्युत्प्रेक्षा । चक्रवालं मण्डलमौर्णविषुः आच्छादयामासुः । ऊर्णोतेर्लुङीडागमे तस्य "विभाषोर्णोः" इति ङित्वाभावपक्षे "ऊर्णोतेर्विभाषा" इति वृद्धिविकल्पात्पक्षे गुणः । अजादित्वात् । "आटश्च" इति वृद्धिः ॥ १४ ॥

अमनोरमतां यती जनस्य क्षणमालोकपथान्नभःसदां वा ।
रुरुधे पिहिताहिमद्युतिर्द्यौर्विशिखैरन्तरिता च्युता धरित्री॥१५॥

**अमन इति** । विशिखैश्चैद्यबाणैः कर्तृभि । पिहिता हिमद्युतिस्तिरोहितार्का । अत एवामनोरमयतां यती प्राप्नुवती । इणः शतरि "उगितश्च" इति ङीप्। द्यौराकाश जनस्य भौमलोकस्य आलोकपथात् दृष्टिमार्ग्गात् क्षणं रुरुधे रुद्धा । रुधे कर्म्मणि लिट् । अत्र पथो रोधापायत्वात् 'ध्रुवमपायेऽपादानम्' इति अपादानत्वेन पञ्चमी। तथान्तरिता च्युता तिरोहिता नष्टा अत एवामनोरमता यती धरित्री नभःसदा वा आलोकपथात् रुरुधे वाकारो जनसमुच्चयार्थः । अत्र द्युधरित्र्योः प्रकृतयोरेव रोधाख्यतुल्यधर्म्मयोगात्तुल्ययोगिताभेदौ ताभ्यामेव जनस्य नभःसदा यथासंख्यान्वयाद्यथासख्यालङ्कार. सापेक्षतया सङ्कीर्य्यते ॥ १५ ॥

**विनिवारितभानुतापमेकं सकलस्यापि मुरद्विषो बलस्य ।**
**शरजालमयं समं समन्तादुरु सद्मेव नराधिपेन तेने ॥ १६ ॥**

**विनिवारितेति** । नराधिपेन सकलस्यापि मुरद्विषो हरेर्बलस्य सैन्यस्य विनिवारितो भानुतापो येन तदेकमद्वितीय शरजालमय बाणवृन्दात्मकम् उरु महत्सद्मेव सदनमिवेत्युत्प्रेक्षा । सम युगपत्समन्तात्तेने कृतमित्यर्थः । तनोते. कर्म्मणि लिट् ॥ १६ ॥

**इति चेदिमहीभृता तदानीं तदनीकं दनुसूनुसूदनस्य ।**
**वयसामिव चक्रमक्रियाकं परितोऽरोधि विपाटपञ्जरेण ॥ १७ ॥**

**इतीति** । इतीत्थं चेदिमहीभृता चैद्येन तदानीं तत्काले दनुसूनुसूदनस्य दानवान्तकस्य हरेस्तदनीक बलम् । 'वरूथिनी बल सैन्यं चक्र चानीकमस्त्रियाम्' इत्यमरः । वयसा चक्र पक्षिसघ इव अक्रियाक निश्चेष्ट यथा तथा विपाटयन्तीति विपाटाः शराः । पचाद्यच् । तैरेव पञ्जरेण परितः सर्वतः अरोधि रुद्धम् । रुधेः कर्म्मणि लुङ् । उपमा ॥ १७ ॥

**इषुवर्षमनेकमेकवीरस्तदरिप्रच्युतमच्युतः पृषत्कैः ।**
**अथ वादिकृतं प्रमाणमन्यैः प्रतिवादीव निराकरोत्प्रमाणैः ॥ १८ ॥**

**इष्विति** । अथानीकरोधनानन्तरम् एकवीरो महाशूरोऽच्युतो हरिररिप्रच्युत शत्रुगलित तदनेकमपरिमितमिषुवर्ष पृषत्कैर्बाणैः वादिकृत वादिना प्रयुक्त प्रमाणमनुमानम् अन्यैः प्रमाणैः प्रत्यनुमानैः प्रतिवादीव निराकरोत् । " इवेन समासो विभक्त्यलोपश्च" इति समासात् समासगता श्रौती पूर्णोपमा ॥ १८ ॥

**प्रतिकुञ्चितकूर्परेण तेन श्रवणोपान्तिकनीयमानगव्यम् ।**
**ध्वनति स्म धनुर्घनान्तमत्तप्रचुरक्रौञ्चरवानुकारमुच्चैः ॥ १९ ॥**

**प्रतीति** । प्रतिकुञ्चितकूर्परेण कुञ्चितकफोणिना । 'स्यात्कफोणिस्तु कूर्परः' इत्यमर । तेन हरिणा श्रवणोपान्तिके नीयमाना आकृष्यमाणा गव्या ज्या यस्य तत् । 'गव्यं गवां हिते गव्या ज्याया क्षारोदके त्रिषु' इति विश्वः । धनुः शार्ङ्गं घनान्ते शरदि ये मत्ताः प्रचुरा भूयः

क्रौञ्चाभिधा स्वमनुकरोतीति तदनुकार क्रौञ्चकूजितसदृशं यथा तथेत्यर्थः । "कर्म्मण्यण्" । उच्चैस्तार ध्वनति स्म दध्वान । "लट् स्मे" इति भूते लट् । स्वभावोक्त्युपमयोः सङ्करः ॥ १९ ॥

**उरसा विततेन पातितांसः स मयूराञ्चितमस्तकस्तदानीम् ।**
**क्षणमालिखितो नु सौष्ठवेन स्थिरपूर्वापरमुष्टिराबभौ वा ॥ २० ॥**

उरसेति । तदानीं धनुष्कर्षणसमये विततेन विस्तारितेनोरसा उपलक्षितः पातितांसो नमितस्कन्धः मयूरवदञ्चित मनोहर मस्तक यस्य सः उन्नमितमूर्द्धेत्यर्थः । स्थिरौ दृढौ पूर्वापरौ अग्रिमचरमौ मुष्टी गृहीतलस्तकमौर्वीकौ पाणी यस्य स हरिः सुष्ठु भावः सौष्ठव तेन सौष्ठवेन स्थानकपाटवेन हेतुना क्षणमालिखितो नु लिखित इव आबभौ वा बभासे किम् । नुशब्दो वितर्कार्थे 'नु पृच्छाया वितर्के च' इत्यमरः । वा शब्दोऽपि तादृश इत्युत्प्रेक्षालङ्कारोऽयम् ॥ २० ॥

**ध्वनतो नितरां रयेण गुर्व्यस्तडिदाकारचलद्गुणादसंख्याः ।**
**इषवो धनुषः सशब्दमाशु न्यपतन्नम्बुधरादिवाम्बुधाराः ॥ २१ ॥**

ध्वनत इति । ध्वनतो गर्जत. तडित इवाकारो यस्य सः तडिदाकारः चलनात्तेजोमयत्वाच्चाचिरप्रभाकारश्चलन् गुणो मौर्वी यस्य तस्मात् । 'मौर्वी ज्या शिञ्जिनी गुण ' इत्यमरः । धनुषः शार्ङ्गात् गुर्व्यो महत्य असंख्या अपरिमिता इषवोऽम्बुधरान्मेघात् अम्बुधारा इवाशु सशब्दं न्यपतन् । अत्रोपमानोपमेययोरेकलिङ्गतान्वयादिषुशब्दो द्विलिङ्गोऽपि स्त्रीलिङ्ग एव प्रयुक्त इति ज्ञापनाय गुर्व्य इति विशेषणम् ॥ २१ ॥

**शिखरोन्नतनिष्ठुरांसपीठः स्थगयन्नेकदिगन्तमायतान्तः ।**
**निरवर्णि सकृत्प्रसारितोऽस्य क्षितिभर्तेव चमूभिरेकबाहुः ॥२२॥**

शिखरेति । शिखर शृङ्गमिवोन्नतं निष्ठुरं चासपीठ यस्य स एकदिगन्तम् एकदिग्भागं स्थगयन् आयतान्तो द्राघिष्ठस्वरूपः । 'अन्तोऽस्त्र्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । सकृत्प्रसारितः, न तु पुनः पुनरिति स्थैर्योक्तिः । अस्य हरेरेकबाहुश्चापरोपितो वामबाहुरित्यर्थः । चमूभिः क्षितिभर्त्तेव भूधर इव निरवर्णि साधु निरीक्षित इत्यर्थः 'निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः ॥ २२ ॥

**तमकुण्ठमुखाः सुपर्णकेतोरिषवः क्षिप्तमिषुव्रजं परेण ।**
**विभिदामनयन्त कृत्यपक्षं नृपतेर्नेतुरिवायथार्थवर्णाः ॥ २३ ॥**

तमिति । अकुण्ठमुखा निशिताग्राः प्रगल्भगिरश्च सुपर्णकेतोर्गरुडध्वजस्य हरेरिषवः परेणारिणा क्षिप्त मुक्तम् इषुव्रजम् अयथार्थवर्णाः असत्याक्षरा कपटवचना उभयवेत्तार इत्यर्थ । 'कृत्यज्ञेयो यथा वर्णश्चारः प्रणिधिरेव च' इत्युत्पलमाला । नेतुर्नायकस्य जिगीषोः नृपतेः कृत्यपक्षम् अमात्यादिभेद्यवर्गमिव । ' कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभि ' इत्यमरः । विभिदा भेदम् । "षिद्भिदादिभ्योऽङ्" इत्यङ् । अनयन्त । "स्वरित" इत्यादिनात्मनेपदम् ॥२३॥

दयितैरिव खण्डिता मुरारेर्विशिखैः सम्मुखमुज्ज्वलाङ्कलेखैः ।
लघिमानमुपेयुषी पृथिव्यां विफला शत्रुशरावलिः पपात ॥ २४॥

**दयितैरिति** । उज्ज्वलाः स्फुटा अङ्केषु लेखाश्चित्रलेखा नखरेखाश्च येषा तैः मुरारेर्विशिखैर्दयितैः प्रियैरिव सम्मुखं समक्षमेव खण्डिता लूना अन्यत्रावमानिता अत एव विफला विशल्या अलब्धकामा च । अत एव लघिमानमगुरुत्वम् अल्पतां चोपेयुषी शत्रुशरावलिः पृथिव्यां पपात । अत्र प्रकृतशरावलिविशेषणसाम्यादप्रकृतखण्डितानायिकाप्रतीतेः समासोक्तिः । दयितैरिवेत्युपमा खण्डिताविशेषणान्तःपातित्वादङ्गमेव । अत एव तत्र विशेषणसाम्यं श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च भवतीत्युक्तं सर्वस्वकारैः । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति । साप्येव पृथिव्यां पततीति भावः ॥ २४ ॥

प्रमुखेऽभिहताश्च पत्रवाहाः प्रसभं माधवमुक्तवत्सदन्तैः ।
परिपूर्णतरं भुवो गतायाः परितः कातरवत्प्रतीपमीयुः ॥ २५ ॥

**प्रमुख इति** । पत्राणि वहन्तीति पत्रवाहाः पत्रिणश्चैद्यशराः । "कर्मण्यण्" । माधवमुक्तवत्सदन्तैः शौरिक्षिप्तशरैः प्रसभं बलात् प्रमुखे शल्याग्रे वदने चाभिहताः खण्डिताः सन्तः अत एव कातरैः त्रस्तैस्तुल्यं कातरवत् तुल्यार्थे वतिप्रत्ययः । परिपूर्णतरं गतायाः गन्तव्यं गतायाः इत्यर्थः । भुवोऽन्तरालभूमेः परितः प्रतीपं प्रतिकूलमीयुः प्रापुः प्रत्यागताश्च । माधवान्तिकात्प्रावृत्य जग्मुरित्यर्थः । चकारः पूर्वश्लोकोक्तपतनसमुच्चयार्थः । केचित् खण्डितास्तत्रैव पेतुः । केचिन्मुखेषु प्रतिहताः प्रतिनिवृत्ताः इत्यर्थः । कातरवदिति तद्धितगता श्रौती पूर्णोपमा ॥ २५ ॥

इतरेतरसन्निकर्षजन्मा फलसंघट्टविकीर्णविस्फुलिङ्गः ।
पटलानि लिहन्बलाहकानामपरेषु क्षणमज्ज्वलत्कृशानुः ॥२६॥

**इतरेतरेति** । इतरेतरसन्निकर्षजन्मा शराणां मिथः संश्लेषोत्थः । जन्मोत्तरपदत्वाद्व्यधिकरणोऽपि बहुव्रीहिरिष्यते । फलसंघट्टेन शल्यसंघट्टेन विकीर्णा विस्फुलिङ्गा यस्य सः कृशानुरग्निर्बलाहकानां वारि वहन्तीति बलाहकाः । पृषोदरादित्वात्साधुः । पटलानि लिहन् आस्वादयन् अपरेषु शत्रुषु । समरेष्विति पाठे समरेषु युद्धेषु क्षणमज्ज्वलत् अदीप्यत । अत्र शत्रुबलाहकानाम् अग्निदाहत्वादासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

शरदीव शरश्रिया विभिन्ने विभुना शत्रुशिलीमुखाभ्रजाले ।
विकसन्मुखवारिजाः प्रकामं बभुराशा इव यादवध्वजिन्यः ॥२७॥

**शरदीवेति** । विभुना देवेन कर्त्रा । शरश्रिया शरसम्पदा करणेन । शरदीव शत्रुशिलीमुखाः अभ्राणीव तेषां जाले विभिन्ने सति विकसन्ति मुखानि वारिजानि इव यासां ताः यादवध्वजिन्यः यदुसेना आशा दिश इव प्रकामं बभुः । अनेकैवेयमुपमा ॥ २७ ॥

**स दिवं समचिच्छदच्छरौघैः कृततिग्मद्युतिमण्डलापलापैः ।**
**दहशेऽथ च तस्य चापयष्टया इषुरेकैव जनैः सकृद्विसृष्टा ॥२८॥**

स इति । कृतस्तिग्मद्युतिमण्डलस्यापलापो निह्नवो यैस्तैराच्छादितार्कमण्डलैरित्यर्थः । शरौघैर्दिवमाकाशं न हरिः समचिच्छदत् छादयति स्म । छादेः "णौ चङ्युपधाया ह्रस्वः" "सन्वतः" इत्यभ्यासस्येत्वम् । युक्त चैतत् । लघुहस्तत्वादस्येत्याशयेनोत्प्रेक्ष्यते । अथास्मिन्नवसरे तस्य हरेश्चापयष्टया इषु. सकृदेकदा विसृष्टा मुक्ता एकैव जनैर्ददृशे दृष्टा च । इषूणा पुङ्खानुपुङ्खगमनाद्द्राघीयानेक एवेपुरेकदैव गच्छतीत्युत्प्रेक्षा। ईदृशलघुहस्तस्याकाशसछादन युक्तमिति भाव॥२८॥

**भवति स्फुटमागतो विपक्षान्न सपक्षोऽपि हि निर्वृतेर्विधाता ।**
**शिशुपालबलानि कृष्णमुक्तः सुतरां तेन ततापं तोमरौघः॥२९॥**

भवतीति । विपक्षाच्छत्रुकुलादागतः सपक्षः कङ्कादिपत्रवान् सुहृच्च निर्वृतेर्विधाता सुखकरो न भवति । हि यत स्फुटम् । तेन कारणेन कृष्णमुक्तस्तोमरौघः शिशुपालबलानि सुतरॉ ततापं ददाह । अतः शत्रुकुलादागत. स्वजनोऽपि न विश्वसनीय इत्यर्थः । सपक्षोऽप्यनिवर्त्तक इति विरोधेऽपिशब्द. विपक्षादागत इत्यविरोधाद्विरोधाभास ॥ २९ ॥

**गुरुवेगविराविभिः पतत्रैरिषवः काञ्चनपिङ्गलाङ्गभासः ।**
**विनतासुतवत्तलं भुवः स्म व्यथितभ्रान्तभुजङ्गमं विशन्ति ३०॥**

गुर्विवाति । गुरुवेगविराविभिः गुरुणा वेगेन विरुवन्ति ध्वनन्तीति तथोक्तै रौतेर्णिनिः शीघ्रवेगविरावद्भिः पतत्रैः पक्षैरुपलक्षिताः काञ्चनेन पुङ्खलिप्तेन पिङ्गलाङ्गभासः । अन्यत्र काञ्चनवदिति विग्रहः । इषवः शौरिशरा विनतासुतवद्वैनतेयैस्तुल्य व्यथिता भीषिताः अत एव भ्रान्ता मूढा भुजङ्गमा यस्मिन् तत्तथा भुवस्तल पाताल विशन्ति स्म । तद्धितगता श्रौती पूर्णोपमा पातालप्रवेशासम्बन्धातिशयोक्तया सङ्कीर्यते ॥ ३० ॥

**शतशः परुषाः पुरो विशङ्कं शिशुपालेन शिलीमुखाः प्रयुक्ताः ।**
**परमर्म्मभिदोऽपि दानवारेरपराधा इव न व्यथां वितेनुः॥३१॥**

शतश इति । शिशुपालेन पुरोऽग्रे विशङ्क निःशङ्कं शतशः प्रयुक्ताः क्षिप्ताः उच्चारिताश्च परुषा. निष्ठुराः परमर्म्मभिदोऽपि शिलीमुखाः शराः । शतशः अपराधाः पञ्चद[illegible]सर्गोक्ताः अभिशापा इव दानवारेर्हरेर्व्यथा दुःख न वितेनुः । खलापकारा महतामकिञ्चित्करा इति भावः । समासगतोपमा ॥ ३१ ॥

**विहिताद्भुतलोकसृष्टिमाय जयमिच्छन्किलमायया मुरारौ ।**
**भुवनक्षयकालयोगनिद्रं नृपतिः स्वापनमस्त्रमाजहार ॥ ३२ ॥**

विहितेति । नृपतिश्रेष्ठो विहिता अद्भुता लोकसृष्टिरेव माया यस्मिन् तस्मिन् भुवनक्षयकाले प्रलयकाले । न त्विदानीमिति भावः । उचिता योगनिद्रा यस्य तस्मिन् मुरारौ मायया जयमिच्छन् किल । न तु जेष्यतीति भाव । स्वापयतीति स्वापनम् अस्त्रमाजहार प्रयुक्तवानित्यर्थ । अनादि-मायाधारे सकलभुवनसृष्टिसंहारमहानाटकसूत्रधारे सर्वाद्भुतनिधाने सकलकलुषक्षपणपटुतराभिधाने पुराणैन्द्रजालिके भगवति हरावपि मायया जिगीषेत्यहो महानस्य व्यामोह इति भावः । अत्र हरिवि-विशेषणैस्तस्य दुर्जयत्वसिद्धेः काव्यलिङ्गम् ॥ ३२ ॥

**सलिलार्द्रवराहदेहनीलो विदधद्भास्करमर्थशून्यसंज्ञम् ।**
**प्रचलायतलोचनारविन्दं विदधे तद्बलमन्धमन्धकारः ॥ ३३ ॥**

सलिलेति । सलिलेनार्द्रो यो वराहदेहस्तद्वन्नीलः भास प्रकाश करोतीति भास्करः । "दिवा-विभा" इत्यादिना टप्रत्यय. । तमर्थशून्या भास्करत्वरूपप्रवृत्तिनिमित्तशून्या सञ्ज्ञा भास्कराख्या यस्य त विदधत् सौरलोकमभिभवन्नित्यर्थः । अन्ध करोतीति अन्धकारः स्वापनास्त्रप्रभवतमः । "कर्म्मण्यण्" । प्रचलानि निद्राघूर्णितानि आयतलोचनान्येवारविंदानि यस्मिन् कर्म्मणि तत्तथा । सूर्य्यतिरोधानेऽरविन्दमुकुलीभावस्यावश्यम्भावादिति भावः । तद्बलं हरिसैन्यम् अन्धमपश्य विदधे निद्रां प्राविशदित्यर्थः । अत्रान्धमन्धेति सकृद्व्यञ्जनयुग्मपौनरुक्त्यावृत्त्यनुप्रासभेद.।तस्य वराहदेहनील-लोचनारविन्देत्युपमारूपकयो. संसृष्टि ॥ ३३ ॥

**गुरवोऽपि निषद्य यन्निदद्रुर्द्धनुषि क्ष्मापतयो न वाच्यमेतत् ।**
**क्षयितापदि जाग्रतोऽपि नित्यं ननु तत्रैव हि तेऽभवन्निषण्णाः ॥ ३४ ॥**

गुरव इति । गुरवो धीराः क्ष्मापतयोऽपि धनुषि निषद्य शयित्वा निदद्रुः सुषुपुरिति यत एतद् धनुषि निद्राण वाच्य निन्द्य न भवति । कुतः । हि यस्मात्ते क्ष्मापतयो जाग्रतोऽपि प्रबुद्धा अपि जागर्तेः शतरि अस्य "जक्षित्यादय षट्" इत्यभ्यस्तसञ्ज्ञा "नाभ्यस्ताच्छतु" इति नुम्प्रति-षेधः । क्षयितापदि सर्वापन्निवारक इत्यर्थ । तत्रैव धनुषि नित्यं निषण्णा सश्रिता अभवन्।ननु । जागरेऽपि धनुरेकशरणाना स्वापे तदाश्रये न दोष इत्यर्थः । अत्र सदाधनुराश्रयवाक्यार्थस्यावा-च्यताहेतुत्वाद्वाक्यार्थहेतुक काव्यलिङ्गम् ॥ ३४ ॥

**श्लथतां व्रजतस्तथा परेषामगलद्धारणशक्तिमुज्झतः स्वाम् ।**
**सुगृहीतमपि प्रमादभाजां मनसः शास्त्रमिवास्त्रमग्रपाणेः ॥ ३५ ॥**

श्लथतामिति । तथेति पूर्वोक्तधनुराश्रयणसमुच्चये यथा तेषां धनुराश्रयण तथाऽन्येषां धनु-र्गलन चाभूदित्यर्थः । श्लथता प्रयत्नशैथिल्य व्रजतः भजतः स्वां निजा धारणशक्तिं वाहन-सामर्थ्यमुज्झतः त्यजत परेषा राज्ञाम् । अग्रश्चासौ पाणिश्चेति समानाधिकरणसमासः । 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्' इति वामनवचनात् । तस्मादग्रपाणेः सुगृहीतं सुष्ठु धृतमपि अन्यत्र स्वभ्यस्तमपि प्रमादभाजा गुणनिकावधानरहितानां मनसश्चित्तात्

शार्ङ्गं विद्येव अव्रमगलदभ्रस्यत् । निद्रापारवश्यादित्यर्थः । इवेन सह नित्यसमासात्समासगता श्रौती पूर्णोपमा ॥ ३५ ॥

उचितस्वपनोऽपि नीरराशौ स्वबलाम्भोनिधिमध्यगस्तदानीम् ।
भुवनत्रयकार्य्यजागरूकः स परं तत्र परः पुमानजागः ॥ ३६ ॥

उचितेति । नीरराशौ समुद्रे उचितस्वपनोऽपि परिचितनिद्रोऽपि तदानीं सर्वनिद्रावसरे स्वबलाम्भोनिधिमध्यग. स्वसेनासागरमध्यगत. । बलपाथोनिधीत्यपि पाठः । भुवनत्रयकार्य्ये त्रैलोक्यरक्षाविधौ जागरूकः प्रबुद्ध. । "जागुरूकः" इत्यूकप्रत्ययः । परः पुमान् परमपुरुषः पर केवल हरिरेवेत्यर्थः । 'परमव्ययमिच्छन्ति केवले' इति विश्वः । तत्र निद्राणलोके अजाग. जागर्त्ति स्म । सर्व्वान्धकारहारिणो नित्यप्रकाशचिदात्मन. तत्रापि कार्य्यग्रस्तस्य कुतो निद्रेति भाव· । जागर्तेर्लुङि तिप् अदादित्वाच्छपो लुकि सार्व्वधातुकगुणे रपरे 'हल्ङयाप्' इत्यादिना तिलोपे च रेफस्य विसर्जनीयः । अत्र समुद्रनिद्रालोस्तत्रैव जागरे विरोधपरिहारमुखेन कार्य्यजागरूकत्व परमपुरुषत्वयोर्विशेषणगत्या तात्त्विकजागरणहेतुकत्वाद्विरोधाभाससङ्कीर्णं काव्यलिङ्गम् ॥ ३६ ॥

अथ सूर्य्यरुचीव तस्य दृष्टावुदभूत्कौस्तुभदर्प्पणं गतायाम् ।
पटुधाम ततो न चाद्भुतं तद्विभुरिन्द्वर्कविलोचनः किलासौ ॥ ३७ ॥

अथेति । अथान्धकारव्याप्त्यनन्तर तस्य हरेर्दृष्टौ चक्षुषि तेजसीत्यर्थः । सूर्य्यरुचीव सूर्य्यतेजसीव । कौस्तुभो दर्पण इवेत्युपमितसमास· । सूर्य्यरुचीवेतिलिङ्गात् । त कौस्तुभदर्प्पणं गतायां प्रविष्टाया सत्या ततः कौस्तुभात् पटु सर्व्वान्धकारद्रावणे समर्थं धाम तेज उदभूत् उदगात् । तद्धामोद्भवन न चाद्भुतम् । कुतः । असौ विभुर्भगवान् अर्केन्दू विलोचने यस्य स किल खलु अतस्तच्चक्षुषोः सूर्य्यात्मकत्वात्तदभिहतात् कौस्तुभाद्दर्पणादेरिव धाम प्रादुर्भावो व्यज्यते । इत्यर्थ· । अतो वाक्यार्थहेतुक काव्यलिङ्गम् ॥ ३७ ॥

महतः प्रणतेष्विव प्रसादः स मणेरंशुचयः ककुम्मुखेषु ।
व्यकसद्विकसद्विलोचनेभ्यो ददालोकमनाविलं बलेभ्यः ॥ ३८ ॥

महत इति । स पूर्वोक्तो मणेः कौस्तुभस्यांशुचयः विकसन्ति उन्मीलन्ति विलोचनानि येषां तेभ्यो बलेभ्योऽनाविल प्रसन्नमालोक दर्शन तत्त्वज्ञानं· च ददत्प्रतियच्छन् महतो महात्मन. प्रसादोऽनुग्रह. प्रणतेषु भक्तेषु इव ककुम्मुखेषु ककुभामग्रेषु व्यकसदमूर्च्छत् । पूर्णोपमा ॥ ३८ ॥

प्रकृतिं प्रतिपादुकैश्च पादैश्चकृपे भानुमतः पुनः प्रसर्तुम् ।
तमसोऽभिभवादपास्य मूर्च्छामुदजीवत्सहसैव जीवलोकः ॥ ३९ ॥

प्रकृतिमिति । प्रकृति स्वभाव प्रतिपादुकैः प्रतिपद्यमानैः । "लषपतपद" इत्यादिना उकञ्प्रत्ययः, "न लोका" इत्यादिना षष्ठीप्रतिषेधः । भानुमतोऽशुमतः पादै रश्मिभिश्च पुनर्भूयः प्रसर्तुं चक्लृपे

शेके । ' क्लृपू सामर्थ्ये ' भावे लिट्, " कृपो रो लः " इति ऋकारस्थस्यापि रेफस्य लकारः । जीवलोक प्राणिवर्गश्च तमसोऽन्धकारस्याभिभवादभिभूतत्वादित्यर्थः । " कर्तृकर्म्मणो कृति " इति कर्म्मणि षष्ठी । सहसैव मूर्च्छामपास्य उदजीवत् उदश्वसीत् । अत्रोज्जीवनस्यार्ककरप्रसार-हेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३९ ॥

**घनसन्तमसैर्जवेन भूयो यदुयोधैर्युधि रेधिरे द्विषन्तः।**
**ननु वारिधरोपरोधमुक्तः सुतरामुत्तपते पतिः प्रभाणाम् ॥४०॥**

**घनेति** । घन सान्द्र सन्तमसमन्धकारो येषु । " अवसमन्धेभ्यस्तमस " इति समासा-न्तोऽच्प्रत्ययः । गतेति पाठे गत सन्तमसं येषा तैः यदुयोधैर्यादवभटैर्भूयः पुनरपि जवेन युधि द्विषन्तो रेधिरे जिहिंसिरे हता इत्यर्थ. । राध्यतेः कर्म्मणि लिट् । " राधो हिंसायाम् " इत्ये-त्वाभ्यासलोपौ । तथाहि । वारिध रोपरोधात् मेघापवरणात् मुक्तः प्रभाणा द्युतीनां पतिरर्कः सुतरामुत्तपत एव ननु प्रकाशत एव खलु । " उद्विभ्या तप. " इत्यात्मनेपदम् । अत्र यदुयो-धाना द्युतिपतेश्च वाक्यभेदेन प्रतिबिम्बकरणाद्दृष्टान्तालङ्कार । न चोपमानोपमेययोर्भिन्नवचन-त्वदोषः लोके चन्द्रार्कादीनामुपमानानामबहुत्वेऽपि चन्द्रानना इतिवत् प्रत्येकमौपम्यात् ॥ ४० ॥

**व्यवहार इवानृताभियोगं तिमिरं निर्जितवत्यथ प्रकाशे।**
**रिपुरुल्बणभीमभोगभाजां भुजगानां जननीं जजाप विद्याम् ॥४१॥**

**व्यवहार इति** । व्यवहारे न्यायवादे अनृताभियोग मिथ्याभिशसनमिव प्रकाशे कौस्तु-भतेजसि तिमिर प्रस्वापनान्धकार निर्जितवति निरस्तवति सति अथैतन्निरसनानन्तर रिपुश्चैद्य उल्वणान् महतो भीमांश्च भोगान् फणान् कायाश्च भजन्तीति तद्भाजः ' भोगः सुखे स्त्र्यादि-भृतावहेश्च फणकाययोः ' इत्यमरः । भुजगाना जननीमुत्पादिका विद्या मन्त्र जजाप जपति स्म । भुजगास्त्रमाजहारेत्यर्थः । उल्वणेत्यत्र कचिदुत्फणेति पाठ । उपमालङ्कार. ॥ ४१ ॥

**पृथुदर्विभृतस्ततः फणीन्द्रा विषमाशीभिरनारतं वमन्तः।**
**अभवन्युगपद्विलोलजिह्वायुगलीढोभयसृक्कभागमाविः ॥४२॥**

**पृथ्विवति** । ततो भुजगास्त्रप्रयोगानन्तर पृथुदर्विभृतः महाफणाधारिण इत्यर्थः । अत एव 'दर्वीकरो दीर्घपृष्ठः' इत्यत्र दर्वीरूपः फण एव करो हस्तो यस्य महापदाविति व्या-ख्यातम् । आशीभिर्दंष्ट्राभिः । ' आशी उरगदंष्ट्रायाम् ' इति वैजयन्ती । अनारतमश्रान्त विष वमन्तः उद्गिरन्तः फणीन्द्राः महासर्पाः विलोलैश्चञ्चलैर्जिह्वायुगैर्लीढावास्वादितावुभौ सृक्कभागा-वोष्ठप्रान्तदेशौ यस्मिन् कर्म्मणि तत्तथा । ' प्रान्तावोष्ठस्य सृक्किणी ' इत्यमरः । आवि-रभवत् । अत्र " उभादुदात्तो नित्यम् " इति नित्यग्रहणसामर्थ्यात् वृत्तिविषये उभशब्दस्य स्थानेऽप्युभयशब्दस्यैव प्रयोगः । उभयपुत्र इत्यादिप्रयोगसिद्धेरिति कथ्युक्तमस्माभिः प्रकटितं बहुधा सञ्जीविन्यां घण्टापथे सर्वङ्कषायां च तत्र तत्र । स्वभावोक्तिरलङ्कारः ॥ ४२ ॥

कृतकेशविडम्बनैर्विहायो विजयं तत्क्षणमिच्छुभिश्छलेन ।
अमृताग्रभुवः पुरेव पुच्छं वडवाभर्तुरवारि काद्रवेयैः ॥ ४३ ॥

कृतेति । कृतकेशविडम्बनैः कार्ष्ण्याद्विहितकेशानुकारैः छलेन कपटेन विजयमिच्छुभि-रभिलाषुकैः । "विन्दुरिच्छुः" इति उप्रत्ययान्तो निपातितः "न लोका" इत्यादिना षष्ठीप्रतिषेधः। विहाय आकाशं तत्क्षणं काद्रवेयैः कद्रूपुत्रैः फणीन्द्रैः । "स्त्रीभ्यो ढक्" इति ढक् । पुरा पूर्वमिव अमृताग्रभुवोऽमृताग्रजस्य वडवाभर्तुः उच्चैःश्रवसः पुच्छम् अवारि आवृतम् । वृत्तेः कर्मणि लुङ् । पुरा किल कद्रूविनतयोः कश्यपभार्ययोरुच्चैःश्रवसः पुच्छस्य कार्ष्ण्यश्वैत्यविवादे दासपणे काद्रवेयैः स्वमातुर्विजयाय गृहीतवालाकारैरुच्चैःश्रवसः पुच्छाच्छादनं चक्रे इति कथा पुराणादनुसन्धेया । उपमा ॥ ४३ ॥

दधतस्तनिमानमानुपूर्व्या बभुरक्षिश्रवसो मुखे विशालाः ।
भरतज्ञकविप्रणीतकाव्यग्रथिताङ्का इव नाटकप्रपञ्चाः ॥ ४४ ॥

दधत इति । मुखे मुखभागे मुखसन्धौ च विशालाः विस्तृता आनुपूर्व्या अनुक्रमेण तनिमानं तनुत्वं मुखादन्यत्र शरीरे उत्तरोत्तरं तनुत्वं दधतः अन्यत्र प्रतिमुखादिसन्धिषु गोपुच्छवत् संक्षिप्तत्वं दधानाः अक्षिश्रवसः सर्पाः भरतज्ञो नाट्यशास्त्रज्ञः।'भरतो नाट्यशास्त्रेऽपि'इति विश्वः । तेन कविना प्रणीतं प्रकल्पितं यत्काव्यं कविकर्म लक्षणया काव्यार्थः कथा वस्तु । ब्राह्मणादि-त्वात् ष्यञ् प्रत्ययः । तेन ग्रथिता गुम्फिताः अङ्काः परिच्छेदरूपाः अवान्तरसन्दर्भविशेषा येषु ते तथोक्ता नाटकप्रपञ्चा नाटकविस्तारा इव बभुरित्युपमा । प्रबन्धा इति क्वचित्पाठः । 'प्रत्यक्ष-नेतृचरितो विन्दुबीजपुरस्कृतः ।'अङ्को नानाप्रकारार्थसंविदन्तरसाश्रितः'इति अङ्कलक्षणम् 'मुखं प्रतिमुखं गर्भोऽवमर्श उपसंहृतिः' इति सन्धयः ॥ ४४ ॥

सविषश्वसनोद्धतोरुधूमव्यवधिम्लानमरीचिपन्नगानाम् ।
उपरागवतेव तिग्मभासा वपुरौदुम्बरमण्डलाभमूहे ॥ ४५ ॥

स इति । तिग्मभासा सूर्येण उपरागवता राहुग्रासवतेव राहुग्रस्तेनेवेत्यर्थः । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरवचनं ग्रासस्याप्युपलक्षणम् । पन्नगानां सविषैः श्वसनैः फूत्कारैः उद्धतेनोरुधूमेन यो व्यवधिस्तिरोधानं तेन म्लाना निष्प्रभा मरीचयो यस्य तत् । अत एवौदुम्बरमण्डलाभं ताम्रपिण्डसच्छायम् । 'अथ ताम्रकम् । शुल्वं म्लेच्छमुखद्व्यष्टवरि-ष्ठोदुम्बराणि च' इत्यमरः । वपुरूहे ऊढम् । वहेः कर्मणि लिट् । यजादित्वात्सम्प्र-सारणम् ॥ ४५ ॥

शिखिपिच्छकृतध्वजावचूडक्षणसाशङ्कविवर्तमानभोगाः ।
यमपाशवदाशुबन्धनाय न्यपतन्वृष्णिगणेषु लेलिहानाः ॥४६॥

शिखीति । पुनःपुनर्लेहनशीला. लेलिहानाः सर्पाः । लिहेर्यङ्लुगन्तात्ताच्छील्ये ५ श्प्रत्यये "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणः । लिहेर्लटः कानजिति वल्लभ. । तदानं भ्यासगुणानुपपत्तिः, भूतार्थासङ्गतिश्च । शिखिपिच्छैर्मयूरबर्हैः कृतेभ्यो ध्वजानामग्रचूडेभ्यः नर्क। र्गेभ्यः क्षणं साशङ्काः जीवन्मयूरभ्रान्त्या सभयाः अत एव विवर्त्तमानकाया. व्यावृत्तदेहा सन्तः आशु वृष्णिगणेषु यादवसैन्येषु बन्धनाय यमपाशैस्तुल्य यमपाशवत् कालपाशवदित्युपमा । न्यपतन् निपत्य ववन्धुरित्यर्थः ॥ ४६ ॥

पृथुवारिधिवीचिमण्डलान्तर्विलसत्फेनवितानपाण्डुराणि ॥
दधति स्म भुजङ्गमाङ्गमध्ये नवनिर्म्मोकरुचिं ध्वजांशुकानि ४७

पृथ्विति । भुजङ्गमाङ्गमध्ये पृथोर्वारिधिवीचिमण्डलस्यान्तर्मध्ये विलसन्तः फेना एव वितानपाण्डुरद्युतीनि शुभ्रवर्णानीत्युपमा । ध्वजांशुकानि नवनिर्म्मोकरुचिं नवकञ्चुकशोभा दधति स्म । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । निर्मोकरुचिमित्यत्रान्यधर्म्मस्यान्यत्रासम्बन्धेन निर्म्मोकस्येवेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धनिदर्शना फेनपाण्डुरोपमयाङ्गेन सङ्कीर्य्यते ॥४७॥

कृतमण्डलबन्धमुल्लसद्भिः शिरसि प्रत्युरसं विलम्बमानैः ।
व्यरुचज्जनता भुजङ्गभोगैर्दलितेन्दीवरमालभारिणीव ॥ ४८ ॥

कृतेति । जनता जनसमूहः । "ग्रामजन" इत्यादिना समूहिकस्तल् प्रत्ययः । शिरसि कृतो मण्डलबन्धो वलयीभावो यस्मिन् कर्म्मणि तत्तथा उल्लसद्भिः प्रत्युरसम् उरस्युरसि । "प्रतेरुरसः सप्तमीस्थात्" इति समासान्तोऽच्प्रत्ययः । विलम्बमानैर्विशेषेण लम्बमानैः भुजङ्गभोगैरहिकायैः दलितेन्दीवरमालभारिणी विकसितनीलोत्पलमालभारिणीवेत्युत्प्रेक्षा । व्यरुचत् व्यरोचिष्ट । "द्युद्भ्यो लुङि" इति विकल्पात्परस्मैपदम् ॥ ४८ ॥

परिवेष्टितमूर्त्तयश्च मूलादुरगैराशिरसः सरत्नपुष्पैः ।
दधुरायतवल्लिवेष्टितानामुपमानं मनुजा महीरुहाणाम् ॥ ४९ ॥

परिवेष्टितेति । किञ्चेति चार्थः । मूलात्पादमारभ्येत्यर्थः । ल्यब्लोपे पञ्चमी । आशिरसः शिरोऽन्तम् । "आङ्मर्यादा" इत्यादिना विकल्पादसमासः । रत्नैरेव पुष्पैः सह वर्त्तन्ते इति सरत्नपुष्पैः । "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । उरगैः परिवेष्टितमूर्त्तयो वेष्टिताङ्गाः मनुजा आयताभिर्वल्लीभिर्लताभिर्वेष्टितानां महीरुहाणाम् उपमानं सादृश्यं दधुरित्युपमा ॥ ४९॥

बहुलाञ्जनपङ्कपट्टनीलद्युतयो देहमितस्ततः श्रयन्तः ।
दधिरे फणिनस्तुरङ्गमेषु स्फुटपल्याणनिबद्धवर्ध्रलीलाम् ॥ ५० ॥

बहुलेति । बहुलाञ्जनस्य सान्द्रकज्जलस्य पङ्कपट्टः पङ्कवनस्तद्वन्नीलद्युतयः श्याममासः देहं शरीरमितस्ततः पुच्छपार्श्वादिस्थानेषु श्रयन्तो भजन्तः फणिनस्तुरङ्गमेषु स्फुटानि उज्ज्व-

स्तानि यानि पल्याणेषु पर्ययणेषु निबद्धानि वर्ध्राणि वरत्राः । 'वर्ध्रं त्रपुवरत्रयोः' इति विश्वः । तेषां लीला शोभा दधिरे दधुः । वर्ध्रलीलामित्यत्रासम्भवद्वस्तुसम्बन्धान्निदर्शनोक्तलक्षणा ९० ॥

**प्रसृतं रभसादयोऽभिनीला प्रतिपादं परितोऽभिवेष्टयन्ती ।**
**तनुरायतिशालिनी महाहेर्गजमन्दूरिव निश्चलं चकार ॥ ९१ ॥**

**प्रसृतमिति** । अयसा अयोवत् अभिनीला पादेषु प्रतिपादम् । विभक्त्यर्थेऽव्ययीभावः । अभिवेष्टयन्ती आयत्या आयतेन दैर्घ्येण शालते या सा आयतिशालिनी महाहेर्महोरगस्य तनुर्वपुरन्दूः शृंखलेव।'अन्दूस्तु शृङ्खलाया स्त्री'इति वैजयन्ती।रभसात्प्रसृत प्रचरन्त गज निश्चलं चकार।उपमा९१

**अथ सस्मितवीक्षितादवज्ञाचलितैकोन्नमितभ्रु माधवेन ।**
**निजकेतुशिरःश्रितस्सुपर्णादुदपप्तन्नयुतानि पक्षिराजाम् ॥ ९२ ॥**

**अथेति** । अथ नागपाशबन्धनानन्तर माधवेन कृष्णेन अवज्ञया अकिञ्चित्करत्वादनादरेण चलिता प्रेरिता एका उन्नमिता उत्क्षिप्ता च भ्रूर्यस्मिन् कर्म्मणि तत्तथा । "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वम् । सस्मितं चैद्यचापल्यदर्शनात्समन्दहास वीक्षितात् निजकेतुशिरश्श्रितः निजध्वजाग्रस्थितात् । श्रयतेः क्विप् । सुपर्णात् पक्षिणः राजः राजानः तेषां पक्षिराजां पक्षिराजानां गरुत्मताम् । "राजा राट् पार्थिवः" इत्यमरः । "अन्येभ्योऽपि दृश्यते" इति क्विप् । अयुतानि अयुतसङ्ख्या उदपप्तनुत्पेतुः । पुषादित्वाल्लुङि च्लेरङादेशः । "पतः पुम्" इति पुमागमः । उदभूवन्निति पाठे "भुवो वुक्" इति वुगागमः। माधवस्य सुपर्णवीक्षणावस्थोचितभ्रूविक्षेपादिचेष्टाविवरणात् स्वभावोक्ति तदुक्त दण्डिना । 'नानावस्थं पदार्थानां रूप साक्षाद्विवृण्वती । स्वभावोक्तिश्च जातिश्च' इति । 'जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम्' इति च ॥ ९२ ॥

**द्रुतहेमरुचः खगाः खगेन्द्रादलघूदीरितनादमुत्पतन्तः ।**
**क्षणमैक्षिषतोच्चकैश्चमूभिर्ज्वलतः सप्तरुचेरिव स्फुलिङ्गाः॥९३॥**

**द्रुतेति** । द्रुतहेमरुचः प्रतप्तकाञ्चनभासः इत्युपमा । अलघूच्चैरुदीरितनादम् उच्चरितघोष यथा तथा खगेन्द्रात् गरुत्मतः उत्पतन्त. उद्गच्छन्त खगाः सुपर्णाः ज्वलतः प्रज्वलतः सप्तरुचेः सप्तार्चिषोऽग्नेरुच्चकैरूर्ध्वं प्रसृताः स्फुलिङ्गा इव चमूभिः क्षणमैक्षिषत ईक्षिताः । ईक्षते. कर्म्मणि लुङ्, अत्रोपमयोः संकरः ॥ ९३ ॥

**उपमानमलाभि लोलपक्षक्षणविक्षिप्तमहाम्बुवाहमत्स्यैः ।**
**गगनार्णवमन्तरा सुमेरोः कुलजानां गरुडैरिलाधराणाम् ॥ ९४॥**

**उपमानमिति** । गगनमर्णव इव गगनार्णवस्तमन्तरा तस्य मध्ये इत्यर्थः । "अन्तरान्तरेण युक्ते" इति द्वितीया । अत्रार्णवस्यैकत्वेऽपि तदेकदेशापेक्षया भेदवत्त्वेन मध्यप्रतियोगित्वसम्भवान्न द्वितीयानुपपत्तिः । लोलै. पक्षैः क्षणाद्विक्षिप्ता महाम्बुवाहा मत्स्या इव यैस्तैर्गरुडैर्गरुत्मद्भिः सुमेरो. कुलजानां हेमाद्रिवंश्यानाम् अन्येषामहिरण्मयतया गरुडसाम्यासम्भवादित्यर्थः । इलाधराणां भूधराणाम् अर्णवांतश्चराणामित्यर्थः । 'गौरिला कुंभिनी क्षमा' इति कोषः । उपमान

सादृश्यमलाभि अलंभि। लभेः कर्मणि लुङि "विभाषा चिण्णमुलोः" इति विकल्पान्नुमभावः। अत्रेलाधराणामुपमानामिति व्यस्तोपमाया अन्याभ्यां समासगताभ्यामङ्गाङ्गिभावेन सङ्करः ॥ ९४ ॥

**पततां परितः परिस्फुरद्भिः परिपिङ्गीकृतदिङ्मुखैर्मयूखैः।**
**सुतरामभवद्दुरीक्ष्यबिम्बस्तपनस्तत्किरणैरिवात्मदर्शः ॥ ९५ ॥**

**पततामिति**। परिस्फुरद्भिः स्वविषयसङ्क्रमात्समन्तादुल्लसद्भिः अतएव परिपिङ्गीकृतानि सौवर्णत्वात्पिशङ्गीकृतानि दिङ्मुखानि यैस्तैः पततां पक्षिणः मयूखैः तपनः सूर्यस्तत्किरणैस्तपनकिरणैः सङ्क्रान्तैरिति भावः। आत्मा स्वरूपं दृश्यतेऽत्र इत्यात्मदर्शो दर्पण इव सुतरां दुरीक्ष्यबिम्बः अभवत्। स्वत एव दुर्दर्श इदानीमतिदुर्दर्शोऽभूदित्यर्थः। अत्र तपनस्य दुरीक्ष्यत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ९५

**दधुरम्बुधिमन्थनाद्रिमन्थभ्रमणायस्तफणीन्द्रपित्तजानाम्।**
**रुचमुल्लसमानवैनतेयद्युतिभिन्नाः फणभारिणो मणीनाम् ॥ ९६ ॥**

**दधुरिति**। उल्लसमानाभिर्दीप्यमानाभिर्वैनतेयानां द्युतिभिर्भिन्नाः सबलिताः फणभारिणः फणाभृतः अम्बुधिमन्थने समुद्रमन्थने अद्रेर्मन्दराद्रेरेव मन्थस्य मन्थनदण्डस्य भ्रमणेनायस्तस्य निष्पीडितस्य फणीन्द्रस्य वासुकेः पित्तात् पित्तधातोर्जातास्तज्जास्तेषाम् 'वैशाखमन्थमन्थानमन्थानो मन्थरदण्डके' इत्यमरः। मथेर्भौवादिकस्योदित्त्वात्सर्वत्र नुमागमः। तेषां मणीनां मरकतानां रुचं दधुः वैनतेयपीतियसभेदात् कृष्णोरगा मरकतच्छायामार्च्छन्नित्यर्थः। अत्रान्यस्यान्यधर्मायोगेन रुचमिवेति सादृश्याक्षेपादसंभवद्वस्तुसम्बन्धान्निदर्शनालङ्कारः ॥ ९६ ॥

**अभितः क्षुभिताम्बुराशिधीरध्वनिराकृष्टसमूलपादपौघः।**
**जनयन्नभवद्युगान्तशङ्कामनिलो नागविपक्षपक्षजन्मा ॥ ९७ ॥**

**अभित इति**। अभितः उभयतः क्षुभितो योऽम्बुराशिः उद्वेलाम्बुराशिस्तद्वद्धीरध्वनिर्गभीरध्वनिरित्युपमा। आकृष्टाः पाटिताः समूलाः पादपौघास्तरुसमूहाः येन सः। अत्र पादपोन्मूलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः। युगान्तशङ्कां जनयन् कल्पक्षयोत्प्रेक्षा जनयन्नित्यपि सैवातिशयोक्तिः। नागविपक्षपक्षजन्मा गरुडपक्षोद्भवोऽनिलोऽभवदुदभवदित्यर्थः ॥ ९७ ॥

**प्रचलत्पतगेन्द्रपत्रवातप्रसभोन्मूलितशैलदत्तमार्गैः।**
**भयविह्वलमाशु दन्दशूकैर्विवशैराविविशे स्वमेव धाम ॥ ९८ ॥**

**प्रचलदिति**। प्रचलतां पतगेन्द्राणां ये पत्त्रवातास्तैः प्रसभम् उन्मूलितैराकृष्टैरुत्पाटितैश्शैलैर्दत्तो मार्गो रन्ध्रं येभ्यस्तैः विवशैः परवशैर्निश्चेष्टैरित्यर्थः। गर्हितं दशन्ति भृशमिति दन्दशूकैः सर्पैः। 'दन्दशूको बिलेशयः' इत्यमरः। "लुपसदचर" इत्यादिना दंशेर्भावगर्हायां यङ्। "जपजभदहदशभञ्जपशां च" इति अभ्यासस्य नुगागमः। "यजजपदशां यङः" इति दशेर्यङन्ताद्गूकन्प्रत्ययः। भयेन विह्वलं विक्षिप्तं विचित्रं यथा तथा आशु स्वमेव धाम पातालमेव विविशे। तार्क्ष्यपत्रपवनोन्मूलितशैलरन्ध्रवर्त्मनैव पातालं प्रविष्टमित्यर्थः। विशेः कर्मणि लिट्। दन्दशूकानां रन्ध्रप्रवेशासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ९८ ॥

**खचरैः क्षयमक्षयेऽहिसैन्ये सुकृतैर्दुष्कृतवत्तदोपनीते ।**
**अगुणार्चिरिव ज्वलन्नुषाथो रिपुरौदर्चिषमाजुहाव मन्त्रम् ॥५९॥**

**खचरैरिति** । खेचरन्तीति खचरैर्वैनतेयैः । "चरेष्टः" "तत्पुरुषे कृति बहुलम्" इति लुग्विकल्पः । अक्षये अनन्ते अहिसैन्ये सर्पसैन्ये सुकृतैः हरिस्मरणादिपुण्यैर्दुष्कृतवद्ब्रह्महत्यादेनोवत् । "तत्र तस्येव" इति तत्रार्थे वतिप्रत्ययः । क्षयमुपनीते नाशं गमिते सति तदा तत्काले रुषा पौरुषवैफल्यरोषेण अगुणार्चिः सतार्चिरिव ज्वलन् दीप्यमानः असौ रिपुश्चैद्यः उदर्चिषः इममौदर्चिषमाग्नेयं मन्त्रम् आजुहाव आहूतवान् जजापेत्यर्थः । ह्वयतेर्लिटि "अभ्यस्तस्य च" इति द्विर्वचनात्प्रागेव सम्प्रसारणम् । दुष्कृतवदिति तद्धितगता श्रौती पूर्णोपमा ॥ ५९ ॥

**सहसा दधदुद्धताट्टहासश्रियमुत्त्रासितजन्तुना स्वनेन ।**
**विततायतहेतिबाहुरुच्चैरथ वेताल इवोत्पपात वह्निः ॥ ६० ॥**

**सहसेति** । अथाग्नेयास्त्राह्वानानन्तरम् उत्त्रासितजन्तुना भीषितप्राणिकेन स्वनेन ध्वनिना उद्धताट्टहासश्रियं महाट्टहाससम्पदं दधत् तेनैवाट्टहासवान् तत्तुल्यनादवानित्यर्थः । वितताः प्रसारिताः आयता दीर्घाः हेतयो ज्वाला बाहव इव हेतिबाहवो यस्य स वह्निर्वेतालो भूतविशेषः स इव सहसा झटिति उच्चैरूर्ध्वमुत्पपात उत्तस्थौ । उपमा ॥ ६० ॥

**चलितोद्धतधूमकेतनोऽसौ रभसादम्बररोहिरोहिताश्वः ।**
**द्रुतमारुतसारथिः शिखावान्कनकस्यन्दनसुन्दरश्चचाल ॥६१॥**

**चलितेति** । चलितश्चलश्च उद्धत उन्नतश्च धूम एव केतनं केतुर्यस्य सः रभसाद्वेगादम्बरोहिणो रोहिता वाहनमृगा अश्वा इव यस्य सः द्रुतमारुताः शीघ्रवाता एव सारथिर्यस्य सः कनकस्यन्दनसुन्दरः कनकरथवद्रम्य इत्युपमा । असौ शिखा ज्वाला अस्य सन्तीति शिखावान् आशुशुक्षणिश्चचाल ॥ ६१ ॥

**ज्वलदम्बरकोटरान्तरालं बहुलार्द्राम्बुदपत्त्रबद्धधूमम् ।**
**परिदीपितदीर्घकाष्ठमुच्चैस्तरुवद्विश्वमुवोष जातवेदाः ॥ ६२ ॥**

**ज्वलदिति** । जातं वेदो धनं यस्माज्जातवेदास्तनूनपात् । अम्बरं कोटरमिव तस्यान्तरालमभ्यन्तरं ज्वलद्यस्य तत् । बहुलाः सान्द्राः आर्द्राम्बुदाः पत्त्राणीव तेषु बद्धधूमम् । परिदीपिताः प्रज्वलिताः काष्ठा दिशः काष्ठानीव यस्य तदुच्चैरुन्नतं विश्वं जगत् तरुणा तुल्यं तरुवत् तरुमिवेत्यर्थः । तुल्यार्थे वतिप्रत्ययः । उवोष ददाह । 'उष दाहे' लिट् लघूपधगुणे पश्चाद्द्विर्भावः "अभ्यासस्यासवर्णे" इत्युवङादेशः "अनादिष्टादचः" इति गुणस्य स्थानिवत्त्वाभावात् । तरुवदिति स्पष्टोपमालिङ्गात् सर्वत्रोपमितसमासः ॥ ६२ ॥

**गुरुतापविशुष्यदम्बुशुभ्राः शणमालग्नकृशानुताम्रभासः ।**
**स्वमसारतया मसीभवन्तः पुनराकारमवापुरम्बुवाहाः ॥ ६३ ॥**

**गुर्विति** । गुरुतापेनातिदाहेन विशुष्यदम्बवः क्षीयमाणोदकाः अत एव शुभ्राश्चेति

विशेषणसमासः । ततः क्षणमालग्नेन कृशानुना ताम्रभासो रोहितवर्णा. अथासारतया जलशोषा-न्निःसारतया मसीभवन्तः अम्बुवाहाः पुनः स्वमाकार नीलरूपमवापुः । अत्र मेघाना मसीभावा-द्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

**ज्वलितानललोलपल्लवान्ताः स्फुरदष्टापदपत्रपीतभासः ।**
**क्षणमात्रभवामभावकाले सुतरामापुरिवायतिं पताकाः ॥ ६४ ॥**

**ज्वलितेति** । ज्वलितेन प्रज्वलता अनलेन अनलपातेन लोलाः पल्लवान्ता. अचलाग्राणि यासा ता' स्फुरद्भिर्दीप्यमानैरष्टापदपत्रैः कनककरचनाभि. पीतभास पिङ्गलवर्णाः पताका वैजयन्त्यः अभावकाले विनाशकाले क्षणमात्रभवा क्षणमात्रभाविनीम् । क्षणमात्रस्थायिनीमित्यर्थ । आयतिं दैर्घ्य सुतरामापुरित्यर्थः । प्रदीपवदिति भाव' । अष्टसु लोहेषु पदमस्येत्यष्टापदम् । " अष्टनः सञ्ज्ञायाम्" इति दीर्घ । 'रुक्म कार्त्तस्वर जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः ॥ ६४ ॥

**निखिलामिति कुर्वतश्चिराय द्रुतचामीकरचारुतामिव द्याम् ।**
**प्रतिघातसमर्थमस्त्रमग्नेरथमेघङ्करमस्मरन्मुरारिः ॥ ६५ ॥**

**निखिलामिति** । अथानन्तर मुरारि इतीत्थं निखिला द्यामाकाश द्रुतचामीकरचारुता प्रतप्तहेमकर्बुरामिवेत्युत्प्रेक्षा । चारुतामित्यत्र । चिराय कुर्वतोऽग्ने. प्रतिघातसमर्थं प्रशमनक्षम मेघान् करोतीति मेघङ्कर मेघजननम् । "मेघर्त्तिभयेषु कृञ" इति खच्प्रत्यय' । "अरुर्द्विषदजन्तस्य मुम्" इति मुमागम. । अस्त्र वारुणास्त्रमस्मरत् दध्यौ आजहार ॥ ६५ ॥

**चतुरम्बुधिगर्भधीरकुक्षेर्वपुषः सन्धिषु लीनसर्वसिन्धोः ।**
**उदगुः सलिलात्मनस्त्रिधाम्नो जलवाहावलयः शिरोरुहेभ्यः ॥ ६६ ॥**

**चतुरिति** । चत्वारोऽम्बुधय एव गर्भास्तेन धीरो गम्भीर. कुक्षिर्यस्य तस्य वपुष. सन्धिषु लीना. सर्वाः सिन्धवो नद्यो यस्य तस्य सलिलात्मनस्तोयात्मकस्य । त्रीणि धामानि स्थानानि भूर-दीनि सत्वादीनि वा यस्य तस्य त्रिधाम्नो हरे शिरोरुहेभ्यो जलवाहावलयः मेघपरम्परा उदगुः उद्बभूवु । 'इणो गा लुङि' इति गादेश । "गातिस्था" इत्यादिना सिचो लुक् । 'यस्य केशेषु जीमूता नद्य. सर्वाङ्गसन्धिषु । कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः' इत्यागमोक्त प्रमाणमिति भाव ६६

**ककुभः कृतनादमास्तृणन्तस्तिरयन्तः पटलानि भानुभासाम् ।**
**उदनंसिषुरभ्रमभ्रसंघाः सपदि श्यामलिमानमानयन्तः ॥ ६७ ॥**

**ककुभ इति** । कृतनादं कृतगर्जनं यथा तथा ककुभः आस्तृणन्त. आच्छादयन्त. । स्तृणातेर्लट' । शत्रादेशे "श्नाभ्यस्तयो रात" इत्याकारलोप. । भानुभासामर्कांशूनां पटलानि तिरयन्तस्तिरस्कुर्वन्तः तिर शब्दात् " तत्करोति" इति ण्यन्ताल्लटः शत्रादेश' । णाविष्ठवद्भावाट्टिलोपः । अभ्रमाकाश श्यामलिमानमानयन्तः श्यामलत्वं प्रापयन्तः अभ्रसंघाः मेघौघाः सपदि सद्य उदनसिषुरुत्पेतु' । उत्पूर्वान्नमतेर्लुङि "यमरमनमाता सक्च" इति सगिडागमौ "नेटि" इति वृद्धिप्रतिषेधः स्वभावोक्तिः ६७ ॥

**तपनीयनिकर्षराजिगौरस्फुरदुत्तालतडिच्छटाट्टहासम् ।**
**अनुबद्धसमुद्धताम्बुवाहध्वनिताडम्बरमम्बरं बभूव ॥ ६८ ॥**

**तपनीयेति** । तपनीयस्य हेम्नो निकर्षराजयः कषणलेखा इव गौर्य्यः पीताः। 'गौरोऽरुणे सिते पीते' इत्यमरः । स्फुरन्त्य उत्ताला उद्धतास्तडिच्छटा विद्युल्लता एवाट्टहासा यस्य तत्तथोक्तम् अनुबद्धोऽनुस्यूतः समुद्धतस्तारोऽम्बुवाहाना ध्वनिताडम्बरो गर्जिताडम्बरो यस्य तदम्बरं बभूव।तदाम्बुवाहैर्विद्युत्प्रभाभिर्गर्जिताडम्बरैश्चाट्टहासं कुर्वद्भिरिवाम्बरं बभावित्यर्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा॥६८॥

**सवितुः परिभावुकैर्मरीचीनचिराभ्यक्तमतङ्गजाङ्गभाभिः ।**
**जलदैरभितः स्फुरद्भिरुच्चैर्विदधे केतनतेव धूमकेतोः ॥६९॥**

**सवितुरिति** । सवितुर्मरीचीन् मयूखान् परिभावुकैस्तिरस्कुर्वद्भिः । "लषपत" इत्यादिना उकञ्प्रत्यये "न लोका" इत्यादिना षष्ठीप्रतिषेधः । अचिराभ्यक्तस्य सद्यः कृताभ्यङ्गस्य मतङ्गजाङ्गस्य नागदेहस्येव भासो येषां तैस्तथोक्तैः । "भोभगो" इत्यादिना रोर्यकारस्य "हलि सर्व्वेषाम्" इति लोपः । अभितः स्फुरद्भिर्जृम्भमाणैरुच्चैरुन्नतैर्जलदैर्धूमकेतोरग्नेः केतनता केतुत्वं विदधे इव विहितेव । धूमकेतोः केतुत्वं प्राप्तमित्यर्थः । उत्प्रेक्षालङ्कारः ॥ ६९ ॥

**ज्वलतः शमनाय चित्रभानोः प्रलयाप्लावमिवाभिदर्शयन्तः ।**
**ववृषुर्वृषनादिनो नदीनां प्रतटारोपितवारि वारिवाहाः ॥ ७० ॥**

**ज्वलत इति** । ज्वलतश्चित्रभानोरग्नेः प्रशमनाय प्रलये कल्पान्ते य आप्लावो महापूरः तमभिदर्शयन्त इवेत्युत्प्रेक्षा । वृषवद्वृषभवत् नदन्ति गर्ज्जन्तीति वृषनादिनः ।"कर्त्तर्य्युपमाने"इति णिनिः। अत एवोपमा । वारि वहन्तीति वारिवाहा मेघाः। "कर्म्मण्यण्"।नदीनां प्रतटेषु प्रतीरेषु आरोपितानि प्रापितानि वारीणि यस्मिन् कर्म्मणि तद्यथा तथा ववृषुः ।प्रलयकालमेघवद्वर्षन्नित्यर्थः ॥ ७० ॥

**मधुरैरपि भूयसा स मेध्यैः प्रथमं प्रत्युत वारिभिर्दिदीपे ।**
**पवमानसखस्ततः क्रमेण प्रणयक्रोध इवाशमद्विवादैः ॥७१॥**

**मधुरैरिति** । इतीत्थं पवत इति पवमानो वायुः । "पूङ्यजोः शानन्" तस्य सखा पवमानखः अग्निः । "राजाहःसखिभ्यष्टच्" मैत्रीमात्रविवक्षायामयं निर्देशः स्वसहकारिणि मैत्रीति नियमात् । सहकारित्वाविवक्षाया वैपरीत्यात् । बहुव्रीहौ तु न समासान्तः । स्वामी तु 'रोहिताश्वो वायुसखः' इति असमासान्तपाठेन बहुव्रीहिमाह । अत्रापि तथा पाठे न कश्चिदुपद्रवः । सोऽग्निः मधुरैः प्रियैरपि विवादैर्विविधवाक्यैः प्रणयक्रोधः प्रणयप्रयुक्तकोप इव मधुरैः स्वादुभिः अनुद्दीपकैरित्यर्थः । मेध्यैर्मेघभवैः । "दिगादिभ्यो यत्" । वारिभिः प्रथमं वैपरीत्येनापि प्रत्युतेति 'वैपरीत्ये' इति गणव्याख्याने । भूयसात्यन्तं भृशमित्यर्थः । दिदीपे प्रजज्वाल । ततः क्रमेणाशमत् शान्तोऽभूत् । शाम्यतेर्लुङि पुषादित्वात् च्लेरङादेशः । जलाहतोऽग्निर्ज्वलितो नश्यति प्रणयकोपोऽपि प्रियैः भृशायित्वा शाम्यतीति प्रसिद्धम् । उपमा ॥ ७१ ॥

परितः प्रसभेन नीयमानः शरवर्षैरवसायमाश्रयाशः ।
प्रबलेषु कृती चकार विद्युद्व्यपदेशेन घनेष्वनुप्रवेशम् ॥ ७२ ॥

**परित इति** । परितः प्रसभेन बलात्कारेण शरवर्षैर्नीरसेकैः । 'शर नीरे शरो बाणे' इति विश्वः । अवसायमवसाद नीयमानः । कृती कुशलः आश्रयमश्नातीति आश्रयाशोऽग्निः । "कर्म्मण्यण्" । प्रबलेषु घनेषु मेघेषु विद्युद्व्यपदेशेन तडिच्छलेन अनुप्रवेश चकार । अस्ताग्निर्विद्युद्रूपेण मेघेष्वेव प्रविष्टः बलवताभिभूतस्य विदेशगमन तदनुप्रवेशो वेति नीतिरिति भावः । अत्र विशेषणसाम्यादप्रावप्रकृतदुर्बलत्वप्रतीतेः समासोक्तिः ॥ ७२ ॥

प्रयतः प्रशमं हुताशनस्य क्वचिदालक्ष्यत मुक्तमूलमर्चिः ।
बलभित्प्रहितायुधाभिघातात्त्रुटितं पत्त्रिपतेरिवैकपत्त्रम् ॥७३॥

**प्रयत इति** । प्रशम नाश प्रयत गच्छत । प्रेतीति प्रयन् तस्य प्रयतः।इणः शतरि यणादेशः । हुताशनस्याग्नेः सम्बन्धि मुक्तमूल त्यक्तमूल त्यक्ताश्रयमर्चिर्ज्वाला।'ज्वालभासोर्न पुस्यर्चिः' इत्यमरः । बलभिदा शक्रेण प्रहितस्य प्रयुक्तस्यायुधस्य वज्रस्याभिघातात् प्रहारात् त्रुटित छिन्नपत्त्रिपते. पक्षिराजस्य गरुत्मत एक पत्त्र पक्षमिव क्वचिदालक्ष्यत अदृश्यत इत्युपमा । पुरा मातृदास्यविमोकायामृतमाहरता गरुडेनेन्द्रप्रयुक्तवज्रगौरवादेक पत्त्रं त्यक्तमित्यागमः ॥ ७३ ॥

व्यगमन्सहसा दिशां मुखेभ्यः शमयित्वा शिखिनं घनाघनौघाः
उपकृत्य निसर्गतः परेषामुपरोधं न हि कुर्वते महान्तः॥७४॥

**व्यगमन्निति**।घनाघनौघा. वर्षुकाब्दसमूहाः'शक्रघातुकमत्तेभवर्षुकाब्दा घनाघना'इत्यमरः। ।शिखिनमग्निं शमयित्वा सहसा दिशा मुखेभ्यो व्यगमन्नपसस्रुः।गमेर्लुङि पुषादित्वात् च्लेरङादेशः।तथा हि महान्तो निसर्गतः स्वभावादेव परेषाम् उपकृत्य उपकार कृत्वा उपरोध नहि कुर्वते । महता निष्फलावस्थान परोपरोधायेति भावः । सामान्येन विशेषसमर्थनारूपोऽर्थान्तरन्यासः॥ ७४॥

कृतदाहमुदर्चिषः शिखाभिः परिषिक्तं मुहुरम्भसा नवेन ।
विगताम्बुधरव्रणं प्रपेदे गगनं तापितपायितासिलक्ष्मीम्॥७५॥

**कृतेति** । उदर्चिषोऽग्नेः शिखाभिः ज्वालाभिः कृतदाह विहिततपन ततो नवेनाम्भसा मुहुः परिषिक्त विगता अम्बुधरा एव व्रणा दोषा यस्य तद्गगनं सन्तापितस्ताप प्रापितः स चासौ पायितः पान कारितः पिबतेर्ण्यन्तात्कर्मणि क्तः । " शाच्छासाह्वाव्यावेपा युक् " इति युगागमः । तस्य तापितपायितस्य तप्तसिक्तस्यासेः खड्गस्य लक्ष्मीं प्रपेदे प्रापे इति निदर्शनालङ्कारः । अम्बुधरव्रणेति रूपकसङ्कीर्णः ॥ ७५ ॥

इति नरपतिरस्त्रं यद्यदाविश्चकार प्रकुपित इव रोगः क्षिप्रकारी विकारम् । भिषगिव गुरुदोषच्छेदिनोपक्रमेण क्रमविदथ मुरारिः प्रत्यहंस्तत्तदाशु ॥७६ ॥

इतीति । इतीत्थं क्षिप्रं करोतीति क्षिप्रकारी शीघ्रप्रयोक्ता अन्यत्र विकारकारी नरपतिश्चैद्यः प्रकुपितः प्रक्षुभितः सन् यद्यदस्त्रमाविश्चकार रोगो विकारमिव । अथ क्रमवित्परिपाटीवेदी मुरारिर्भिषग्वैद्य इव गुरुदोषच्छेदिना गुरुदोषप्रतिघातकेन दोषनिवर्त्तकेन चोपक्रमेणोपायेन प्रत्यस्त्रप्रयोगेणेत्यर्थः । अन्यत्र महौषधप्रयोगेण तत्तदस्त्रम् आशु शीघ्रं तद्विकारमिवेति भावः । प्रत्यहन् प्रतिजघान । हन्तेर्लङ्, अदादित्वाच्छपो लुक् " हल्ङ्या " इत्यदिना लोपे रूपम् । उपमा ॥ ७६ ॥

शुद्धिं गतैरपि परामृजुभिर्विदित्वा बाणैरजय्यमविघट्टितमर्म्मभिस्तम् ।
मर्म्मातिगैरनृजुभिर्नितरामशुद्धैर्वाक्सायकैरथ तुतोद तदा विपक्षः ॥ ७७ ॥

शुद्धिमिति । तदा तस्मिन् समये विपक्षोऽरिश्चैद्यः परामुत्कृष्टां शुद्धिं लोहशुद्धिं गतैर्ऋजुभिरप्यविघट्टितमर्मभिरस्पृष्टमर्मस्थानैः तं हारमजय्यं जेतुमशक्यम् " क्षय्यजय्यौ शक्यार्थे " इति निपातः । विदित्वाऽथास्मिन्नवसरे मर्म्माणि अतिगच्छन्तीति मर्म्मातिगैर्मर्मभेदिभिरनृजुभिर्वक्रैः नितरामशुद्धैरपवित्रैः वाच एव सायकास्तैः वाक्सायकैरिति रूपकम् । तुतोद व्यथयामास चक्रप्रयोगस्यायमुपोद्घात इति भावः । अत्र वाक्सायकानां प्रसिद्धसाधनव्यतिरेकोक्तेर्व्यतिरेकरूपकयोः सङ्करः । वसन्ततिलकावृत्तम् ॥ ७७ ॥

राहुस्त्रीस्तनयोरकारि सहसा येनाश्लथालिङ्गन-
व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा ।
तेनाक्रोशत एव तस्य मुरजित्तत्काललोलानल-
ज्वालापल्लवितेन मूर्द्धविकलं चक्रेण चक्रे वपुः ॥ ७८ ॥

राहिति । येन चक्रेण सहसा झटिति अश्लथो दृढो य आलिङ्गनव्यापारः स एव एको मुख्यः । 'एके मुख्यान्यकेवलाः' इत्यमरः । विनोदस्तत्र दुर्ललितयोर्लोलुपयो राहुस्त्रीस्तनयो राहुरमणीकुचयोः कार्कश्यलक्ष्मीः काठिन्यशोभा वृथा व्यर्था अकारि कृता । शिरोमात्रावशेषितस्य राहोरालिङ्गनसुखासम्भवादिति भावः । मुरजिद् हरिः तत्काले तस्मिन्समये लोलाभिश्चञ्चलाभिरनलज्वालाभिरग्निदीप्तिभिः । पल्लवितेन संजातपल्लवेन । तारकादित्वादितच् । तेन चक्रेण आक्रोशत एव शपमानस्यैव तस्य शिशुपालस्य वपुर्मूर्धविकलं शिरोहीनं चक्रे चकार । शिरश्चिच्छेदेत्यर्थः । कर्तरि लिट् । राहोः शिरो वपुर्विकलमकारि, अस्य तु वपुः शिरोविकलं कृतमिति तात्पर्यम् । अत्र चक्रवर्णनेऽप्रस्तुताद्राहुस्त्रीकुचकार्कश्यवर्णनात्प्रस्तुतत्वेन सम्बन्धस्तत्पर्यायोक्तमुच्यते इति ॥ ७८ ॥

श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-
र्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय ।
प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे ॥ ७९ ॥

इति श्रीशिशुपालवधे महाकाव्ये श्रीदत्तकसूनुश्रीमाघकविविरचिते शिशुपालवधो नाम विंशतितमः सर्गः ॥ २० ॥

श्रियेति । अथ शिरश्छेदानन्तरं श्रिया शोभया जुष्टं सेवितं दिव्यैर्दिवि भवैः सपटहरवैः सन्दुन्दुभिघोषैः पुष्पवर्षैरन्वितं क्षणम् ऋषिगणैः स्तूयमानं तथा चैद्यस्य वपुष्टः शरीरतः । पञ्चम्यास्तसिल् । निरीय निर्गत्य । 'इण् गतौ' इति धातोः समासेऽनञ्पूर्वे क्त्वो ल्यप् । प्रकाशेन आकाशे दिनकरकरानर्करश्मीन् विक्षिपत् उपेन्द्रस्येदमौपेन्द्रं वपुर्हरेर्विग्रहं विशत् प्रविशत् धाम शिशुपालतेजो विस्मिताक्षैर्विकसितनयनैर्नरेन्द्रैः राजन्यैः ईक्षांबभूवे ईक्षितम् । ईक्षतेः कर्मणि लिट् । "इजादेश्च गुरुमतोऽनृच्छः" इत्याम् । "कृञ्चानुप्रयुज्यते लिटि" इति भुवोऽनुप्रयोगः "भावकर्मणोः" इत्यात्मनेपदम् । अत्र भगवान्व्यासः—'ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशे नृपैः । उत्पपात यदा राजन् तदा तेजो विवेश च ॥ दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भा सदृशी सा स्याद्भासस्तस्य महात्मन ॥' इति । एतेन भगवद्वपुषोऽपि तदासक्तवचनसा ( ? ) तारक इत्यनुसंधेयम् । यदाह नारदः—'कामाद्गोप्यो भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । सबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं प्रभो' ॥ इति सूर्यसहस्राभिभाविनः शिशुपालतेजसो हरिशरीरप्रवेशवृत्तान्तस्यालौकिकस्याद्भुतस्य प्रत्यक्षलक्ष्यमाणत्वाद्भाविकालंकारः । तदुक्तम्—'विनापराधेन कृतार्थक ( ? ) विना भाविकं तदुदाहृतम्' इति । मेघविस्फूर्जिता वृत्तम् । 'रसर्त्वश्वैर्यमौ न्सररगुरुयुता मेघविस्फूर्जिता स्यात्' इति लक्षणात् ॥ ७९ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वंकषाख्ये विंशतितमः सर्गः समाप्तः ॥ २० ॥

---

अथ पञ्चभिः कविवंशवर्णनम् ।

सर्वाधिकारी सुकृताधिकारः श्रीधर्मनाभस्य बभूव राज्ञः ।
असक्तदृष्टिर्विरजाः सदैव देवोऽपरः सुप्रभदेवनामा ॥ १ ॥
काले मितं तथ्यमुदर्कपथ्यं तथागतस्येव जनः सुचेताः ।
विनानुरोधात्स्वहितेच्छयैव महीपतिर्यस्य वचश्चकार ॥ २ ॥
तस्याभवद्दत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः ।
यं वीक्ष्य वैयासमजातशत्रोर्वचो गुणग्राहि जनैः प्रतीये ॥ ३ ॥
सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन ।
यश्च द्वितीयं स्वयमद्वितीयमुख्यः सतां गौणमवाप नाम ॥ ४ ॥
श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्मलक्ष्मीपतेश्चरितकीर्तनचारु माघः ।
तस्यात्मजः सुकविकीर्तिदुराशयादः काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥ ५ ॥

इति शिशुपालवधमहाकाव्यं समाप्तम् ।

---

पुस्तक मिलनेका ठिकाना—

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बंबई.

गङ्गाविष्णु श्रीकृष्णदास, "लक्ष्मीवेंकटेश्वर" प्रेस-कल्याण, बम्बई.